## राजनिघण्टु, मङ्गलाचरण

श्रीकण्ठाचलमेखलापरिणमत्कुम्भीन्द्रबुद्ध्या रदप्रान्तोत्तम्भितसंभृताब्दगलितैः शीतैरपां शीकरैः ।
निर्वाणे मदसंज्वरे प्रमुदितस्तेनातपत्रश्रियं तन्वानेन निरन्तरं दिशतु वः श्रीविघ्नराजो मुदम् ॥ ं.१
कर्पूरक्षोदगौरं धृतकपिलजटं त्रीक्षणं चन्द्रमौलिं सौधं कुण्डं सुधांशुं वरयुतमभयं दोश्चतुष्के दधानम् ।
वामोत्सङ्गे वहन्तं विविधमणिगणालङ्कृतामुज्ज्वलाङ्गीं शर्वाणीं स्वानुरूपां तमनिशममृतेशाख्यमीशं स्मरामि ॥ ं.२
श्रीमन्महेशनलिनासननिर्जरेन्द्रास्तत्राश्विनावथ ततो त्रितनूद्भवश्च ।
धन्वन्तरिश्चरकसुश्रुतसूरिमुख्यास्तेऽप्यायुरागमकृतः कृतिनो जयन्तु ॥ ं.३
शम्भुं प्रणम्य शिरसा स्वगुरूनुपास्य पित्रोः पदाब्जयुगले प्रणिपत्य भक्त्या ।
विघ्नेशितारमधिगम्य सरस्वतीं च प्रारम्भि भैषजहिताय निघण्टुराजः ॥ ं.४

## राजनिघण्टु, ग्रन्थप्रस्तावना

धन्वन्तरीयमदनादिहलायुधादीन् विश्वप्रकाश्यमरकोषसशेषराजौ ।
आलोक्य लोकविदितांश्च विचिन्त्य शब्दान् द्रव्याभिधानगणसंग्रह एष सृष्टः ॥ .१
आयुःश्रुतीनामतुलोपकारकं धन्वन्तरिग्रन्थमतानुसारकम् ।
आचक्ष्महे लक्षणलक्ष्मधारकं नामोच्चयं सर्वरुजापसारकम् ॥ .२
निर्देशलक्षणपरीक्षणनिर्णयेन नानाविधौषधविचारपरायणो यः ।
सोऽधीत्य यत्सकलमेनमवैति सर्वं तस्मादयं जयति सर्वनिघण्टुराजः ॥ .३
नानाविधौषधिरसाह्वयवीर्यपाकप्रस्तावनिस्तरणपण्डितचेतनोऽपि ।
मुह्यत्यवश्यमनवेक्ष्य निघण्टुमेनं तस्मादयं विरचितो भिषजां हिताय ॥ .४
निघण्टुना विना वैद्यो विद्वान् व्याकरणं विना ।
अनभ्यासेन धानुष्कस्त्रयो हास्यस्य भाजनम् ॥ .५
नानादेशविशेषभाषितवशाद्यत्संस्कृतप्राकृतापभ्रंशादिकनाम्नि नैव गणना द्रव्योच्चयव्याहृतौ ।
तस्मादत्र तु यावतास्त्युपकृतिस्तावन्मया गृह्यते पाथोदैः परिपीयते किमखिलं तद्वारि वारां निधेः ॥ .६
आभीरगोपालपुलिन्दतापसाः पान्थास्तथान्येऽपि च वन्यपारगाः ।
परीक्ष्य तेभ्यो विविधोषधाभिधारसादिलक्ष्माणि ततः प्रयोजयेत् ॥ .७
नानाभिधेयमथ यत्र शिवासमङ्गाश्यामादिनाम निगमेषु निवेशितं यत् ।
प्रस्ताववीर्यरसयोगवशादमुष्य बुद्ध्या विमृश्य भिषजां च धृतिर्विधेया ॥ .८
नामानि क्वचिदिह रूढितः स्वभावात्देश्योक्त्या क्वचन च लाञ्छनोपमाभ्याम् ।
वीर्येण क्वचिदितराह्वयादिदेशात्द्रव्याणां ध्रुवमिति सप्तधोदितानि ॥ .९
अत्रौषधीनिवहनामगुणाभिधानप्रस्तावतस्तदुपयुक्ततयेतराणि ।
क्षेत्रावनीधरनदीनरतिर्यगादीन् व्याख्यागुणैरतिसविस्तरमीरितानि ॥ .१०
एकः कोऽपि सचेतसां यदि मुदे कल्पेत जल्पे गुणस्तत्रान्येऽपि विनार्थनां बहुमतिं सन्तः स्वयं तन्वते ।
अप्यार्द्रीकृतशैलसानुगशिलामापीय चान्द्रीं सुधामम्भोधिः कुमुदैर्दृशश्च जगतां नन्दन्ति केनार्दिताः ॥ .११
अप्रसिद्धाभिधं चात्र यदौषधमुदीरितम् ।
तस्याभिधाविवेकः स्यादेकार्थादिनिरूपणे ॥ .१२
रम्भाश्यामादिनाम्ना ये स्वर्गस्त्रीतरुणीति च ।
अर्था नानार्थतन्त्रोक्तास्त्यक्तास्तेऽस्मिन्नपार्थकाः ॥ .१३
व्यक्तिः कृतात्र कर्णाटमहाराष्ट्रीयभाषया ।
आन्ध्रलाटादिभाषास्तु ज्ञातव्यास्तद्द्वयाश्रयाः ॥ .१४
एतत्त्रिनेत्रगुणनीयगुणानुविद्धवर्णाढ्यवृत्तसितमौक्तिकवर्गसारम् ।
कण्ठे सतां सकलनिवृतिधामनामचिन्तामणिप्रकरदाम करोतु केलिम् ॥ .१५
अत्रानूपादिरस्मादवनिरथ गुडूचीशताह्वादिको द्वौ तत्प्रान्ते पर्पटादिस्तदुपरि पठितौ पिप्पलीमूलकादिः ।
शाल्मल्यादिः प्रभद्रादिकमनु करवीरादिराम्रादिरन्यस्तस्याग्रे चन्दनादिस्तदनु निगदितः कोमलः काञ्चनादिः ॥ .१६
पानीयः क्षीरशाल्यादिकमनु कथितो मासमानुष्यकादिः सिंहादिः स्याद्गदादिस्तदनु भवति सत्त्वाधिको मिश्रकोऽन्यः ।

एकार्थादिस्तदेतैस्त्रिकरपरिचितैः प्रातिभोन्मेषसर्गं वर्गैरासाद्य वैद्यो निजमतहृदये निस्तरां निश्चिनोतु ॥ .१७
काश्मीरेण कपर्दिपादकमलद्वंद्वार्चनोपार्जितश्रीसौभाग्ययशःप्रतापपदवी धाम्ना प्रतिष्ठापिता ।
सेयं श्रीनरसिंहनामविदुषो स्ववैद्यविद्यास्थितिः प्रीत्या प्राप्तसुवर्णराजिरचना चित्रोज्ज्वला पीठिका ॥ .१८
अन्यत्र विद्यमानत्वादुपयोगानवेक्षणात् ।
वृथा विस्तरभीत्या च नोक्तो गुणगणो मया ॥ .१९

नानाक्षौणीजनानाजलमृगसहितं निर्झरव्रातशीतं शैलाकीर्णं कनीयः कुररमुखखगालङ्कृतं ताम्रभूमि ।
बिभ्रद्व्रीह्यादिकं यत्स्थलमतिविपुलं नीरसं यत्त्वनुष्णं पित्तघ्नं श्लेष्मवातप्रदमुदररुजापामदं स्यादनूपम् ॥ १.१
तच्चोक्तकृत्स्ननिजलक्षणधारिभूरिच्छायावृतान्तरवहद्बहुवारिमुख्यम् ।
ईषत्प्रकाशसलिलं यदि मध्यमं ततेतच्च नातिबहलाम्बु भवेत्कनीयः ॥ १.२
यत्रानूपविपर्ययस्तनुतृणास्तीर्णा धरा धूसरा मुद्गव्रीहियवादिधान्यफलदा तीव्रोष्मवत्युत्तमा ।
प्रायः पित्तविवृद्धिरुद्धतबलाः स्युर्नीरजः प्राणिनो गावोऽजाश्च पयः क्षरन्ति बहु तत्कूपे जलं जाङ्गलम् ॥ १.३
एतच्च मुख्यमुदितं स्वगुणैः समग्रमल्पाल्पभूरुहयुतं यदि मध्यमं तत् ।
तच्चापि कूपखनने सुलभाम्बु यत्तज्ज्ञेयं कनीय इति जाङ्गलकं त्रिरूपम् ॥ १.४
लक्ष्मोन्मीलति यत्र किंचिदुभयोस्तज्जाङ्गलानूपयोर्गोधूमोल्वणयावनालविलसन्माषादिधान्योद्भवः ।
नानावर्णमशेषजन्तुसुखदं देशं बुधा मध्यमं दोषोद्भूतिविकोपशान्तिसहितं साधारणं तं विदुः ॥ १.५
तच्च साधारणं द्वेधानूपजाङ्गलयोः परम् ।
यत्र यत्र गुणाधिक्यं तत्र तस्य गुणं भजेत् ॥ १.६
मुख्यं तद्देशवैषम्यान्नास्ति साधारणं क्वचित् ।
सूक्ष्मत्वाल्लक्ष्म तत्त्वस्य तद्विधैर्वेदमिष्यते ॥ १.७
क्षेत्रभेदं प्रवक्ष्यामि शिवेनाख्यातमञ्जसा ।
ब्राह्मं क्षात्रं च वैश्यीयं शौद्रं चेति यथाक्रमात् ॥ १.८
तत्र क्षेत्रे ब्रह्मभूमीरुहाढ्यं वारिस्फारं यत्कुशाङ्कूरकीर्णम् ।
रम्यं यच्च श्वेतमृत्स्नासमेतं तद्व्याचष्टे ब्राह्ममित्यष्टमूर्तिः ॥ १.९
ताम्रभूमिवलयं विभूधरं यन्मृगेन्द्रमुखसंकुलं कुलम् ।
घोरघोषि खदिरादिदुर्गमं क्षात्रमेतदुदितं पिनाकिना ॥ १.१०
शातकुम्भनिभभूमिभास्वरं स्वर्णरेणुनिचितं विधानवत् ।
सिद्धकिंनरसुपर्वसेवितं वैश्यमाख्यदिदमिन्दुशेखरः ॥ १.११
श्यामस्थलाढ्यं बहुशस्यभूतिदं लसत्तृणैर्बब्बुलवृक्षवृद्धिदम् ।
धान्योद्भवैः कर्षकलोकहर्षदं जगाद शौद्रं जगतौ वृषध्वजः ॥ १.१२
द्रव्यं क्षेत्रादुदितमनघं ब्राह्म तत्सिद्धिदायि क्षत्रादुत्थं वलिपलितजिद्विश्वरोगापहारि ।
वैश्याज्जातं प्रभवतितरां धातुलोहादिसिद्धौ शौद्रादेतज्जनितमखिलव्याधिविद्रावकं द्राक् ॥ १.१३
ब्रह्मा शक्रः किंनरेशस्तथा भूरित्येतेषां देवताः स्युः क्रमेण ।
प्रोक्तास्तत्र प्रागुमावल्लभेन प्रत्येकं ते पञ्च भूतानि वक्ष्ये ॥ १.१४
पीतस्फुरद्वलयशर्करिलाश्मरम्यं पीतं यदुत्तममृगं चतुरस्रभूतम् ।
प्रायश्च पीतकुसुमान्वितवीरुदादि तत्पार्थिवं कठिनमुद्यदशेषतस्तु ॥ १.१५
अर्धचन्द्राकृतिश्वेतं कमलाभं दृषच्चितम् ।
नदीनदजलाकीर्णमाप्यं तत्क्षेत्रमुच्यते ॥ १.१६
खदिरादिद्रुमाकीर्णं भूरिचित्रकवेणुकम् ।
त्रिकोणं रक्तपाषाणं क्षेत्रं तैजसमुत्तमम् ॥ १.१७
धूम्रस्थलं धूम्रदृषत्परीतं षट्कोणकं तूर्णमृगावकीर्णम् ।
शाकैस्तृणैरञ्चितरूक्षवृक्षकं प्रकारमेतत्खलु वायवीयम् ॥ १.१८
नानावर्णं वर्तुलं तत्प्रशस्तं प्रायः शुभ्रं पर्वताकीर्णमुच्चैः ।
यच्च स्थानं पावनं देवतानां प्राह क्षेत्रं त्रीक्षणस्त्वान्तरिक्षम् ॥ १.१९
द्रव्यं व्याधिहरं बलातिशयकृत्स्वादु स्थिरं पार्थिवं स्यादाप्यं कटुकं कषायमखिलं शीतं च पित्तापहम् ।
यत्तिक्तं लवणं च दीप्यमरुजिच्चोष्णं च तत्तैजसं वायव्यं तु हिमोष्णमम्लमबलं स्यान्नाभसं नीरसम् ॥ १.२०
ब्रह्मा विष्णुश्च रुद्रोऽस्मादीश्वरोऽथ सदाशिवः ।
इत्येताः कमतः पञ्च क्षेत्रभूताधिदेवताः ॥ १.२१
जित्वा जवादजरसैन्यमिहाजहार वीरः पुरा युधि सुधाकलशं गरुत्मान् ।
कीर्णैस्तदा भुवि सुधाशकलैः किलासीद्वृक्षादिकं सकलमस्य सुधांशुरीशः ॥ १.२२

तत्रोत्पन्नास्तूत्तमे क्षेत्रभागे विप्रीयादौ विप्रुषो यत्र यत्र ।
क्षौणीजादिद्रव्यभूयं प्रपन्नास्तास्ताः संज्ञा बिभ्रते तत्र भूयः ॥ १.२३
एवं क्षेत्रानुगुण्येन तज्जा विप्रादिवर्णिनः ।
यदि वा लक्षणं वक्ष्याम्यमोहाय मनीषिणाम् ॥ १.२४
किसलयकुसुमे प्रकाण्डशाखादिषु विशदेषु वदन्ति विप्रमेतान् ।
नरपतिमतिलोहितेषु वैश्यं कनकनिभेषु सितेतरेषु शूद्रम् ॥ १.२५
विप्रादिजातिसम्भूतान् विप्रादिष्वेव योजयेत् ।
गुणाढ्यानपि वृक्षादीन् प्रातिलोम्यं न चाचरेत् ॥ १.२६
विप्रो विप्राद्येषु वर्णेषु राजा राजन्यादौ वैश्यमुख्येषु वैश्यः ।
शूद्रः शूद्राद्येषु शस्तं गुणाढ्यं द्रव्यं नैव प्रातिलोम्येन किंचित् ॥ १.२७
द्रव्यं यदङ्कूरजमाहुरार्यास्तत्ते पुनः पञ्चविधं वदन्ति ।
वनस्पतिश्चापि स एव वानस्पत्यः क्षुपो वीरुदथौषधीश्च ॥ १.२८
ज्ञेयः सोऽत्र वनस्पतिः फलति यः पुष्पैर्विना तैः फलं वानस्पत्य इति स्मृतस्तनुरसौ ह्रस्वः क्षुपः कथ्यते ।
या वेल्लत्यगमादिसंश्रयवशादेषा तु वल्ली मता शाल्यादिः पुनरोषधिः फलपरीपाकावसानान्विता ॥ १.२९
स्त्रीपुंनपुंसकत्वेन त्रैविध्यं स्थावरेष्वपि ।
शृणु वक्ष्यामि तल्लक्ष्म व्यक्तमत्र यथाक्रमम् ॥ १.३०
इक्षुवेणुतरुवीरुदादयः स्कन्धकाण्डफलपुष्पपल्लवैः ।
स्निग्धदीर्घतनुतामनोरमास्ताः स्त्रियः खलु मता विपश्चिताम् ॥ १.३१
यत्र पुष्पप्रवालादि नातिदीर्घं न चाल्पकम् ।
स्थूलं परुषमित्येष पुमानुक्तो मनीषिभिः ॥ १.३२
स्त्रीपुंसयोर्यत्र विभाति लक्ष्म द्वयोरपि स्कन्धफलादिकेषु ।
संदेहदं नैकतरावधारि नपुंसकं तद्विबुधा वदन्ति ॥ १.३३
द्रव्यं पुमान् स्यादखिलस्य जन्तोरारोग्यदं तद्बलवर्धनं च ।
स्त्री दुर्बला स्वल्पगुणा गुणाढ्या स्त्रीष्वेव न क्वापि नपुंसकः स्यात् ॥ १.३४
यदि स्त्रियः स्त्रीषु कृता गुणाढ्याः क्लीबानि तु क्लीबशरीरभाजाम् ।
सदा च सर्वत्र पुमान् प्रयुक्तौ गुणावहश्चेति च केचिदाहुः ॥ १.३५
क्षुत्पिपासा च निद्रा च वृक्षादिष्वपि लक्ष्यते ।
मृज्जलादानतस्त्वाद्ये पर्णसंकोचितान्तिमा ॥ १.३६
यत्काठिन्ये सा क्षितिर्योद्भवोऽम्भस्तेजस्तूष्मा वर्धते यत्स वातः ।
यद्यच्छिद्रं तन्नभः स्थावराणामित्येतेषां पञ्चभूतात्मकत्वम् ॥ १.३७
इत्थं देशगुणस्वरूपकथनप्रक्रान्तकान्तारजक्षेत्रद्रव्यगुणान्वयक्रममिमं वर्गं पठित्वा नरः ।
प्राप्नोत्याशु भिषक्प्रयोगविषयप्रावीण्यपारीणताहंकुर्वाणसुपर्वसंसदगदङ्कारक्रियाकौशलम् ॥ १.३८
असूत सुतमीश्वरः श्रुतयशा यमष्टादशप्रभेदविधवाङ्मयाम्बुनिधिपारपारीणधीः ।
अमुष्य नृहरीशितुः कृतिवरस्य वर्गः कृतावसावगमदादिमः सदभिधानचूडामणौ ॥ १.३९

राजनिघण्टु, धरण्यादिवर्गः
अथ धरणिधरित्रीभूतधात्रीधराभूक्षितिमहिधरणीडाक्ष्मावनीमेदिनीज्या ।
अवनिरुदधिवस्त्रा गौः क्षमा क्षौणिरुर्वी कुरपि वसुमतीरा काश्यपी रत्नगर्भा ॥ २.१
क्षमादिमा भूमिरिला वसुन्धरा वरा च धात्री वसुधाचलोर्वरा ।
विश्वम्भराद्या जगती क्षिती रसा पृथ्वी च गोत्रा पृथिवी पृथुर्मही ॥ २.२
क्षौणी सर्वसहानन्ता भूतमाता च निश्चला ।
भूमी वीजप्रसूः श्यामा क्रोडकान्ता च कीर्तिता ॥ २.३
सा भूमिरुर्वराख्या या सर्वशस्योद्भवप्रदा ।
समस्तवस्तूद्भवनादुर्वरा नाम भूरियम् ॥ २.४
मृन्मृत्तिका प्रशस्ता सा मृत्सा मृत्स्नेति चेष्यते ॥ २.५
क्षारा मृदूषरो देशस्तद्वानिरणमूषरम् ।
खिलमप्रहतं प्राहुर्धन्वा तु मरुरुच्यते ॥ २.६
मरुप्रायस्तु यो देशः स चोक्तो जाङ्गलाभिधः ।
कृष्णमृत्कृष्णभूमिः स्यात्पाण्डुभूमिस्तु पाण्डुमृत् ॥ २.७
स शार्करः शार्करिलो देशो यः शर्करान्वितः ।
सैकतः स्यात्सिकतिलः सिकतावांश्च यो भवेत् ॥ २.८
देशो जनपदो नीवृद्विषयश्चोपवर्त्तनम् ।
प्रदेशः स्थानमाख्या भूरवकाशः स्थितिः पदम् ॥ २.९
नद्यम्बुजैर्भृतो धान्यैर्नदीमात्रक उच्यते ।
वृष्ट्यम्बजैस्तु तैरेष देशः स्याद्देवमातृकः ॥ २.१०
नदीवृष्टिजलोद्भूतैर्नानाधान्यैः समावृतः ।
देशो द्वयानुगमनात्स द्वैमातृक उच्यते ॥ २.११
मुद्गादीनां क्षेत्रमुद्भूतिदं यत्तन्मौद्गीनं कोद्रवीणं तथान्यत् ।
व्रैहेयं स्यात्किंच शालेयमेवं बुद्धाणव्यञ्चाणवीनं च विद्यात् ॥ २.१२
अथ माष्यं माषीणं भङ्ग्यं भाङ्गीनमुम्यमौमीनम् ।
तिल्यं तैलीनं स्यादिति षष्टिक्यं च यव्यं च ॥ २.१३
शाकादेर्यत्र निष्पत्तिरेतत्स्याच्छाकशाकटम् ।
शाकशाकिनमित्येतत्तथा वास्तूकशाकटम् ॥ २.१४
अथ गिरिधरणीध्रगोत्रभूभृत्शिखरिशिलोच्चयशैलसानुमन्तः ।
क्षितिभृदगनगावनीधराद्रिस्थिरकुधराश्च धराधरो धरश्च ॥ २.१५
अहार्यः पर्वतो ग्रावा कटकी प्रस्थवानपि ।
शृङ्गी च वृक्षवांश्चेति शब्दाः शैलार्थवाचकाः ॥ २.१६
मध्यमस्तु नितम्बः स्यात्कटकं मेखला च सा ।
तटे तटी प्रपातश्च प्रस्थे स्नुः सानुसानुनी ॥ २.१७
शृङ्गं तु शिखरं कूटं कन्दरे कन्दरा दरी ।
विलं गुहा शिलासन्धिर्देवखातं च गह्वरम् ॥ २.१८
प्रत्यन्तगिरयः पादा गण्डशैलाश्च्युतोपलाः ।
आकरः खनिरित्युक्तो धातवो गैरिकादयः ॥ २.१९
ग्रावा प्रस्तरपाषाणौ दृषदश्मोपलः शिला ।
लोहानि विविधानि स्युरश्मसारादिसंज्ञया ॥ २.२०
काननं गहनं सत्रं कान्तारं विपिनं वनम् ।
अरण्यमटवी दावो दवश्च वनवाचकाः ॥ २.२१
अन्यदुद्यानमाक्रीडो यत्र क्रीडन्ति रागिणः ।
नृपालयेषु प्रमदवनमन्तःपुरोचितम् ॥ २.२२
महावनमरण्यानी महारण्यं महाटवी ।

अथोपवनमारामः पुरप्रान्ते वनं तु यत् ॥ २.२३
कुजः क्षितिरुहोऽङ्घ्रिपः शिखरिपादपौ विष्टरः कुठस्तरुरनोकहः कुरुहभूरुहद्रुद्रुमाः ।
अगो नगवनस्पती विटपिशाखिभूजागमा महीजधरणीरुहक्षितिजवृक्षशालादयः ॥ २.२४
फलितः फलवानेष फलिनश्च फली तथा ।
फलेग्रहिरबन्ध्यो यः स्यादमोघफलोदयः ॥ २.२५
अथावकेशी बन्ध्योऽयं विफलो निष्फलोऽफलः ।
उक्तौ प्रागात्मना भिन्नौ वानस्पत्यवनस्पती ॥ २.२६
मूलं तु नेत्रं पादः स्यादङ्घ्रिश्चरणमित्यपि ।
उद्भेदस्त्वङ्कुरो ज्ञेयः प्ररोहोऽङ्कूर इत्यपि ॥ २.२७
अर्वाग्भागोऽस्य बुध्नः स्यात्नितम्बः सपृथुर्भवेत् ।
आस्कन्धात्त प्रकाण्डः स्यात्काण्डो दण्डश्च कथ्यते ॥ २.२८
स्कन्धप्रमाणास्य लतास्तु शाखाः स्कन्धोत्थशाखास्तु भवन्ति शालाः ।
जटाः शिरास्तस्य किलावरोहाः शाखा शिफा मज्जनि सारमाहुः ॥ २.२९
निष्कुटं कोटरं प्रोक्तं त्वचि वल्कं तु वल्कलम् ।
नवपुष्पाढ्यशाखाग्रे वल्लरी मञ्जरी तथा ॥ २.३०
पर्णं पत्रं दलं बर्हं पलाशं छदनं छदः ।
स्यात्पल्लवः किशलयः प्रबालः पल्लवं नवम् ॥ २.३१
विस्तारो विटपः प्रोक्तः प्राग्रं तु शिखरं शिरः ।
माढिः पर्णशिरा ज्ञेया वृन्तं प्रसवबन्धनम् ॥ २.३२
कुलक्षारकजालककलिकास्तु कुडमले कथिताः ।
कुसुमं सुमनः प्रसूनप्रसवसुमं सूनुफुल्लपुष्पं स्यात् ॥ २.३३
मकरन्दो मरन्दश्च मधु पुष्परसाह्वयम् ।
पौष्पं रजः परागः स्यान्मधुली धूलिका च सा ॥ २.३४
गुच्छो गुलुञ्छः स्तवको गुच्छकः कुसुमोच्चयः ।
समं परिमलामोदगन्धसौरभ्यसौरभम् ॥ २.३५
उज्जृम्भितमुज्जृम्भं स्मितमुन्मिषितं विनिद्रमुन्निद्रम् ।
उन्मीलितं विजृम्भितमुदबुद्धोद्भिदुरभिन्नमुद्भिन्नम् ॥ २.३६
विकसितहसितविकस्वरविकचव्याकोशफुल्लसम्फुल्लम् ।
स्फुटमुदितदलितदीर्णस्फुटितोत्फुल्लप्रफुल्लमेकार्थम् ॥ २.३७
निद्राणं मुद्रितं सुप्तं मिलितं मीलितं नतम् ।
निकूणितं सङ्कुचितं सनिद्रमलसं समम् ॥ २.३८
आहुस्तरूणां फलमत्र शस्यं तदाममुक्तं हि शलाटुसंज्ञम् ।
शुष्कं तु वानं प्रवदन्ति गुल्मस्तम्बौ प्रकाण्डैरहितो महीजः ॥ २.३९
उलपं गुल्मिनी वीरुल्लता वल्ली प्रतानिनी ।
व्रततिः प्रततिश्चैषा विस्तीर्णा वीरुदुच्यते ॥ २.४०
अथ वक्षामि नक्षत्रवृक्षानागमलक्षितान् ।
पूज्यानायुष्यदांश्चैव वर्द्धनात्पालनादपि ॥ २.४१
विषद्रुधात्रीतरुहेमदुग्धा जम्बूस्तथा खादिरकृष्णवंशाः ।
अश्वत्थनागौ च वटः पलाशः प्लक्षस्तथाम्बष्ठतरुः क्रमेण ॥ २.४२
बिल्वार्जुनौ चैव विकङ्कतोऽथ सकेसराः शम्बरसर्जवञ्जुलाः ।
सपानसार्काश्च शमीकदम्बास्तथाम्रनिम्बौ मधुकद्रुमः क्रमात् ॥ २.४३
अमी नक्षत्रदैवत्या वृक्षाः स्युः सप्तविंशतिः ।
अश्विन्यादिक्रमादेषामेषा नक्षत्रपद्धतिः ॥ २.४४
यस्त्वेतेषामात्मजन्मर्क्षभाजां मर्त्यः कुर्याद्वेषजादीन्मदान्धः ।
तस्यायुष्यं श्रीकलत्रं च पुत्रो नश्यत्येषा वर्धते वर्द्धनाद्यैः ॥ २.४५

आचार्योक्तौ स्फुटमथ बृहत्सुश्रुते नारदीये नारायण्यां क्वचिदपि तथान्यत्र तन्त्रान्तरेषु ।
ज्ञात्वापीह प्रथितभिषजा नातिदृष्टोपयोगं नैवास्माभिर्विशदितमिदं गौरवाद्ग्रन्थभीतेः ॥ २.४६
तालाद्या जातयः सर्वाः क्रमुकः केतकी तथा ।
खर्जूरीनारिकेलाद्यास्तरयवृक्षाः प्रकीर्तिताः ॥ २.४७
सर्वाआंरो चार्द्राणि नवौएषधानि सुवीर्य्यवन्तीति वदन्ति धीराः ।
सर्वारिय शुष्कारिय तु मध्यमानि शुष्काणि जेईर्णानि च निष्फलानि ॥ २.४८
वास्तूककुटजगुडूचीवासाकुष्माण्डकादिशतपत्री ।
इत्यादि तु नित्यार्द्रं गुणवच्छुष्कं यदा तदा द्विमुयणम् ।
विडङ्ग मधु मगूरी दाडिमं पिप्पलो गुडुः ।
नागवल्लेईन्दुवशशाल्याद्याः पुराणाः स्युआआरुणोत्तमाः ॥ २.४९
काठिन्यं मध्यकाठिन्यं मार्दवं चेति तु त्रिधा ।
द्रव्याणामिह सर्वेषां प्रकृतिः कथ्यते बुधैः ॥ २.५०
द्रव्याणां सन्ति सर्वेषां पूर्वैरुक्तास्त्रयो गुणाः ।
रसो वीर्यं विपाकश्च ज्ञातव्यास्तेऽतियत्नतः ॥ २.५१
रसस्तु मधुरादिः स्याद्वीर्यं कार्यसमर्थता ।
परिणामे गुणाढ्यत्वं विपाक इति संज्ञितम् ॥ २.५२
शीतमुष्णं च रूक्षं च स्निग्धं तीक्ष्णं तथा मृदु ।
पिच्छिलं विशदं चेति वीर्यमष्टविधं स्मृतम् ॥ २.५३
निस्कुटप्रमदकाननादिषु द्रव्यमेतदपि निर्गुणं भवेत् ।
क्वाप्यलीकवचनोपकर्णनात्क्वाप्यसाधुवनितादिसेवनात् ॥ २.५४
जातं श्मशाने वल्मीके देशे मूत्रादिदूषिते ।
द्रव्यं नैवोपयोगाय भिषजामुपजायते ॥ २.५५
कन्दं हिमर्तौ शिशिरे च मूलं पुष्पं वसन्ते गुणदं वदन्ति ।
प्रबालपत्राणि निदाघकाले स्युः पङ्कजातानि शरत्प्रयोगे ॥ २.५६
निम्बोडुम्बरजम्बवाद्या यथाकालं गुणोत्तराः ।
कन्दादिष्वथ सर्वेषां पृथगेव रसाद्यः ॥ २.५७
केचित्कन्दे केऽपि मूलेषु केचित्पत्रे पुष्पे केऽपि केचित्फलेषु ।
त्वच्येवान्ये वल्कले केचिदित्थं द्रव्यस्तोमा भिन्नभिन्नं गुणाढ्याः ॥ २.५८
देशे देशे योजनद्वादशान्ते भिन्नान्याहुर्द्रव्यनामानि लोके ।
किंचामीषु प्राणिनां वर्णभाषाचेष्टाच्छाया भिन्नरूपा विभाति ॥ २.५९
अनिर्दिष्टप्रयोगेषु मूलं ग्राह्यं त्वगादिषु ।
सामान्योक्तौ प्रयोक्तव्यं प्राहुस्तोयं तु नाभसम् ॥ २.६०
चूर्णकल्ककषायाणां प्रमाणं यत्र नोदितम् ।
तत्र द्रव्यप्रमाणेन स्वयं बुद्ध्या प्रयोजयेत् ॥ २.६१
माध्वीकं सर्वमद्यानां मधूनां माक्षिकं तथा ।
तैलं तु तिलसम्भूतं धातवो वस्तिसम्भवाः ॥ २.६२
शालीनां रक्तशालिः स्यात्सूप्यानां मुद्ग एव च ।
मूलानां पिप्पलीमूलं फलानां मदनं फलम् ॥ २.६३
त्वचा तु गन्धद्रव्याणां पत्राणां गन्धपत्रकम् ।
जीवन्तिशाकं शाकानां लवणानां च सैन्धवम् ॥ २.६४
सामान्यपुष्पनिर्देशात्मालतीकुसुमं क्षिपेत् ।
इत्थमन्येऽपि बोद्धव्याः प्रयोगा योगलक्षिताः ॥ २.६५
द्रव्यं वातहरं यत्तत्सकलं दीपनं परम् ।
कफहारि समं प्रोक्तं पित्तघ्नं मन्ददीपनम् ॥ २.६६
यच्छीतवीर्यं गुरु पित्तहारि द्रव्यं नृणां वातकरं तदुक्तम् ।

यदुष्णवीर्यं लघु वातहारि श्लेष्मापहं पित्तकरं च तत्स्यात् ॥ २.६७
इति बहुविधदेशभूध्रभूमीरुहवनगुल्मलताभिधागुणानाम् ।
सविवरमभिधाय लक्ष्म साधारणमथ तच्च विशेषतोऽभिधास्ये ॥ २.६८
इत्थं भूमीविपिनविषयक्षेत्रगोत्रादिनामस्तोमाख्यानप्रकरणगुणव्याकृतिप्रौढमेनम् ।
वर्गं बुद्ध्वा भिषगुपचितानर्गलात्यन्तसूक्ष्मप्रज्ञालोकप्रकटितधियामाधिराज्ये भिषज्येत् ॥ २.६९
इत्येष वैद्यकविकल्पविधानिदानचूडामणौ मृडपरागमपारगेण ।

राजनिघण्टु, गुडूच्यादिवर्ग
गुडूची चाथ मूर्वा च पटोलोऽरण्यजस्तथा ।
काकोली च द्विधा प्रोक्ता माषपर्णी तथापरे ॥ ३.१
मुद्गपर्णी च जीवन्ती त्रिविधा चाथ लिङ्गिनी ।
कटुकोशातकी चैव कपिकच्छुस्तथापरे ॥ ३.२
खलता कटुतुम्बी च देवदाली तथा स्मृता ।
वन्ध्याकर्कोटकी प्रोक्ता कटुतुण्ड्याखुकर्णिका ॥ ३.३
द्विधेन्द्रवारुणी चात्र यवतिक्तेश्वरी तथा ।
ज्योतिष्मती द्विधा चैव द्विधा च गिरिकर्णिका ॥ ३.४
मोरटश्चाथ चेदिन्दीवरा वस्तान्त्रिका च सा ।
सोमवल्ली तथा वत्सादनी गोपालकर्कटी ॥ ३.५
काकतुण्डी द्विधा चाथ गुञ्जा द्विर्वृद्धदारु च ।
कैवर्ती ताम्रवल्ली च काण्डीरी चाथ जन्तुका ॥ ३.६
अम्लपर्णी तथा शङ्खपुष्पी चावर्तकी तथा ।
कर्णस्फोटा तथा कट्वी लता चैवामृतस्रवा ।
पुत्रदा च पलाशी च विज्ञेयात्र नवाभिधा ॥ ३.७
सुमतिभिरित्थमनुक्ता बोद्धव्या वीरुधः क्रमादेताः ।
अस्मिन् वीरुद्वर्गे नाम्ना च गुणैश्च कीर्त्यन्ते ॥ ३.८
आ पानीयात्परिगणनयैवाप्रसिद्धाभिधाना नाम्नामुक्ता परिमितिकथाप्यत्र सर्वौषधीनाम् ।
सापि क्वापि स्फुटमभिधया क्वापि च प्रौढिभङ्ग्या प्रोक्ता नोक्ता प्रथितविषये सापि नष्टाङ्कवाक्ये ॥ ३.९
तस्मादिह न यत्रोक्ता नाम्नामङ्कादिनिर्मितिः ।
तत्र तत्राष्टसंख्यैव ज्ञेया सर्वत्र सूरिभिः ॥ ३.१०
यद्यपि क्वापि नष्टाङ्कसंख्यानियतिरीक्ष्यते ।
तत्र स्फुटत्वबुद्ध्यैव नोक्ता संख्येति बुध्यताम् ॥ ३.११
द्रव्याणां गणयशो नियोगवशतो वीर्यं परे प्रोचिरे प्राचीनैर्न च तद्वशेन निगमेषूक्तश्चिकित्साक्रमः ।
तस्यान्नैगमयोगसंग्रहविदां संवादवाग्भिस्तथा नैवास्माभिरभाणि किंतु तदिह प्रत्येकशः कथ्यते ॥ ३.१२
ज्ञेया गुडूच्यमृतवल्ल्यमृता ज्वरारिः श्यामा वरा सुरकृता मधुपर्णिका च ।
छिन्नोद्भवामृतलता च रसायनी च छिन्ना च सोमलतिकामृतसम्भवा च ॥ ३.१३
वत्सादनी छिन्नरुहा विशल्या भिषक्प्रिया कुण्डलिनी वयःस्था ।
जीवन्तिका नागकुमारिका च स्याच्छिन्निका सैव च चण्डहासा ॥ ३.१४
अन्या कन्दोद्भवा कन्दामृता पिण्डगुडूचिका ।
बहुच्छिन्ना बहुरुहा पिण्डालुः कन्दरोहिणी ॥ ३.१५
पूर्वा वार्धिकराह्वा स्यादुत्तरा लोकसंज्ञिका ।
गुडूच्योरुभयोरित्थमेकत्रिंशदिहाभिधाः ॥ ३.१६
ज्ञेया गुडूची गुरुरुष्णवीर्या तिक्ता कषाया ज्वरनाशिनी च ।
दाहार्तितृष्णावमिरक्तवातप्रमेहपाण्डुभ्रमहारिणी च ॥ ३.१७
कन्दोद्भवा गुडूची च कटूष्णा संनिपातहा विषघ्नी ज्वरभूतघ्नी वलीपलितनाशिनी ॥ ३.१८
मूर्वा दिव्यलता मिरा मधुरसा देवी त्रिपर्णी मधुश्रेणी भिन्नदलामरी मधुमती तिक्ता पृथक्पर्णिका ।
गोकर्णी लघुपर्णिका च दहनी तेजस्विनी मोरटा देवश्रेणीमधूलिकामधुदलाः स्युः पीलुनी रक्तला ॥ ३.१९
सुखोषिता स्निग्धपर्णी पीलुपर्णी मधुस्रवा ।
ज्वलनी गोपवल्ली चेत्यष्टविंशतिसंज्ञकाः ॥ ३.२०
मूर्वा तिक्तकषायोष्णा हृद्रोगकफवातहृत् ।
वमिप्रमेहकुष्ठादिविषमज्वरहारिणी ॥ ३.२१
स्यात्पटोलः कटुफलः कुलकः कर्कशच्छदः ।
राजनामामृतफलः पाण्डुः पाण्डुफलो मतः ॥ ३.२२

बीजगर्भो नागफलः कुष्ठारिः कासमर्दनः ।
पञ्चराजिफलो ज्योत्स्नी कुष्ठघ्नः षोडशाह्वयः ॥ ३.२३
पटोलः कटुतिक्तोष्णः रक्तपित्तबलासजित् ।
कफकण्डूतिकुष्ठासृग्ज्वरदाहार्तिनाशनः ॥ ३.२४
काकोली मधुरा काकी कालिका वायसोलिका ।
क्षीरा च ध्वाङ्क्षिका वीरा शुक्ला धीरा च मेदुरा ॥ ३.२५
ध्वाङ्क्षोली स्वादुमांसी च वयःस्था चैव जीविनी ।
इत्येषा खलु काकोली ज्ञेया पञ्चदशाह्वया ॥ ३.२६
काकोली मधुरा स्निग्धा क्षयपित्तानिलार्तिनुत् ।
रक्तदाहज्वरघ्नी च कफशुक्रविवर्धनी ॥ ३.२७
द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी ।
पयस्या क्षीरमधुरा वीरा क्षीरविषाणिका ॥ ३.२८
जीववल्ली जीवशुक्ला स्यादित्येषा नवाह्वया ।
रसवीर्यविपाकेषु काकोल्या सदृशी च सा ॥ ३.२९
माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा ।
आर्द्रमाषा मांसमाषा मङ्गल्या हयपुच्छिका ॥ ३.३०
हंसमाषाश्वपुच्छा च पाण्डुरा माषपत्त्रिका ।
कल्याणी वज्रमूली च शालिपर्णी विसारिणी ॥ ३.३१
आत्मोद्भवा बहुफला स्वयम्भूः सुलभा घना ।
इत्येषा माषपर्णी स्यादेकविंशतिनामका ॥ ३.३२
माषपर्णी रसे तिक्ता वृष्या दाहज्वरापहा ।
शुक्रवृद्धिकरी बल्या शीतला पुष्टिवर्धिनी ॥ ३.३३
मुद्गपर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका ।
वनजा रिङ्गिणी ह्रस्वा सूर्यपर्णी कुरङ्गिका ॥ ३.३४
कांसिका काकमुद्गा च वनमुद्गा वनोद्भवा ।
अरण्यमुद्गा वन्येति ज्ञेया पञ्चदशाह्वया ॥ ३.३५
मुद्गपर्णी हिमा कासवातरक्तक्षयापहा ।
पित्तदाहज्वरान् हन्ति चक्षुष्या शुक्रवृद्धिकृत् ॥ ३.३६
जीवन्ती स्याज्जीवनी जीवनीया जीवा जीव्या जीवदा जीवदात्री ।
शाकश्रेष्ठा जीवभद्रा च भद्रा मङ्गल्या च क्षुद्रजीवा यशस्या ॥ ३.३७
शृङ्गाटी जीवपृष्ठा च काञ्जिका शशशिम्बिका ।
सुपिङ्गलेति जीवन्ती ज्ञेया चाष्टादशाभिधा ॥ ३.३८
जीवन्ती मधुरा शीता रक्तपित्तानिलापहा ।
क्षयदाहज्वरान् हन्ति कफवीर्यविवर्धनी ॥ ३.३९
जीवन्त्यन्या बृहत्पूर्वा पुत्रभद्रा प्रियंकरी ।
मधुरा जीवपृष्ठा च बृहज्जीवा यशस्करी ॥ ३.४०
एवमेव बृहत्पूर्वा रसवीर्यबलान्विता ।
भूतविद्रावणी ज्ञेया वेगाद्रसनियामिका ॥ ३.४१
हेमा हेमवती सौम्या तृणग्रन्थिर्हिमाश्रया ।
स्वर्णपर्णी सुजीवन्ती स्वर्णजीवा सुवर्णिका ॥ ३.४२
हेमपुष्पी स्वर्णलता स्वर्णजीवन्तिका च सा ।
हेमवल्ली हेमलता नामान्यस्याश्चतुर्दश ॥ ३.४३
स्वर्णजीवन्तिका वृष्या चक्षुष्या मधुरा तथा ।
शिशिरा वातपित्तासृग्दाहजिद्बलवर्धनी ॥ ३.४४
लिङ्गिनी बहुपत्त्रा स्यादीश्वरी शैवमल्लिका ।

स्वयम्भूर्लिङ्गसम्भूता लिङ्गी चित्रफलामृता ॥ ३.४५
पण्डोली लिङ्गजा देवी चण्डापस्तम्भिनी तथा ।
शिवजा शिववल्ली च विज्ञेया षोडशाह्वया ॥ ३.४६
लिङ्गिनी कटुरुष्णा च दुर्गन्धा च रसायनी ।
सर्वसिद्धिकरी दिव्या वश्या रसनियामिनी ॥ ३.४७
कोषातकी कृतच्छिद्रा जालिनी कृतवेधना ।
क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिनी तथा ॥ ३.४८
कोशातकी तु शिशिरा कटुकाल्पकषायका ।
पित्तवातकफघ्नी च मलाध्मानविशोधिनी ॥ ३.४९
कपिकच्छुरात्मगुप्ता स्वयंगुप्ता महर्षभी ।
लाङ्गूली कुण्डली चण्डा मर्कटी दुरभिग्रहा ॥ ३.५०
कपिरोमफला गुप्ता दुःस्पर्शा कच्छुरा जया ।
प्रावृषेण्या शूकशिम्बी बदरी गुरुरार्षभी ॥ ३.५१
शिम्बी वराहिका तीक्ष्णा रोमालुर्वनशूकरी ।
कीशरोमा रोमवल्ली स्यात्षड्विंशतिनामका ॥ ३.५२
कपिकच्छूः स्वादुरसा वृष्या वातक्षयापहा ।
शीतपित्तास्रहन्त्री च विकृता व्रणनाशिनी ॥ ३.५३
खवल्ल्याकाशवल्ली स्यादस्पर्शा व्योमवल्लिका ।
आकाशनामपूर्वा सा वल्लीपर्यायगा स्मृता ॥ ३.५४
आकाशवल्ली कटुका मधुरा पित्तनाशिनी ।
वृष्या रसायनी बल्या दिव्यौषधिपरा स्मृता ॥ ३.५५
कटुतुम्बी कटुफला तुम्बिनी कटुतुम्बिनी ।
बृहत्फला राजपुत्री तिक्तबीजा च तुम्बिका ॥ ३.५६
कटुतुम्बी कटुस्तीक्ष्णा वान्तिकृत्श्वासवातजित् ।
कासघ्नी शोधनी शोफव्रणविषापहा ॥ ३.५७
जीमूतकः कण्टफला गरागरी वेणी सहा क्रोशफला च कट्फला ।
घोरा कदम्बा विषहा च कर्कटी स्याद्देवदाली खलु सारमूषिका ॥ ३.५८
वृत्तकोशा विषघ्नी च दाली लोमशपत्त्रिका ।
तुरङ्गिका च तर्कारी नाम्नामेकोनविंशतिः ॥ ३.५९
देवदाली तु तिक्तोष्णा कटुः पाण्डुकफापहा ।
दुर्नामश्वासकासघ्नी कामलाभूतनाशनी ॥ ३.६०
वन्ध्या देवी वन्ध्यकर्कोटका स्यान्नागारातिर्नागहन्त्री मनोज्ञा ।
पथ्या दिव्या पुत्रदात्री सुकन्दा श्रीकन्दा सा कन्दवल्लीश्वरी च ॥ ३.६१
सुगन्धा सर्पदमनी विषकण्टकिनी वरा ।
कुमारी भूतहन्त्री च नाम्नामित्यूनविंशतिः ॥ ३.६२
वन्ध्याकर्कोटकी तिक्ता कटूष्णा च कफापहा ।
स्थावरादिविषघ्नी च शस्यते सा रसायने ॥ ३.६३
तिक्ततुण्डी तु तिक्ताख्या कटुका कटुतुण्डिका ।
बिम्बी च कटुतिक्तादितुण्डीपर्यायगा च सा ॥ ३.६४
कटुतुण्डी कटुस्तिक्ता कफवान्तिविषापहा ।
अरोचकास्रपित्तघ्नी सदा पथ्या च रोचनी ॥ ३.६५
स्यादाखुकर्णी कृषिका द्रवन्ती चित्रा सुकर्णोन्दुरुकर्णिका च ।
न्यग्रोधिका मूषिकनागकर्णी स्याद्वृश्चिकर्णी बहुकर्णिका च ॥ ३.६६
माता भूमिचरी चण्डा शम्बरी बहुपादिका ।
प्रत्यक्श्रेणी वृषा चैव पुत्रश्रेण्यद्रिभूह्वया ॥ ३.६७

आखुकर्णी कटूष्णा च कफपित्तहरा सदा ।
आनाहज्वरशूलार्तिनाशिनी पाचनी परा ॥ ३.६८
ऐन्द्रीन्द्रवारुण्यरुणा मृगादनी गवादनी क्षुद्रसहेन्द्रचिर्भिटा ।
सूर्या विषघ्नी गुणकर्णिकामरा माता सुवर्णा सुफला च तारका ॥ ३.६९
वृषभाक्षी गवाक्षी च पीतपुष्पीन्द्रवल्लरी ।
हेमपुष्पी क्षुद्रफला वारुणी बालकप्रिया ॥ ३.७०
रक्तेर्वारुर्विषलता शक्रवल्ली विषापहा ।
अमृता विषवल्ली च ज्ञेयोनत्रिंशदाह्वया ॥ ३.७१
इन्द्रवारुणिका तिक्ता कटुशीता च रोचनी ।
गुल्मपित्तोदरश्लेष्मक्रिमिकुष्ठज्वरापहा ॥ ३.७२
महेन्द्रवारुणी रम्या चित्रवल्ली महाफला ।
सा माहेन्द्री चित्रफला त्रपुसी त्रपुसा च सा ॥ ३.७३
आत्मरक्षा विशाला च दीर्घवल्ली बृहत्फला ।
स्याद्बृहद्वारुणी सौम्या नामान्यस्याश्चतुर्दश ॥ ३.७४
महेन्द्रवारुणी ज्ञेया पूर्वोक्तगुणभागिनी ।
रसे वीर्ये विपाके च किंचिदेषा गुणाधिका ॥ ३.७५
यवतिक्ता महातिक्ता दृढपादा विसर्पिणी ।
नाकुली नेत्रमीला च शङ्खिनी पत्रतण्डुली ॥ ३.७६
तण्डुली चाक्षपीडा च सूक्ष्मपुष्पी यशस्विनी ।
माहेश्वरी तिक्तयवा यावी तिक्तेति षोडश ॥ ३.७७
यवतिक्ता सतिक्ताम्ला दीपनी रुचितत्परा ।
क्रिमिकुष्ठविषघ्न्यामदोषघ्नी रेचनी च सा ॥ ३.७८
रौद्री जटा रुद्रजटा च रुद्रा सौम्या सुगन्धा सुहता घना च ।
स्यादीश्वरी रुद्रलता सुपत्त्रा सुगन्धपत्रा सुरभिः शिवाह्वा ॥ ३.७९
पत्त्रवल्ली जटावल्ली रुद्राणी नेत्रपुष्करा ।
महाजटा जटारुद्रा नाम्नां विंशतिरीरिता ॥ ३.८०
जटा कटुरसा श्वासकासहृद्रोगनाशिनी ।
विद्राविणी चैव रक्षसां च निबर्हिणी ॥ ३.८१
ज्योतिष्मती स्वर्णलतानलप्रभा ज्योतिर्लता सा कटभी सुपिङ्गला ।
दीप्ता च मेध्या मतिदो च दुर्जरा सरस्वती स्यादमृतार्कसंख्यया ॥ ३.८२
तेजोवती बहुरसा कनकप्रभान्या तीक्ष्णा सुवर्णनकुली लवणाग्निदीप्ता ।
तेजस्विनी सुरलताग्निफलाग्निगर्भा स्यात्कङ्गणी तदनु शैलसुता सुतैला ॥ ३.८३
सुवेगा वायसी तीव्रा काकाण्डी वायसादनी ।
गीर्लता श्रीफली सौम्या ब्राह्मी लवणकिंशुका ॥ ३.८४
पारावतपदी पीता पीततैला यशस्विनी ।
मेध्या मेधाविनी धीरा स्यादेकत्रिंशदाह्वया ॥ ३.८५
ज्योतिष्मती तिक्तरसा च रूक्षा किंचित्कटुर्वातकफापहा च ।
दाहप्रदा दीपनकृच्च मेध्या प्रज्ञां च पुष्णाति तथा द्वितीया ॥ ३.८६
अश्वक्षुराद्रिकर्णी च कटभी दधिपुष्पिका ।
गर्दभी सितपुष्पी च श्वेतस्पन्दापराजिता ॥ ३.८७
श्वेता भद्रा सुपुष्पी च विषहन्त्री त्रिरेकधा ।
नागपर्यायकर्णी स्यादश्वाह्वादिक्षुरी स्मृता ॥ ३.८८
गिरिकर्णी हिमा तिक्ता पित्तोपद्रवनाशिनी ।
चक्षुष्या विषदोषघ्नी त्रिदोषशमनी च सा ॥ ३.८९
नीलपुष्पी महानीला स्यान्नीला गिरिकर्णिका ।

गवादनी व्यक्तगन्धा नीलस्यन्दा षडाह्वया ॥ ३.९०
नीलाद्रिकर्णी शिशिरा सतिक्ता रक्तातिसारज्वरदाहहन्त्री ।
विच्छर्दिकोन्मादमदभ्रमार्तिश्वासातिकासामयहारिणी च ॥ ३.९१
मोरटः कीर्णपुष्पश्च पीलुपत्त्रो मधुस्रवः ।
घनमूलो दीर्घमूलः पुरुषः क्षीरमोरटः ॥ ३.९२
मोरटः क्षीरबहुलो मधुरः सकषायकः ।
पित्तदाहज्वरान् हन्ति वृष्यो बलविवर्धनः ॥ ३.९३
इन्दीवरा युग्मफला दीर्घवृत्तोत्तमारणी ।
पुष्पमञ्जरिका द्रोणी करम्भा नलिका च सा ॥ ३.९४
इन्दीवरा कटुः शीता पित्तश्लेष्मापहारिका ।
चक्षुष्या कासदोषघ्नी व्रणक्रिमिहरा परा ॥ ३.९५
वस्तान्त्री वृषगन्धाख्या मेषान्त्री वृत्तपत्त्रिका ।
अजान्त्री वोकडी चैव स्यादित्येषा षडाह्वया ॥ ३.९६
वस्तान्त्री स्यात्कटुरसा कासदोषविनाशिनी ।
बीजदा गर्भजननी कीर्तिता भिषगुत्तमैः ॥ ३.९७
सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता ।
सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया ।
सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया ॥ ३.९८
सोमवल्ली कटुः शीता मधुरा पित्तदाहनुत् ।
तृष्णाविशोषशमनी पावनी यज्ञसाधनी ॥ ३.९९
सौम्या महिषवल्ली च प्रतिसोमान्त्रवल्लिका ।
अपत्त्रवल्लिका प्रोक्ता काण्डशाखा षडाह्वया ।
रसवीर्यविपाके च सोमवल्लीसमा स्मृता ॥ ३.१००
वत्सादनी सोमवल्ली विक्रान्ता मेचकाभिधा ।
पातालगरुडी तार्क्षी सौपर्णी गारुडी तथा ॥ ३.१०१
वासनी दीर्घकाण्डा च दृढकाण्डा महाबला ।
दीर्घवल्ली दृढलता नामान्यस्याश्चतुर्दश ॥ ३.१०२
वत्सादनी तु मधुरा पित्तदाहास्रदोषनुत् ।
वृष्या संतर्पणी रुच्या विषदोषविनाशिनी ॥ ३.१०३
गोपालकर्कटी वन्या गोपकर्कटिका तथा ।
क्षुद्रेर्वारुः क्षुद्रफला गोपाली क्षुद्रचिर्भटा ॥ ३.१०४
गोपालकर्कटी शीता मधुरा पित्तनाशनी ।
मूत्रकृच्छ्राश्मरीमेहदाहशोषनिकृन्तनी ॥ ३.१०५
काकनासा ध्वाङ्क्षनासा काकतुण्डा च वायसी ।
सुरङ्गी तस्करस्नायुर्ध्वाङ्क्षतुण्डा सुनासिका ॥ ३.१०६
वायसाह्वा ध्वाङ्क्षनखी काकाक्षा ध्वाङ्क्षनासिका ।
काकप्राणा च विज्ञेया नामान्यस्यास्त्रयोदश ॥ ३.१०७
काकनासा तु मधुरा शिशिरा पित्तहारिणी ।
रसायनी दार्ढ्यकरी विशेषात्पलितापहा ॥ ३.१०८
काकादनी काकपीलुः काकशिम्बी च रक्तला ।
ध्वाङ्क्षादनी वक्त्रशल्या दुर्मोहा वायसादनी ॥ ३.१०९
काकतुण्डी ध्वाङ्क्षनखी वायसी काकदन्तिका ।
ध्वाङ्क्षदन्तीति विज्ञेयास्तिस्रश्च दश चाभिधाः ॥ ३.११०
काकादनी कटूष्णा च तिक्ता दिव्यरसायनी ।
वातदोषहरा रुच्या पलितस्तम्भिनी परा ॥ ३.१११

गुञ्जा चूडामणिः सौम्या शिखण्डी कृष्णलारुणा ।
ताम्रिका शीतपाकी स्यादुच्चटा कृष्णचूडिका ॥ ३.११२
रक्ता च रक्तिका चैव काम्भोजी भिल्लिभूषणा ।
वन्यास्या मानचूडा च विज्ञेया षोडशाह्वया ॥ ३.११३
द्वितीया श्वेतकाम्भोजी श्वेतगुञ्जा भिरिण्टिका ।
काकादनी काकपीलुर्वक्त्रशल्या षडाह्वया ॥ ३.११४
गुञ्जाद्वयं तु तिक्तोष्णं बीजं वान्तिकरी शिफा ।
शूलघ्नं विषकृत्पत्त्रं वश्ये श्वेतं च शस्यते ॥ ३.११५
वृद्धदारुक आवेगी जुङ्गको दीर्घबालुकः ।
वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्रिका ॥ ३.११६
जीर्णदारु द्वितीया स्याज्जीर्णा फञ्जी सुपुष्पिका ।
अजरा सूक्ष्मपत्त्रा च विज्ञेया च षडाह्वया ॥ ३.११७
वृद्धदारुद्वयं गौल्यं पिच्छिलं कफवातहृत् ।
बल्यं कासामदोषघ्नं द्वितीयं स्वल्पवीर्यदम् ॥ ३.११८
कैवर्तिका सुरङ्गा च लता वल्ली द्रुमारुहा ।
रिङ्गिणी वस्त्ररङ्गा च भगा चेत्यष्टधाभिधा ॥ ३.११९
कैवर्तिका लघुर्वृष्या कषाया कफनाशनी ।
कासश्वासहरा चैव सैव मन्दाग्निदोषनुत् ॥ ३.१२०
ताली तमाली ताम्रा च ताम्रवल्ली तमालिका ।
सूक्ष्मवल्ली सुलोमा च शोधनी तालिका नव ॥ ३.१२१
ताम्रवल्ली कषाया स्यात्कफदोषविनाशनी ।
मुखकण्ठोत्थदोषघ्नी श्लेष्मशुद्धिकरी परा ॥ ३.१२२
काण्डीरः काण्डकटुको नासासंवेदनः पटुः ।
उग्रकाण्डस्तोयवल्ली कारवल्ली सुकाण्डकः ॥ ३.१२३
काण्डीरः कटुतिक्तोष्णः सरो दुष्टव्रणार्तिनुत् ।
लूतागुल्मोदरप्लीहशूलमन्दाग्निनाशनः ॥ ३.१२४
जन्तुका जन्तुकारी च जननी चक्रवर्तिनी ।
तिर्यक्फला निशान्धा च बहुपत्त्रा सुपत्त्रिका ॥ ३.१२५
राजकृष्णा जनेष्टा च कपिकच्छुफलोपमा ।
रञ्जनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका ॥ ३.१२६
विज्जुल्लिका वृक्षरुहा ग्रन्थिपर्णी सुवल्लिका ।
तरुवल्ली दीर्घफला एकविंशतिसंज्ञका ॥ ३.१२७
जन्तुका शिशिरा तिक्ता रक्तपित्तकफापहा ।
दाहतृष्णावमिघ्नी च रुचिकृद्दीपनी परा ॥ ३.१२८
अत्यम्लपर्णी तीक्ष्णा च कण्डुला वल्लिसूरणा ।
वल्ली करवडादिश्च वनस्थारण्यवासिनी ॥ ३.१२९
अत्यम्लपर्णी तीक्ष्णाम्ला प्लीहशूलविनाशनी ।
वातहृद्दीपनी रुच्या गुल्मश्लेष्मामयापहा ॥ ३.१३०
शङ्खपुष्पी सुपुष्पी च शङ्खाह्वा कम्बुमालिनी ।
सितपुष्पी कम्बुपुष्पी मेध्या वनविलासिनी ॥ ३.१३१
चिरिण्टी शङ्खकुसुमा भूलग्ना शङ्खमालिनी ।
इत्येषा शङ्खपुष्पी स्यादुक्ता द्वादशनामभिः ॥ ३.१३२
शङ्खपुष्पी हिमा तिक्ता मेधाकृत्स्वरकारिणी ।
ग्रहभूतादिदोषघ्नी वशीकरणसिद्धिदा ॥ ३.१३३
वर्तकी तिन्दुकिनी विभाण्डी विषाणिका रङ्गलता मनोज्ञा ।

सा रक्तपुष्पी महादिजाली सा पीतकीलापि च चर्मरङ्गा ॥ ३.१३४
वामावर्ता च संयुक्ता भूसंख्या शशिसंयुता ।
आवर्तकी कषायाम्ला शीतला पित्तहारिणी ॥ ३.१३५
कर्णस्फोटा श्रुतिस्फोटा त्रिपुटा कृष्णतण्डुला ।
चित्रपर्णी स्फोटलता चन्द्रिका चार्धचन्द्रिका ॥ ३.१३६
कर्णस्फोटा कटुस्तिक्ता हिमा सर्वविषापहा ।
ग्रहभूतादिदोषघ्नी सर्वव्याधिविनाशिनी ॥ ३.१३७
कट्वी कटुकवल्ली च सुकाष्ठा काष्ठवल्लिका ।
सुवल्ली च महावल्ली पशुमोहनिका कटुः ॥ ३.१३८
कट्वी तु कटुका शीता कफश्वासार्तिनाशनी ।
नानाज्वरहरा रुच्या राजयक्ष्मनिवारिणी ॥ ३.१३९
ज्ञेयामृतस्रवा वृत्तारुहाख्या तोयवल्लिका ।
घनवल्ली सितलता नामभिः शरसम्मिता ॥ ३.१४०
उक्तामृतस्रवा पथ्या ईषत्तिक्ता रसायनी ।
विषघ्नी व्रणकुष्ठादीन् कामलां श्वयथुं जयेत् ॥ ३.१४१
पुत्रदात्री तु वातारिर्भ्रमरी श्वेतपुष्पिका ।
वृत्तपत्त्रातिगन्धालुर्वैशिजाता सुवल्लरी ॥ ३.१४२
पुत्रदात्री तु वातघ्नी कटुरुष्णा कफापहा ।
सुरभिः सर्वदा पथ्या वन्ध्यादोषविनाशनी ॥ ३.१४३
पलाशी पत्त्रवल्ली पर्णवल्ली पलाशिका ।
खुरपर्णी सुपर्णी च दीर्घवल्ली विषादनी ॥ ३.१४४
अम्लपत्त्री दीर्घपत्त्री रसाम्ला चाम्लका च सा ।
अम्लातकी काञ्जिका च स्याच्चतुर्दशधाभिधा ॥ ३.१४५
पलाशी लघुरम्या च मुखदोषविनाशनी ।
अरोचकहरा पथ्या पित्तकोपकरी च सा ॥ ३.१४६
इति बहुविधवल्लीस्तोमनामाभिधानप्रगुणगुणयथावद्वर्णनापूर्णमेनम् ।
सुललितपदसर्गं वर्गनाम्ना च वैद्यः सदसि बहुविलासं व्यासवद्व्यातनोतु ॥ ३.१४७
दीप्ता दीधितयस्तथान्धतमसध्वंसाय भानोरिव व्यातन्वन्ति निजं रुजां विजयते वीर्यं विरुद्धौ च याः ।
तासामेव विलासभूमिरसमो वर्गः श्रुतो वीरुधां वीरुद्वर्ग इति प्रतीतमहिमा नैसर्गिकैर्यो गुणैः ॥ ३.१४८
प्राप्ता यस्य परिग्रहं त्रिविधसद्वीरैकचूडामणेस्तीव्राण्योषधयः स्रवन्ति सहसा वीर्याण्यजर्यादिव ।
तस्यायं नृहरेः कृतौ स्थितिमगाद्वर्गो गुडूच्यादिकस्तार्तीयीकतयाभिधानरचनाचूडामणौ कीर्तितः ॥ ३.१४९

पर्पटो जीवकश्चैवर्षभकः श्रावणी द्विधा ।
मेदाद्वयमृद्धिवृद्धी धूम्रपत्त्रा प्रसारणी ॥ ४.१
चतुष्पाषाणभेदः स्यात्कन्या बर्हिशिखा तथा ।
क्षीरिणीद्वितयं चैव त्रायमाणा रुदन्तिका ॥ ४.२
ब्राह्मी द्विधा च वन्दाकः कुलत्था तण्डुलीयकः ।
चिविल्लो नागशुण्डी च कुटुम्बी स्थलपद्मिनी ॥ ४.३
जम्बूश्च नागदन्ती च विष्णुक्रान्ता कुणञ्जरः ।
भूम्यामली च गोरक्षी गोलोमी दुग्धफेनिका ॥ ४.४
क्षुद्राम्लिका च लज्जाह्वी हंसपादी च काथरा ।
पुनर्नवात्रयं प्रोक्तं वसुको द्विविधः स्मृतः ॥ ४.५
सर्पिणी चालिर्मत्स्याक्षी गुण्डालावनिपाटली ।
स्यात्पाण्डुरफली श्वेता ब्रह्मदण्डी द्रवन्तिका ॥ ४.६
द्रोणपुष्पीद्वयं चैव झण्डूर्गोरक्षदुग्धिका ।
नवबाणमिताः क्षुद्रक्षुपाः प्रोक्ता यथाक्रमात् ॥ ४.७
पर्पटश्चरको रेणुस्तृष्णारिः खरको रजः ।
शीतः शीतप्रियः पांशुः कल्पाङ्गी वर्मकण्टकः ॥ ४.८
कृशशाखः पर्पटकः सुतिक्तो रक्तपुष्पकः ।
पित्तारिः कटुपत्त्रश्च कवचोऽष्टादशाभिधः ॥ ४.९
पर्पटः शीतलस्तिक्तः पित्तश्लेष्मज्वरापहः ।
रक्तदाहारुचिग्लानिमदविभ्रमनाशनः ॥ ४.१०
जीवको जीवनो जीव्यः शृङ्गाह्वः प्राणदः प्रियः ।
चिरजीवी च मधुरो मङ्गल्यः कूर्चशीर्षकः ॥ ४.११
ह्रस्वाङ्गो वृद्धिदश्चोक्तो ह्यायुष्मान् जीवदस्तथा ।
दीर्घायुर्बलदश्चैव नामान्येतानि षोडश ॥ ४.१२
जीवको मधुरः शीतो रक्तपित्तानिलार्तिजित् ।
क्षयदाहज्वरान् हन्ति शुक्रश्लेष्मविवर्धनः ॥ ४.१३
ऋषभो गोपतिर्धीरो विषाणी धूर्द्धरो वृषः ।
ककुद्मान् पुङ्गवो वोढा शृङ्गी धुर्यश्च भूपतिः ॥ ४.१४
कामी ऋक्षप्रियश्चोक्षा लाङ्गुली गौश्च बन्धुरः ।
गोरक्षो वनवासी च ज्ञेयो विंशतिनामकः ॥ ४.१५
ऋषभो मधुरः शीतः पित्तरक्तविरेकनुत् ।
शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च सः ॥ ४.१६
श्रावणी स्यान्मुण्डितिका भिक्षुः श्रवणशीर्षिका ।
श्रवणा च प्रव्रजिता परिव्राजी तपोधना ॥ ४.१७
श्रावणी तु कषाया स्यात्कटूष्णा कफपित्तनुत् ।
आमातीसारकासघ्नी विषच्छर्दिविनाशिनी ॥ ४.१८
महाश्रावणिकान्या सा महामुण्डी च लोचनी ।
कदम्बपुष्पी विकचा क्रोडचूडा पलङ्कषा ॥ ४.१९
नदीकदम्बो मुण्डाख्या महामुण्डनिका च सा ।
छिन्ना ग्रन्थिनिका माता स्थविरा लोभनी तथा ।
भूकदम्बोऽलम्बुषा स्यादिति सप्तदशाह्वया ॥ ४.२०
महामुण्ड्युष्णतिक्ता च ईषद्गौल्या मरुच्छिदा ।
स्वरकृद्रोचनी चैव मेहहृच्च रसायनी ॥ ४.२१
मेदा वसा मणिच्छिद्रा जीवनी शल्यपर्णिका ।

नखच्छेद्या हिमा रङ्गा मध्यदेशे प्रजायते ॥ ४.२२
मेदःसारा स्नेहवती मेदिनी मधुरा वरा ।
स्निग्धा मेदोद्रवा साध्वी शल्यदा बहुरन्ध्रिका ।
ऊनविंशत्याह्वया सा मता पूरुषदन्तिका ॥ ४.२३
मेदा तु मधुरा शीता पित्तदाहार्तिकासनुत् ।
राजयक्ष्मज्वरहरा वातदोषकरी च सा ॥ ४.२४
महामेदा वसुच्छिद्रा जीवनी पांशुरागिणी ।
देवेष्टा सुरमेदा च दिव्या देवमणिस्तथा ॥ ४.२५
देवगन्धा महाच्छिद्रा ऋक्षार्हा रुद्रसंमिता ।
महामेदाभिधः कन्दो लताजातः सुपाण्डुरः ।
मेदापि शुक्लकन्दः स्यान्मेदोधातुमिव स्रवेत् ॥ ४.२६
महामेदा हिमा रुच्या कफशुक्रप्रवृद्धिकृत् ।
हन्ति दाहास्रपित्तानि क्षयवातज्वरं च सा ॥ ४.२७
ऋद्धिः सिद्धिः प्राणदा जीवदात्री सिद्धा योग्या चेतनीया रथाङ्गी ।
मङ्गल्या स्याल्लोककान्ता यशस्या जीवश्रेष्ठा द्वादशाह्वा क्रमेण ॥ ४.२८
वृद्धिस्तुष्टिः पुष्टिदा वृद्धिदात्री मङ्गल्या श्रीः सम्पदाशीर्जनेष्टा ।
लक्ष्मीर्भूतिर्मुत्सुखं जीवभद्रा स्यादित्येषा लोकसंज्ञा क्रमेण ॥ ४.२९
ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले ।
श्वेतरोमान्वितः कन्दो लताजातः सरन्ध्रकः ॥ ४.३०
तूलग्रन्थिसमा ऋद्धिर्वामावर्तफला च सा ।
वृद्धिस्तु दक्षिणावर्तफला प्रोक्ता महर्षिभिः ॥ ४.३१
ऋद्धिर्वृद्धिश्च मधुरा सुस्निग्धा तिक्तशीतला ।
रुचिमेधाकरी श्लेष्मक्रिमिकुष्ठहरा परा ॥ ४.३२
प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत् ।
यत्र द्वयानुसृष्टिः स्याद्द्वयमप्यत्र योजयेत् ॥ ४.३३
धूम्रपत्रा तु धूम्राह्वा सुलभा तु स्वयम्भुवा ।
गृध्रपत्रा च गृध्राणी क्रिमिघ्नी स्त्रीमलापहा ॥ ४.३४
धूम्रपत्रा रसे तिक्ता शोफघ्नी क्रिमिनाशिनी ।
उष्णा कासहरा चैव रुच्या दीपनकारिणी ॥ ४.३५
प्रसारणी सुप्रसरा सारणी सरणी सरा ।
चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥ ४.३६
प्रबला राजपर्णी च बल्या भद्रबला तथा ।
चन्द्रवल्ली प्रभद्रा च ज्ञेया पञ्चदशाह्वया ॥ ४.३७
प्रसारणी गुरूष्णा च तिक्ता वातविनाशिनी ।
अर्शःश्वयथुहन्त्री च मलविष्टम्भहारिणी ॥ ४.३८
पाषाणभेदकोऽश्मघ्नः शिलाभेदोऽश्मभेदकः ।
श्वेता चोपलभेदी च नगजिच्छिलिगर्भजा ॥ ४.३९
पाषाणभेदो मधुरस्तिक्तो मेहविनाशनः ।
तृड्दाहमूत्रकृच्छ्रघ्नः शीतलश्चाश्मरीहरः ॥ ४.४०
अन्या तु वटपत्री स्यादन्या चैरावती च सा ।
गोधावतीरावती च श्यामा खट्वाङ्गनामिका ॥ ४.४१
वटपत्री हिमा गौल्या मेहकृच्छ्रविनाशिनी ।
बलदा व्रणहन्त्री च किंचिद्दीपनकारिणी ॥ ४.४२
अन्या श्वेता शिलावल्का शिलाजा शैलवल्कला ।
वल्कला शैलगर्भाह्वा शिलात्वक्सप्तनामिका ॥ ४.४३

शिलावल्कं हिमं स्वादु मेहकृच्छ्रविनाशनम् ।
मूत्ररोधाश्मरीशूलक्षयपित्तापहारकम् ॥ ४.४४
क्षुद्रपाषाणभेदान्या चतुष्पत्त्री च पार्वती ।
नागभूरश्मकेतुश्च गिरिभूः कन्दरोद्भवा ॥ ४.४५
शैलोद्भवा च गिरिजा नगजा च दशाह्वया ।
क्षुद्रपाषाणभेदा तु व्रणकृच्छ्राश्मरीहरा ॥ ४.४६
गृहकन्या कुमारी च कन्यका दीर्घपत्त्रिका ।
स्थलेरुहा मृदुः कन्या बहुपत्त्रामराजरा ॥ ४.४७
कण्टकप्रावृता वीरा भृङ्गेष्टा विपुलस्रवा ।
ब्रह्मघ्नी तरुणी रामा कपिला चाम्बुधिस्रवा ।
सुकण्टका स्थूलदलेत्येकविंशतिनामका ॥ ४.४८
गृहकन्या हिमा तिक्ता मदगन्धिः कफापहा ।
पित्तकासविषश्वासकुष्ठघ्नी च रसायनी ॥ ४.४९
बर्हिचूडा तु शिखिनी शिखालुः सुशिखा शिखा ।
शिखाबला केकिशिखा मयूराद्यभिधा शिखा ॥ ४.५०
बर्हिचूडा रसे स्वादुर्मूत्रकृच्छ्रविनाशिनी ।
बालग्रहादिदोषघ्नी वश्यकर्मणि शस्यते ॥ ४.५१
क्षीरिणी काञ्चनक्षीरी कर्षणी कटुपर्णिका ।
तिक्तदुग्धा हैमवती हिमदुग्धा हिमावती ॥ ४.५२
हिमाद्रिजा पीतदुग्धा यवचिञ्चा हिमोद्भवा ।
हैमी च हिमजा चेति चतुरेकगुणाह्वया ॥ ४.५३
क्षीरिणी कटुतिक्ता च रेचनी शोफतापनुत् ।
क्रिमिदोषकफघ्नी च पित्तज्वरहरा च सा ॥ ४.५४
स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाह्वा रुक्मिणी तथा ।
सुवर्णा हेमदुग्धी च हेमक्षीरी च काञ्चनी ॥ ४.५५
स्वर्णक्षीरी हिमा तिक्ता क्रिमिपित्तकफापहा ।
मूत्रकृच्छ्राश्मरीशोफदाहज्वरहरा परा ॥ ४.५६
त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका ।
बलभद्रा सुकामा च वार्षिकी गिरिजानुजा ॥ ४.५७
मङ्गल्याह्वा देवबला पालनी भयनाशिनी ।
अवनी रक्षणी त्राणा विज्ञेया षोडशाह्वया ॥ ४.५८
त्रायन्ती शीतमधुरा गुल्मज्वरकफास्रनुत् ।
भ्रमतृष्णाक्षयग्लानिविषच्छर्दिविनाशिनी ॥ ४.५९
स्याद्रुदन्ती स्रवत्तोया संजीवन्यमृतस्रवा ।
रोमाञ्चिका महामांसी चणपत्त्री सुधास्रवा ॥ ४.६०
रुदन्ती कटुतिक्तोष्णा क्षयक्रिमिविनाशिनी ।
रक्तपित्तकफश्वासमेहहारी रसायनी ॥ ४.६१
चणपत्त्रसमं पत्त्रं क्षुपं चैव तथाम्लकम् ।
शिशिरे जलबिन्दूनां स्रवन्तीति रुदन्तिका ॥ ४.६२
ब्राह्मी सरस्वती सौम्या सुरश्रेष्ठा सुवर्चला ।
कपोतवेगा वैधात्री दिव्यतेजा महौषधी ॥ ४.६३
स्वायम्भुवी सोमलता सुरेज्या ब्रह्मकन्यका ।
मण्डूकमाता मत्स्याक्षी मण्डूकी सुरसा तथा ॥ ४.६४
मेध्या वीरा भारती च वरा च परमेष्ठिनी ।
दिव्या च शारदी चेति चतुर्विंशतिनामका ॥ ४.६५

ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तजित् ।
बुद्धिं प्रज्ञां च मेधां च कुर्यादायुष्यवर्धनी ॥ ४.६६
ब्राह्मी तु क्षुद्रपत्त्रान्या लघुब्राह्मी जलोद्भवा ।
ब्राह्मी तिक्तरसोष्णा च सरा वातामशोफजित् ॥ ४.६७
वन्दाकः पादपरुहा शिखरी तरुरोहिणी ।
वृक्षादनी वृक्षरुहा कामवृक्षश्च शेखरी ॥ ४.६८
केशरूपा तरुरुहा तरुस्था गन्धमेदिनी ।
कामिनी तरुरुट्श्यामा द्रुपदी षोडशाभिधाः ॥ ४.६९
वन्दाकस्तिक्तशिशिरः कफपित्तश्रमापहः ।
वश्यादिसिद्धिदो वृष्यः कषायश्च रसायनः ॥ ४.७०
कुलत्था दृक्प्रसादा च ज्ञेयारण्यकुलत्थिका ।
कुलाली लोचनहिता चक्षुष्या कुम्भकारिका ॥ ४.७१
कुलत्थिका कटुस्तिक्ता स्यादर्शःशूलनाशनी ।
विबन्धाध्मानशमनी चक्षुष्या व्रणरोपणी ॥ ४.७२
तण्डुलीयस्तु भण्डीरस्तण्डुली तण्डुलीयकः ।
ग्रन्थिलो बहुवीर्यश्च मेघनादो घनस्वनः ॥ ४.७३
सुशाकः पथ्यशाकश्च स्फूर्जथुः स्वनिताह्वयः ।
वीरस्तण्डुलनामा च पर्यायाश्च चतुर्दश ॥ ४.७४
तण्डुलीयस्तु शिशिरो मधुरो विषनाशनः ।
रुचिकृद्दीपनः पथ्यः पित्तदाहभ्रमापहः ॥ ४.७५
चिविल्लिका रक्तदला खरच्छदा स्यात्क्षुद्रघोली मधुमालपत्त्रिका ।
चिविल्लिका चैव कटुः कषायिका ज्वरेऽतिसारे च हिता रसायनी ॥ ४.७६
हस्तिशुण्डी महाशुण्डी शुण्डी घूसरपत्त्रिका ।
हस्तिशुण्डी कटूष्णा स्यात्संनिपातज्वरापहा ॥ ४.७७
कुटुम्बिनी पयस्या च क्षीरिणी जलकामुका ।
वक्रशल्या दुराधर्षा क्रूरकर्मा झिरिण्टिका ॥ ४.७८
शीता प्रहरजाया च शीतला च जलेरुहा ।
विख्याता किल विद्वद्भिरेषा द्वादशनामभिः ॥ ४.७९
कुटुम्बिनी तु मधुरा ग्राहिणी कफपित्तनुत् ।
व्रणास्रदोषकण्डूतिनाशनी सा रसायनी ॥ ४.८०
स्थलपद्मी तु पद्माह्वा चारटी पद्मचारिणी ।
सुगन्धमूलाम्बुरुहा लक्ष्मीश्रेष्ठा सुपुष्करा ॥ ४.८१
रम्या पद्मवती चातिचरा स्थूलरुहा स्मृता ।
ज्ञेया पुष्करिणी चैव पुष्कराद्या च पर्णिका ।
पुष्करादियुता नाडी प्रोक्ता पञ्चदशाह्वया ॥ ४.८२
स्थलादिपद्मिनी गौल्या तिक्ता शीता च वान्तिनुत् ।
रक्तपित्तहरा मेहभूतातीसारनाशनी ॥ ४.८३
जम्बूर्जाम्बवती वृत्ता वृत्तपुष्पा च जाम्बवी ।
मदघ्नी नागदमनी दुर्धर्षा दुःसहा नव ॥ ४.८४
ज्ञेया जम्बूस्त्रिदोषघ्नी तीक्ष्णोष्णा कटुतिक्तका ।
उदराध्मानदोषघ्नी कोष्ठशोधनकारिणी ॥ ४.८५
नागदन्ती श्वेतघण्टा मधुपुष्पा विशोधनी ।
नागस्फोता विशालाक्षी नागच्छत्रा विचक्षणा ॥ ४.८६
सर्पपुष्पी शुक्लपुष्पी स्वादुका शीतदन्तिका ।
सितपुष्पी सर्पदन्ती नागिनी बाणभूमिता ॥ ४.८७

नागदन्ती कटुस्तिक्ता रूक्षा वातकफापहा ।
मेधाकृद्विषदोषघ्नी पाचनी शुभदायिनी ।
गुल्मशूलोदरव्याधिकण्ठदोषनिकृन्तनी ॥ ४.८८
विष्णुक्रान्ता हरिक्रान्ता नीलपुष्पापराजिता ।
नीलक्रान्ता सतीना च विक्रान्ता छर्दिका च सा ।
विष्णुक्रान्ता कटुस्तिक्ता कफवातामयापहा ॥ ४.८९
कुणञ्जरः कुणञ्जी च कुणञ्जोऽरण्यवास्तुकः ।
कुणञ्जो मधुरो रुच्यो दीपनः पाचनो हितः ॥ ४.९०
भूम्यामली तमाली च ताली चैव तमालिका ।
उच्चटा दृढपादी च वितुन्ना च वितुन्निका ॥ ४.९१
भूधात्री चारुटा वृष्या विषघ्नी बहुपत्रिका ।
बहुवीर्याहिभयदा विश्वपर्णी हिमालया ।
जटा वीरा च नाम्नां सा भवेदेकोनविंशतिः ॥ ४.९२
भूधात्री तु कषायाम्ला पित्तमेहविनाशनी ।
शिशिरा मूत्ररोगार्तिशमनी दाहनाशनी ॥ ४.९३
गोरक्षी सर्पदण्डी च दीर्घदण्डी सुदण्डिका ।
चित्रला गन्धबहुला गोपाली पञ्चपर्णिका ॥ ४.९४
गोरक्षी मधुरा तिक्ता शिशिरा दाहपित्तनुत् ।
विस्फोटवान्त्यतीसारज्वरदोषविनाशनी ॥ ४.९५
गोलोमिका तु गोधूमी गोजा क्रोष्टुकपुच्छिका ।
गोसम्भवा प्रस्तरिणी विज्ञेयेति षडाह्वया ॥ ४.९६
गोलोमिका कटुस्तिक्ता त्रिदोषशमनी हिमा ।
मूलरोगास्रदोषघ्नी ग्राहिणी दीपनी च सा ॥ ४.९७
दुग्धफेनी पयःफेनी फेनदुग्धा पयस्विनी ।
लूतारिर्व्रणकेतुश्च गोजापर्णी च सप्तधा ॥ ४.९८
दुग्धफेनी कटुस्तिक्ता शिशिरा विषनाशिनी ।
व्रणापसारिणी रुच्या युक्त्या चैव रसायनी ॥ ४.९९
क्षुद्राम्लिका तु चाङ्गेरी चुक्राह्वा चुक्रिका च सा ।
लोणाम्ला च चतुष्पर्णी लोणा लोडाम्लपत्रिका ॥ ४.१००
अम्बष्ठाम्लवती चैव अम्ला दन्तशठा मता ।
शस्त्राङ्गा चाम्लपत्री च ज्ञेया पञ्चदशाह्वया ॥ ४.१०१
क्षुद्राम्ली च रसे साम्ला सोष्णा सा वह्निवर्धनी ।
रुचिकृद्ग्रहणीदोषदुर्नामघ्नी कफापहा ॥ ४.१०२
रक्तपादी शमीपत्रा स्पृक्का खदिरपत्रिका ।
सङ्कोचनी समङ्गा च नमस्कारी प्रसारिणी ॥ ४.१०३
लज्जालुः सप्तपर्णी स्यात्खदिरी गण्डमालिका ।
लज्जा च लज्जिका चैव स्पर्शलज्जास्ररोधनी ॥ ४.१०४
रक्तमूला ताम्रमूला स्वगुप्ताञ्जलिकारिका ।
नाम्नां विंशतिरित्युक्ता लज्जायास्तु भिषग्वरैः ॥ ४.१०५
रक्तपादी कटुः शीता पित्तातीसारनाशनी ।
शोफदाहश्रमश्वासव्रणकुष्ठकफास्रनुत् ॥ ४.१०६
लज्जालुर्वैपरीत्यान्या अल्पक्षुपबृहद्दला ।
वैपरीत्या तु लज्जालुहर्यभिधाने प्रयोजयेत् ॥ ४.१०७
लज्जालुर्वैपरीत्याह्वा कटुरुष्णा कफामनुत् ।
रसो नियामकोऽत्यन्तनानाविज्ञानकारकः ॥ ४.१०८

रक्तपाद्यपरा प्रोक्ता त्रिपदा हंसपादिका ।
घृतमण्डलिका ज्ञेया विश्वग्रन्थिस्त्रिपादिका ॥ ४.१०९
विपादी कीटमारी च हेमपादी मधुस्रवा ।
कर्णाटी ताम्रपत्री च विक्रान्ता सुवहा तथा ॥ ४.११०
ब्रह्मादनी पदाङ्गी च शीताङ्गी सुतपादुका ।
संचारिणी च पदिका प्रह्लादी कीलपादिका ॥ ४.१११
गोधापदी च हंसाङ्घ्रिर्धार्त्तराष्ट्रपदी तथा ।
हंसपादी च विज्ञेया नाम्ना चैषा शराक्षिधा ॥ ४.११२
हंसपादी कटूष्णा स्यात्विषभूतविनाशिनी ।
भ्रान्त्यपस्मारदोषघ्नी विज्ञेया च रसायनी ॥ ४.११३
काथरा हयपर्यायैः काथरान्तैः प्रकीर्तिता ।
अश्वकाथरिका तिक्ता वातघ्नी दीपनी परा ॥ ४.११४
पुनर्नवा विशाखश्च कठिल्लः शशिवाटिका ।
पृथ्वी च सितवर्षाभूर्दीर्घपत्रः कठिल्लकः ॥ ४.११५
श्वेता पुनर्नवा सोष्णा तिक्ता कफविषापहा ।
कासहृद्रोगशूलास्रपाण्डुशोफानिलार्तिनुत् ॥ ४.११६
पुनर्नवान्या रक्ताख्या क्रूरा मण्डलपत्रिका ।
रक्तकाण्डा वर्षकेतुर्लोहिता रक्तपत्रिका ॥ ४.११७
वैशाखी रक्तवर्षाभूः शोफघ्नी रक्तपुष्पिका ।
विकस्वरा विषघ्नी च प्रावृषेण्या च सारिणी ॥ ४.११८
वर्षाभवः शोणपत्रः शोणः संमीलितद्रुमः ।
पुनर्नवो नवो नव्यः स्याद्द्वाविंशतिसंज्ञया ॥ ४.११९
रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी ।
दरदोषघ्नी पाण्डुपित्तप्रमर्दिनी ॥ ४.१२०
नीला पुनर्नवा नीला श्यामा नीलपुनर्नवा ।
कृष्णाख्या नीलवर्षाभूर्नीलिनी स्वाभिधान्विता ॥ ४.१२१
नीला पुनर्नवा तिक्ता कटूष्णा च रसायनी ।
हृद्रोगपाण्डुश्वयथुश्वासवातकफापहा ॥ ४.१२२
वसुकोऽथ वसुः शैवो वसोऽथ शिवमल्लिका ।
पाशुपतः शिवमतः सुरेष्टः शिवशेखरः ।
सितो रक्तो द्विधा प्रोक्तो ज्ञेयः स च नवाभिधः ॥ ४.१२३
वसुकौ कटुतिक्तोष्णौ पाके शीतौ च दीपनौ ।
अजीर्णवातगुल्मघ्नौ श्वेतश्चैव रसायनः ॥ ४.१२४
सर्पिणी भुजगी भोगी कुण्डली पन्नगी फणी ।
षडभिधा सर्पिणी स्याद्विषघ्नी कुचवर्धनी ॥ ४.१२५
वृश्चिका नखपर्णी च पिच्छिलाप्यलिपत्रिका ।
वृश्चिका पिच्छलाम्ला स्यादन्त्रवृद्ध्यादिदोषनुत् ॥ ४.१२६
ब्राह्मी वयस्या मत्स्याक्षी मीनाक्षी सोमवल्लरी ।
मत्स्याक्षी शिशिरा रुच्या व्रणदोषक्षयापहा ॥ ४.१२७
गुण्डाला तु जलोद्भूता गुच्छबुध्ना जलाशया ।
गुण्डाला कटुतिक्तोष्णा शोफव्रणविनाशनी ॥ ४.१२८
भूपाटली च कुम्भी च भूताली रक्तपुष्पिका ।
भूपाटली कटूष्णा च पारदे सुप्रयोजिका ॥ ४.१२९
पाटली पाण्डुरफली धूसरा वृत्तबीजका ।
भूरिफली तथा पाण्डुफली स्यात्षड्विधाभिधा ॥ ४.१३०

शिशिरा पाण्डुरफली गौल्या कृच्छ्रार्तिदोषहा ।
बल्या पित्तहरा वृष्या मूत्राघातनिवारणी ॥ ४.१३१
श्वेता तु छुरिकापत्री पर्वमूलाप्यविप्रिया ।
श्वेतातिमधुरा शीता स्तन्यदा रुचिकृत्परा ॥ ४.१३२
ब्रह्मदण्ड्यजलादण्डी कण्टपत्रफला च सा ।
ब्रह्मदण्डी कटूष्णा स्यात्कफशोफानिलापहा ॥ ४.१३३
द्रवन्ती शाम्बरी चित्रा न्यग्रोधी शतमूलिका ।
प्रत्यक्श्रेणी वृषा चण्डा पत्रश्रेण्याखुकर्णिका ॥ ४.१३४
मूषकाह्वादिका कर्णी प्रतिपर्णीशिफा सा ।
सहस्रमूली विक्रान्ता ज्ञेया स्याच्चतुरेकधा ॥ ४.१३५
द्रवन्ती मधुरा शीता रसबन्धकरी परा ।
ज्वरघ्नी क्रिमिहा शूलशमनी च रसायनी ॥ ४.१३६
द्रोणपुष्पी दीर्घपत्रा कुम्भयोनिः कुतुम्बिका ।
चित्राक्षुपः कुतुम्बा च सुपुष्पा चित्रपत्त्रिका ॥ ४.१३७
द्रोणपुष्पी कटुः सोष्णा रुच्या वातकफापहा ।
अग्निमान्द्यहरा चैव पथ्या वातापहारिणी ॥ ४.१३८
अन्या चैव महाद्रोणा कुरुम्बा देवपूर्वका ।
दिव्यपुष्पा महाद्रोणी देवीकाण्डा षडाह्वया ॥ ४.१३९
देवद्रोणी कटुस्तिक्ता मेध्या वातार्तिभूतनुत् ।
कफमान्द्यापहा चैव युक्त्या पारदशोधने ॥ ४.१४०
झण्डूः स्यात्स्थूलपुष्पा तु झण्डूको झेण्डुकस्तथा ।
झण्डूः कटुकषायः स्यात्ज्वरभूतग्रहापहा ॥ ४.१४१
गोरक्षदुग्धी गोरक्षी ताम्रदुग्धी रसायनी ।
बहुपत्रा मृताजीवी मृतसंजीवनी मुनिः ॥ ४.१४२
गोरक्षदुग्धी मधुरा वृष्या सा ग्राहिणी हिमा ।
सर्ववश्यकरी चैव रसे सिद्धिगुणप्रदा ॥ ४.१४३
इत्थं वितत्य विशदीक्रियमाणनानाक्षुद्रक्षुपाह्वयगुणप्रगुणापवर्गम् ।
वर्गं विधाय मुखमण्डनमेनमुच्चैरुच्चाटनाय च रुजां प्रभुरस्तु वैद्यः क्षुधं रान्ति जनस्योच्चैस्तस्मात्क्षुद्राः प्रकीर्तिताः ।
तेषां क्षुपाणां वर्गोऽयमादाने धातुरुच्यते ॥ ४.१४४
धत्ते नित्यसमाधिसंस्तववशात्प्रीत्यार्चितेशार्पितां स्वात्मीयामृतहस्ततां किल सदा यः सर्वसंजीवनीम् ।
वर्गस्तस्य कृतौ नृसिंहकृतिनो यः पर्पटादिमहानेष प्राञ्चति नामकाण्डपरिषच्चूडामणौ पञ्चमः ॥ ४.१४५

चतुर्धा पिप्पली प्रोक्ता तन्मूलं नागरं तथा ।
आर्द्रकं मरिचद्वन्द्वं धान्यकं च यवानिका ॥ ५.१
चव्यं च चित्रकद्वन्द्वं विडङ्गं च वचाद्वयम् ।
कुलञ्जो जीरकाः पञ्च मेथिका हिङ्गुपत्रिका ॥ ५.२
हिङ्गुद्वयं चाग्निजारौ रास्ने एलाद्वयं शिवम् ।
सौवर्चलं च काचाह्वं विडं च गडनामकम् ॥ ५.३
सामुद्रं द्रौणिकं चान्यदौषरं रोमकं तथा ।
नवधा लवणं प्रोक्तमजमोदा च रेणुका ॥ ५.४
बोलं कर्चूरकः पाठा वृक्षाम्लश्चाम्लवेतसम् ।
कटुकातिविषा मुस्ता द्वयं यष्टीमधुद्वयम् ॥ ५.५
भार्गी पुष्करमूलं च शृङ्ग्यथो दन्तिकाद्वयम् ।
जैपालश्च त्रिवृद्द्वेधा त्वक्पत्रं नागकेशरम् ॥ ५.६
तवक्षीरं च तालीसपत्राख्यं वंशरोचना ।
मञ्जिष्ठा च चतुर्धा स्याद्धरिद्रे च द्विधा मते ॥ ५.७
लाक्षा चालक्तको लोध्रो धातक्यब्धिफलं तथा ।
निर्विषाथ विषद्वन्द्वं द्विधा चाम्लहरिद्रका ॥ ५.८
अब्धिफेनमफेनं च टङ्कणौ साकुरुण्डकम् ।
हिमावली हस्तिमदः स्वर्जिको लोणकं तथा ॥ ५.९
वज्रको यवजश्चाथ सर्वक्षारोऽथ मायिका ।
औषधान्यभिधीयन्ते षडङ्गमितसंख्यया ॥ ५.१०
पिप्पली कृकरा शौण्डी चपला मागधी कणा ।
कटुबीजा च कोरङ्गी वैदेही तिक्ततण्डुला ॥ ५.११
श्यामा दन्तफला कृष्णा कोला च मगधोद्भवा ।
उषणा चोपकुल्या च स्मृत्याह्वा तीक्ष्णतण्डुला ॥ ५.१२
पिप्पली ज्वरहा वृष्या स्निग्धोष्णा कटुतिक्तका ।
दीपनी मारुतश्वासकासश्लेष्मक्षयापहा ॥ ५.१३
गजोषणा चव्यफला चव्यजा गजपिप्पली ।
श्रेयसी छिद्रवैदेही दीर्घग्रन्थिश्च तैजसी ।
वर्तुली स्थूलवैदेही ज्ञेया चेति दशाभिधा ॥ ५.१४
गजोषणा कटूष्णा च रूक्षा मलविशोषणी ।
बलासवातहन्त्री च स्तन्यवर्णविवर्धिनी ॥ ५.१५
सैंहली सर्पदण्डा च सर्पाङ्गी ब्रह्मभूमिजा ।
पार्वती शैलजा ताम्रा लम्बबीजा तथोत्कटा ॥ ५.१६
अद्रिजा सिंहलस्था च लम्बदन्ता च जीवला ।
जीवाली जीवनेत्रा च कुरवी षोडशाह्वया ॥ ५.१७
सैंहली कटुरुष्णा च जन्तुघ्नी दीपनी परा ।
कफश्वाससमीरार्तिशमनी कोष्ठशोधनी ॥ ५.१८
वनादिपिप्पल्यभिधानयुक्तं सूक्ष्मादिपिप्पल्यभिधानमेतत् ।
क्षुद्रादिपिप्पल्यभिधानयोग्यं वनाभिधापूर्वकणाभिधानम् ॥ ५.१९
वनपिप्पलिका चोष्णा तीक्ष्णा रुच्या च दीपनी ।
आमा भवेद्गुणाढ्या तु शुष्का स्वल्पगुणा स्मृता ॥ ५.२०
ग्रन्थिकं पिप्पलीमूलं मूलं तु चविकाशिरः ।
कोलमूलं कटुग्रन्थि कटुमूलं कटूषणम् ॥ ५.२१
सर्वग्रन्थि च पत्राढ्यं विरूपं शोणसम्भवम् ।

सुग्रन्थि ग्रन्थिलं चैव पर्यायाः स्युश्चतुर्दश ॥ ५.२२
कटूष्णं पिप्पलीमूलं श्लेष्मक्रिमिविनाशनम् ।
दीपनं वातरोगघ्नं रोचनं पित्तकोपनम् ॥ ५.२३
शुण्ठी महौषधं विश्वं नागरं विश्वभेषजम् ।
विश्वौषधं कटुग्रन्थि कटुभद्रं कटूषणम् ॥ ५.२४
सौपर्णं शृङ्गवेरं च कफारिश्चार्द्रकं स्मृतम् ।
शोषणं नागराह्वं च विज्ञेयं षोडशाह्वयम् ॥ ५.२५
शुण्ठी कटूष्णा स्निग्धा च कफशोफानिलापहा ।
शूलबन्धोदराध्मानश्वासश्लीपदहारिणी ॥ ५.२६
आर्द्रकं गुल्ममूलं च मूलजं कन्दलं वरम् ।
शृङ्गवेरं महीजं च सैकतेष्टमनूपजम् ॥ ५.२७
अपाकशाकं चार्द्राख्यं राहुच्छत्रं सुशाककम् ।
शार्ङ्गं स्यादार्द्रशाकं च सच्छाकमृतुभूह्वयम् ॥ ५.२८
कटूष्णमार्द्रकं हृद्यं विपाके शीतलं लघु ।
दीपनं रुचिदं शोफकफकण्ठामयापहम् ॥ ५.२९
मरिचं पलितं श्यामं कोलं वल्लीजमूषणम् ।
यवनेष्टं वृत्तफलं शाकाङ्गं धर्मपत्तनम् ॥ ५.३०
कटुकं च शिरोवृत्तं वीरं कफविरोधि च ।
रूक्षं सर्वहितं कृष्णं सप्तभूख्यं निरूपितम् ॥ ५.३१
मरिचं कटु तिक्तोष्णं लघु श्लेष्मविनाशनम् ।
समीरकृमिहृद्रोगहरं च रुचिकारकम् ॥ ५.३२
सितमरिचं तु सिताख्यं सितवल्लीजं च बालकं बहुलम् ।
धवलं चन्द्रकमेतन्मुनिनाम गुणाधिकं च वश्यकरम् ॥ ५.३३
कटूष्णं श्वेतमरिचं विषघ्नं भूतनाशनम् ।
अवृष्यं दृष्टिरोगघ्नं युक्त्या चैव रसायनम् ॥ ५.३४
धान्यकं धान्यजं धान्यं धानेयं धनिकं तथा ।
कुस्तुम्बुरुश्चावलिका छत्रधान्यं वितुन्नकम् ॥ ५.३५
सुगन्धिः शाकयोग्यश्च सूक्ष्मपत्रो जनप्रियः ।
धान्यबीजो बीजधान्यं वेधकं षोडशाह्वयम् ॥ ५.३६
धान्यकं मधुरं शीतं कषायं पित्तनाशनम् ।
ज्वरकासतृषाच्छर्दिकफहारि च दीपनम् ॥ ५.३७
यवानी दीप्यको दीप्यो यवसाह्वो यवाग्रजः ।
दीपनी चोग्रगन्धा च वातारिर्भूकदम्बकः ॥ ५.३८
यवजो दीपनीयश्च शूलहन्त्री यवानिका ।
उग्रा च तीव्रगन्धा च ज्ञेया पञ्चदशाह्वया ॥ ५.३९
यवानी कटुतिक्तोष्णा वातार्शःश्लेष्मनाशनी ।
शूलाध्मानक्रिमिच्छर्दिमर्दनी दीपनी परा ॥ ५.४०
चव्यकं चविका चव्यं वशिरो गन्धनाकुली ।
वल्ली च कोलवल्ली च कोलं कुटलमस्तकम् ।
तीक्ष्णा करिणिका वल्ली कृकरो नेत्रभूह्वया ॥ ५.४१
चव्यं स्यादुष्णकटुकं लघु रोचनदीपनम् ।
जन्तूद्रेकापहं कासश्वासशूलार्तिकृन्तनम् ॥ ५.४२
चित्रकोऽग्निश्च शार्दूलश्चित्रपाली कटुः शिखी ।
कृशानुर्दहनो व्यालो ज्योतिष्कः पालकस्तथा ॥ ५.४३
अनलो दारुणो वह्निः पावकः शबलस्तथा ।

पाठी द्वीपी च चित्राङ्गो ज्ञेयः शूरश्च विंशतिः ॥ ५.४४
चित्रकोऽग्निसमः पाके कटुः शोफकफापहः ।
वातोदरार्शोग्रहणीक्रिमिकण्डूतिनाशनः ॥ ५.४५
कालो व्यालः कालमूलोऽतिदीप्यो मार्जारोऽग्निर्दाहकः पावकश्च ।
चित्राङ्गोऽयं रक्तचित्रो महाङ्गः स्याद्रुद्राह्वश्चित्रकोऽन्यो गुणाढ्यः ॥ ५.४६
स्थूलकायकरो रुच्यः कुष्ठघ्नो रक्तचित्रकः ।
रसे नियामको लोहे वेधकश्च रसायनः ॥ ५.४७
विडङ्गा क्रिमिहा चैत्रा तण्डुला तण्डुलीयका ।
वातारिस्तण्डुला प्रोक्ता जन्तुघ्नी मृगगामिनी ॥ ५.४८
कैरली गह्वरामोघा कपाली चित्रतण्डुला ।
वरा सुचित्रबीजा च जन्तुहन्त्री च षोडश ॥ ५.४९
विडङ्गा कटुरुष्णा च लघुर्वातकफार्तिनुत् ।
अग्निमान्द्यारुचिभ्रान्तिक्रिमिदोषविनाशनी ॥ ५.५०
वचोग्रगन्धा गोलोमी जटिलोग्रा च लोमशा ।
रक्षोघ्नी विजया भद्रा मङ्गल्येति दशाह्वया ॥ ५.५१
वचा तीक्ष्णा कटूष्णा च कफामग्रन्थिशोफनुत् ।
वातज्वरातिसारघ्नी वान्तिकृन्मादनुत् ॥ ५.५२
मेध्या श्वेतवचा त्वन्या षड्ग्रन्था दीर्घपत्रिका ।
तीक्ष्णगन्धा हैमवती मङ्गल्या विजया च सा ॥ ५.५३
श्वेतवचातिगुणाढ्या मतिमेधायुःसमृद्धिदा कफनुत् ।
वृष्या च वातभूतक्रिमिदोषघ्नी च दीपनी च वचा ॥ ५.५४
कुलञ्जो गन्धमूलश्च तीक्ष्णमूलः कुलञ्जनः ।
कुलञ्जः कटुतिक्तोष्णो दीपनो मुखदोषनुत् ॥ ५.५५
जीरको जरणो जीरो जीर्णो दीप्यश्च दीपकः ।
अजाजिको वह्निशङ्खो मागधश्च नवाह्वयः ॥ ५.५६
जीरकः कटुरुष्णश्च वातहृद्दीपनः परः ।
गुल्माध्मानातिसारघ्नो ग्रहणीक्रिमिहृत्परः ॥ ५.५७
गौरादिजीरकस्त्वन्योऽजाजी स्यात्श्वेतजीरकः ।
कणाह्वा कणजीर्णा च कणा दीप्यः सितादिकः ।
ज्ञेया दीर्घकणा चैव सिताजाजी दशाह्वया ॥ ५.५८
गौराजाजी हिमा रुच्या कटुर्मधुरदीपनी ।
क्रिमिघ्नी विषहन्त्री च चक्षुष्याध्माननाशिनी ॥ ५.५९
कृष्णा तु जरणा काली बहुगन्धा च भेदिनी ।
कटुभेदिनिका रुच्या नीला नीलकणा स्मृता ॥ ५.६०
काश्मीरजीरका वर्षा काली स्याद्दन्तशोधनी ।
कालमेषी सुगन्धा च विज्ञेया बाणभूह्वया ॥ ५.६१
जरणा कटुरुष्णा च कफशोफनिकृन्तनी ।
रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्रहणीहरा ॥ ५.६२
दीप्योपकुञ्चिका काली पृथ्वी स्थूलकणा पृथुः ।
मनोज्ञा जरणी जीर्णा तरुणी स्थूलजीरकः ।
सुषवी कारवी ज्ञेया पृथ्वीका च चतुर्दश ॥ ५.६३
पृथ्वीका कटुतिक्तोष्णा वातगुल्मामदोषनुत् ।
श्लेष्माध्मानहरा जीर्णा जन्तुघ्नी दीपनी परा ॥ ५.६४
बृहत्पाली क्षुद्रपत्रोऽरण्यजीरः कणा तथा ।
वनजीरः कटुः शीतो व्रणहा पञ्चनामकः ॥ ५.६५

जीरकाः कटुकाः पाके क्रिमिघ्ना वह्निदीपनाः ।
जीर्णज्वरहरा रुच्या व्रणहाध्माननाशनाः ॥ ५.६६
मेथिका मेथिनी मेथी दीपनी बहुपत्रिका ।
वेधनी गन्धबीजा च ज्योतिर्गन्धफला तथा ॥ ५.६७
वल्लरी चन्द्रिका मेथा मिश्रपुष्पा च कैरवी ।
कुञ्चिका बहुपर्णी च पीतबीजा मुनीन्दुधा ॥ ५.६८
मेथिका कटुरुष्णा च रक्तपित्तप्रकोपणी ।
अरोचकहरा दीप्तिकरा वातघ्नदीपनी ॥ ५.६९
पृथ्वीका हिङ्गुपत्री च कवरी दीर्घिका पृथुः ।
तन्वी च दारुपत्री च बिल्वी बाष्पी नवाह्वया ॥ ५.७०
हिङ्गुपत्री कटुस्तीक्ष्णा तिक्तोष्णा कफवातनुत् ।
आमक्रिमिहरा रुच्या पथ्या दीपनपाचनी ॥ ५.७१
हिङ्गूग्रगन्धं भूतारिर्वाह्लीकं जन्तुनाशनम् ।
शूलगुल्मादिरक्षोघ्नमुग्रवीर्यं च रामठम् ॥ ५.७२
अगूढगन्धं जरणं भेदनं सूपधूपनम् ।
दीप्तं सहस्रवेधीति ज्ञेयं पञ्चदशाभिधम् ॥ ५.७३
हृद्यं हिङ्गु कटूष्णं च क्रिमिवातकफापहम् ।
विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मनाशनम् ॥ ५.७४
नाडीहिङ्गुः पलाशाख्या जन्तुका रामठी च सा ।
वंशपत्री च पिण्डाह्वा सुवीर्या हिङ्गुनाडिका ॥ ५.७५
नाडीहिङ्गुः कटूष्णा च कफवातार्तिशान्तिकृत् ।
विष्ठाविबन्धदोषघ्नमानाहामयहारि च ॥ ५.७६
अग्निजारोऽग्निनिर्यासोऽप्यग्निगर्भोऽग्निजः स्मृतः ।
वडवाग्निमलो ज्ञेयो जरायुश्चाग्निसम्भवः ॥ ५.७७
स्यादग्निजारः कटुरुष्णवीर्यस्तुण्डामयो वातकफापहश्च ।
पित्तप्रदः सोऽधिकसंनिपातशूलार्तिशीतामयनाशकश्च ॥ ५.७८
जाराभो दहनस्पर्शी पिच्छिलः सागरे भवः ।
जरायुस्तच्चतुर्वर्णः तेषु श्रेष्ठः सलोहितः ॥ ५.७९
रास्ना युक्तरसा रम्या श्रेयसी रसना रसा ।
सुगन्धिमूला सुरसा रसाढ्यातिरसा दश ॥ ५.८०
रास्ना तु त्रिविधा प्रोक्ता पत्रं तृणं तथा ।
ज्ञेये दले श्रेष्ठे तृणरास्ना च मध्यमा ॥ ५.८१
रास्ना गुरुश्च तिक्तोष्णा विषवातास्रकासजित् ।
शोफकम्पोदरश्लेष्मशमनी पाचनी च सा ॥ ५.८२
स्थूलैला बृहदेला त्रिपुटा त्रिदिवोद्भवा च भद्रैला ।
सुरभित्वक्च महैला पृथ्वी कन्या कुमारिका चैन्द्री ॥ ५.८३
कायस्था गोपुटा कान्ता घृताची गर्भसम्भवा ।
इन्द्राणी दिव्यगन्धा च विज्ञेयाष्टादशाह्वया ॥ ५.८४
एला बहुलगन्धैन्द्री द्राविडी निष्कुटिस्त्रुटिः ।
कपोतवर्णी गौराङ्गी बाला बलवती हिमा ॥ ५.८५
चन्द्रिका चोपकुञ्ची च सूक्ष्मा सागरगामिनी ।
गर्भारिर्गन्धफलिका कायस्थाष्टादशाह्वया ॥ ५.८६
एलाद्वयं शीतलतिक्तमुक्तं सुगन्धि पित्तार्तिकफापहारि ।
करोति हृद्रोगमलार्तिवस्तिशूलघ्नमत्र स्थविरा गुणाढ्या ॥ ५.८७
सैन्धवं स्याच्छीतशिवं नादेयं सिन्धुजं शिवम् ।

शुद्धं शिवात्मजं पथ्यं मणिमन्थं नवाभिधम् ॥ ५.८८
सैन्धवं लवणं वृष्यं चक्षुष्यं रुचिदीपनम् ।
त्रिदोषशमनं पूतं व्रणदोषविबन्धजित् ॥ ५.८९
सैन्धवं द्विविधं ज्ञेयं श्वेतं रक्तमिति क्रमात् ।
रसवीर्यविपाकेषु गुणाढ्यं नूतनं शिवम् ॥ ५.९०
सौवर्चलं तु रुचकं तिलकं हृद्यगन्धकम् ।
अक्षं च कृष्णलवणं रुच्यं कौद्रविकं तथा ॥ ५.९१
सौवर्चलं लघु क्षारं कटूष्णं गुल्मजन्तुजित् ।
ऊर्ध्ववातामशूलार्तिविबन्धारोचकान् जयेत् ॥ ५.९२
नीलं काचोद्भवं काचं तिलकं काचसम्भवम् ।
काचसौवर्चलं कृष्णलवणं पाक्यजं स्मृतम् ॥ ५.९३
काचोत्थं हृद्यगन्धं च तत्काललवणं तथा ।
कुरुविन्दं काचमलं कृत्रिमं च चतुर्दश ॥ ५.९४
काचादिलवणं रुच्यमीषत्क्षारं च पित्तलम् ।
दाहकं कफवातघ्नं दीपनं गुल्मशूलहृत् ॥ ५.९५
विडं द्राविडकं खण्डं कृतकं क्षारमासुरम् ।
सुपाक्यं खण्डलवणं धूर्तं कृत्रिमकं दश ॥ ५.९६
विडमुष्णं च लवणं दीपनं वातनाशनम् ।
रुच्यं चाजीर्णशूलघ्नं गुल्ममेहविनाशनम् ॥ ५.९७
गाढादिलवणं शुभ्रं पृथ्वीजं गडदेशजम् ।
गडोत्थं च महारम्भं साम्भरं सम्भरोद्भवम् ॥ ५.९८
गडोत्थं तूष्णलवणमीषदम्लं मलापहम् ।
दीपनं कफवातघ्नमर्शोघ्नं कोष्ठशोधनम् ॥ ५.९९
सामुद्रकं तु सामुद्रं समुद्रलवणं शिवम् ।
वंशिरं सागरोत्थं च शिशिरं लवणाब्धिजम् ॥ ५.१००
सामुद्रं लघु हृद्यं च पलितास्रदपित्तदम् ।
विदाहि कफवातघ्नं दीपनं रुचिकृत्परम् ॥ ५.१०१
द्रौणेयं वार्धेयं द्रोणीजं वारिजं च वार्धिभवम् ।
द्रोणीलवणं द्रोणं त्रिकटुलवणं च वसुसंज्ञम् ॥ ५.१०२
द्रौणेयं लवणं पाके नात्युष्णमविदाहि च ।
भेदनं स्निग्धमीषच्च शूलघ्नं चाल्पपित्तलम् ॥ ५.१०३
औषरकं सार्वगुणं सार्वरसं सर्वलवणमूषरजम् ।
साम्भारं बहुलवणं मेलकलवणं च मिश्रकं नवधा ॥ ५.१०४
औषरं तु कटु क्षारं तिक्तं वातकफापहम् ।
विदाहि पित्तकृद्ग्राहि मूत्रसंशोषकारि च ॥ ५.१०५
रोमकमौद्भिदमुक्तं वसुकं वसु पांशुलवणमूषरजम् ।
पांशवमौषरमैरिणमौर्वं सार्वसहं रुद्रैः ॥ ५.१०६
रोमकं तीक्ष्णमत्युष्णं कटु तिक्तं च दीपनम् ।
दाहशोषकरं ग्राहि पित्तकोपकरं परम् ॥ ५.१०७
अजमोदा खराह्वा च बस्तमोदा च मर्कटी ।
मोदा गन्धदला हस्तिकारवी गन्धपत्रिका ॥ ५.१०८
मायूरी शिखिमोदा च मोदाढ्या वह्निदीपिका ।
ब्रह्मकोशी विशाली च हृद्यगन्धोग्रगन्धिका ।
मोदिनी फलमुख्या च वसुचन्द्राभिधा मता ॥ ५.१०९
अजमोदा कटुरुष्णा रूक्षा कफवातहारिणी रुचिकृत् ।

शूलाध्मानारोचकजठरामयनाशनी चैव ॥ ५.११०
रेणुका कपिला कान्ता नन्दिनी महिला द्विजा ।
राजपुत्री हिमा रेणुः पाण्डुपत्री हरेणुका ॥ ५.१११
सुपर्णी शिशिरा शान्ता कौन्ती वृत्ता च धर्मिणी ।
कपिलोमा हैमवती पाण्डुपत्री च विंशतिः ॥ ५.११२
रेणुका तु कटुः शीता खर्जूकण्डूतिहारिणी ।
तृष्णादाहविषघ्नी च मुखवैमल्यकारिणी ॥ ५.११३
बोलं रक्तापहं मुण्डं सुरसं पिण्डकं विषम् ।
निर्लोहं बर्बरं पिण्डं सौरभं रक्तगन्धकम् ॥ ५.११४
रसगन्धं महागन्धं विश्वं च शुभगन्धकम् ।
विश्वगन्धं गन्धरसं व्रणारिर्वसुभूह्वयम् ॥ ५.११५
बोलं तु कटुतिक्तोष्णं कषायं रक्तदोषनुत् ।
कफपित्तामयान् हन्ति प्रदरादिरुजापहम् ॥ ५.११६
कर्चूरो द्राविडः कार्शो दुर्लभो गन्धमूलकः ।
वेधमुख्यो गन्धसारो जटिलश्चाष्टनामकः ॥ ५.११७
कर्चूरः कटुतिक्तोष्णः कफकासविनाशनः ।
मुखवैशद्यजननो गलगण्डादिदोषनुत् ॥ ५.११८
पाठाम्बष्ठाम्बष्ठिका स्यात्प्राचीना पापचेलिका ।
पाठिका स्थापनी चैव श्रेयसी वृद्धिकर्णिका ॥ ५.११९
एकाष्ठीला कुचैली च दीपनी वरतिक्तका ।
तिक्तपुष्पा बृहत्तिक्ता दीपनी त्रिशिरा वृकी ।
मालवी च वरा देवी वृत्तपर्णी द्विदृङ्मिता ॥ ५.१२०
पाठा तिक्ता गुरूष्णा च वातपित्तज्वरापहा ।
भग्नसन्धानकृत्पित्तदाहातीसारशूलहृत् ॥ ५.१२१
वृक्षाम्लमम्लशाकं स्याच्चुक्राम्लं तित्तिडीफलम् ।
शाकाम्लमम्लपूरं च पूराम्लं रक्तपूरकम् ॥ ५.१२२
चूडाम्लबीजाम्लफलाम्लकं स्यादम्लादिवृक्षाम्लफलं रसाम्लम् ।
श्रेष्ठाम्लमत्यम्लमथाम्लबीजं फलं च चुक्रादि नगेन्दुसंख्यम् ॥ ५.१२३
वृक्षाम्लमम्लं कटुकं कषायं सोष्णं कफार्शोघ्नमुदीरयन्ति ।
तृष्णासमीरोदरहृद्गदादिगुल्मातीसारव्रणदोषनाशि ॥ ५.१२४
अम्लोऽम्लवेतसो वेधी रसाम्लो वीरवेतसः ।
वेतसाम्लश्चाम्लसारः शतवेधी च वेधकः ॥ ५.१२५
भीमश्च भेदनो भेदी राजाम्लश्चाम्लभेदनः ।
अम्लाङ्कुशो रक्तसारः फलाम्लश्चाम्लनायकः ॥ ५.१२६
सहस्रवेधी वीराम्लो गुल्मकेतुर्धराक्षिधा ।
शङ्खमांसादिद्रावी स्याद्द्विधा चैवाम्लवेतसः ॥ ५.१२७
अम्लवेतसमत्यम्लं कषायोष्णं च वातजित् ।
कफार्शःश्रमगुल्मघ्नमरोचकहरं परम् ॥ ५.१२८
कटुका जननी तिक्ता रोहिणी तिक्तरोहिणी ।
चक्राङ्गी मत्स्यपित्ता च बकुला शुकुलादनी ॥ ५.१२९
सादनी शतपर्वा स्यात्चक्राङ्गी मत्स्यभेदिनी ।
अशोकरोहिणी कृष्णा कृष्णमेदा महौषधी ॥ ५.१३०
कट्व्यञ्जनी काण्डरुहा कटुश्च कटुरोहिणी ।
केदारकटुकारिष्टाप्यामघ्नी पञ्चविंशतिः ॥ ५.१३१
कटुकातिकटुस्तिक्ता शीतपित्तास्रदोषजित् ।

बलासारोचकश्वासज्वरहृद्रेचनी च सा ॥ ५.१३२
अतिविषा श्वेतकन्दा विश्वा शृङ्गी च भङ्गुरा ।
विरूपा श्यामकन्दा च विश्वरूपा महौषधी ॥ ५.१३३
वीरा प्रतिविषा चान्द्री विषा श्वेतवचा स्मृता ।
अरुणोपविषा चैव ज्ञेया षोडशसम्मिता ॥ ५.१३४
कटूष्णातिविषा तिक्ता कफपित्तज्वरापहा ।
आमातीसारकासघ्नी विषच्छर्दिविनाशनी ॥ ५.१३५
त्रिविधातिविषा ज्ञेया शुक्ला कृष्णा तथारुणा ।
रसवीर्यविपाकेषु निर्विशेषगुणा च सा ॥ ५.१३६
दोलायां गोमयक्वाथे पचेदतिविषां ततः ।
सूर्यतापे भवेच्छुष्का योजयेत्तां भिषग्वरः ॥ ५.१३७
मुस्ताभद्रावारिदाम्भोदमेघा जीमूतोऽब्दो नीरदोऽब्भ्रं घनश्च ।
गाङ्गेयं स्याद्भद्रमुस्ता वराही गुन्जा ग्रन्थिर्भद्रकासी कसेरुः ॥ ५.१३८
क्रोडेष्टा कुरुविन्दाख्या सुगन्धिर्ग्रन्थिला हिमा ।
वन्या राजकसेरुश्च कच्छोत्था पन्चविंशतिः ॥ ५.१३९
भद्रमुस्ता कषाया च तिक्ता शीता च पाचनी ।
पित्तज्वरकफघ्नी च ज्ञेया सङ्ग्रहणी च सा ॥ ५.१४०
अपरा नागरमुस्ता नागरोत्था नागरादिघनसंज्ञा ।
चक्राङ्का नादेयी चूडाला पिण्डमुस्ता च ॥ ५.१४१
शिशिरा च वृषध्वाङ्क्षी कच्छरुहा चारुकेसरोच्चटा ।
सा पूर्णकोष्ठसंज्ञा कलापिनी सागरेन्दुमिता ॥ ५.१४२
तिक्ता नागरमुस्ता कटुः कषाया च शीतला कफनुत् ।
पित्तज्वरातिसारारुचितृष्णादाहनाशनी श्रमहृत् ॥ ५.१४३
यष्टीमधुर्मधुयष्टी मधुवल्ली मधुस्रवा ।
मधुकं मधुका यष्टी यष्ट्याह्वं वसुसंमितम् ॥ ५.१४४
मधुरं यष्टिमधुकं किंचित्तिक्तं च शीतलम् ।
चक्षुष्यं पित्तहृद्रुच्यं शोषतृष्णाव्रणापहम् ॥ ५.१४५
अन्यत्क्लीतनमुक्तं क्लीतनकं क्लीतनीयकं मधुकम् ।
मधुवल्ली च मधूली मधुरलता मधुरसातिरसा ॥ ५.१४६
शोषापहा च सौम्या स्थलजा जलजा च सा द्विधाभूता ।
सामान्येन मतेयमेकादशसंज्ञा बहुज्ञधिया ॥ ५.१४७
क्लीतनं मधुरं रुच्यं बल्यं वृष्यं व्रणापहम् ।
शीतलं गुरु चक्षुष्यमस्रपित्तापहं परम् ॥ ५.१४८
भार्ङ्गी गर्दभिशाकश्च फन्जी चाङ्गारवल्लरी ।
वर्षा ब्राह्मणयष्टिश्च बर्बरो भृङ्गजा च सा ॥ ५.१४९
पद्मा यष्टिश्च भारङ्गी वातारिः कासजित्परम् ।
सुरूपा भ्रमरेष्टा च शक्रमाता च षोडश ॥ ५.१५०
भार्ङ्गी तु कटुतिक्तोष्णा कासश्वासविनाशनी ।
शोफव्रणक्रिमिघ्नी च दाहज्वरनिवारिणी ॥ ५.१५१
मूलं पुष्करमूलं च पुष्करं पद्मपत्रकम् ।
पद्मं पुष्करजं बीजं पौष्करं पुष्कराह्वयम् ॥ ५.१५२
काश्मीरं ब्रह्मतीर्थं च श्वासारिर्मूलपुष्करम् ।
ज्ञेयं पन्चदशाह्वं च पुष्कराद्ये जटाशिफे ॥ ५.१५३
पुष्करं कटुतिक्तोष्णं कफवातज्वरापहम् ।
श्वासारोचककासघ्नं शोफघ्नं पाण्डुनाशनम् ॥ ५.१५४

शृङ्गी कुलीरशृङ्गी स्यात्घोषा च वनमूर्धजा ।
चन्द्रा कर्कटशृङ्गी च महाघोषा च शृङ्गिका ॥ ५.१५५
कालिका चेन्दुखण्डा च लताङ्गी च विषाणिका ।
चक्रा च शिखरं चैव कर्कटाह्वा त्रिपञ्चधा ॥ ५.१५६
तिक्ता कर्कटशृङ्गी तु गुरुरुष्णानिलापहा ।
हिक्कातीसारकासघ्नी श्वासपित्तास्रनाशनी ॥ ५.१५७
दन्ती शीघ्रा श्येनघण्टा निकुम्भी नागस्फोता दन्तिनी चोपचित्रा ।
भद्रा रूक्षा रोचनी चानुकूला निःशल्या स्याद्वक्रदन्ता विशल्या ॥ ५.१५८
मधुपुष्पैरण्डफला भद्राण्येरण्डपत्रिका ।
उदुम्बरदला चैव तरुणी चाणुरेवती ।
विशोधनी च कुम्भी च ज्ञेया चाग्निकराह्वया ॥ ५.१५९
दन्ती कटूष्णा शूलामत्वग्दोषशमनी च सा ।
अर्शोव्रणाश्मरीशल्यशोधनी दीपनी परा ॥ ५.१६०
अन्या दन्ती केशरुहा विषभद्रा जयावहा ।
आवर्तकी वराङ्गी च जयाह्वा भद्रदन्तिका ॥ ५.१६१
अन्या दन्ती कटूष्णा च रेचनी क्रिमिहा परा ।
शूलकुष्ठामदोषघ्नी त्वगामयविनाशनी ॥ ५.१६२
रेचको जयपालश्च सारकस्तित्तिरीफलम् ।
दन्तीबीजं मलद्रावि ज्ञेयं स्याद्बीजरेचनी ॥ ५.१६३
कुम्भीबीजं कुम्भिनीबीजसंज्ञं घण्टाबीजं दन्तिनीबीजमुक्तम् ।
बीजान्ताख्यं शोधनी चक्रदन्त्यो वेदेन्द्वाख्यं तन्निकुम्भ्याश्च बीजम् ॥ ५.१६४
जैपालः कटुरुष्णश्च क्रिमिहारी विरेचनः ।
दीपनः कफवातघ्नो जठरामयशोधनः ॥ ५.१६५
उक्ता त्रिवृन्मालविका मसूरा श्यामार्धचन्द्रा विदला सुषेणी ।
कालिन्दिका सैव तु कालमेषी काली त्रिवेलावनिचन्द्रसंज्ञा ॥ ५.१६६
त्रिवृत्तिक्ता कटूष्णा च क्रिमिश्लेष्मोदरार्तिजित् ।
कुष्ठकण्डूव्रणान् हन्ति प्रशस्ता च विरेचने ॥ ५.१६७
रक्तान्यापि च कालिन्दी त्रिपुटा ताम्रपुष्पिका ।
कुलवर्णा मसूरी चाप्यमृता काकनासिका ॥ ५.१६८
रक्ता त्रिवृद्रसे तिक्ता कटूष्णा रेचनी च सा ।
ग्रहणीमलविष्टम्भहारिणी हितकारिणी ॥ ५.१६९
त्वचं त्वग्वल्कलं भृङ्गं वराङ्गं मुखशोधनम् ।
शकलं सैंहलं वन्यं सुरसं रामवल्लभम् ॥ ५.१७०
उत्कटं बहुगन्धं च विज्जुलं च वनप्रियम् ।
लाटपर्णं गन्धवल्कं वरं शीतं ग्रहक्षिती ॥ ५.१७१
त्वचं तु कटुकं शीतं कफकासविनाशनम् ।
शुक्रामशमनं चैव कण्ठशुद्धिकरं लघु ॥ ५.१७२
पत्रं तमालपत्रं च पत्रकं छदनं दलम् ।
पलाशमंशुकं वासस्तापसं सुकुमारकम् ॥ ५.१७३
वस्त्रं तमालकं रामं गोपनं वसनं तथा ।
तमालं सुरभिगन्धं ज्ञेयं सप्तदशाह्वयम् ॥ ५.१७४
पत्रकं लघु तिक्तोष्णं कफवातविषापहम् ।
वस्तिकण्डूतिदोषघ्नं मुखमस्तकशोधनम् ॥ ५.१७५
किञ्जल्कं कनकाह्वं च केसरं नागकेशरम् ।
चाम्पेयं नागकिञ्जल्कं नागीयं काञ्चनं तथा ॥ ५.१७६

सुवर्णं हेमकिञ्जल्कं रुक्मं हेमं च पिञ्जरम् ।
फणिपुन्नागयोगादि केसरं पञ्चभूह्वयम् ॥ ५.१७७
नागकेशरमल्पोष्णं लघु तिक्तं कफापहम् ।
वस्तिवातामयघ्नं च कण्ठशीर्षरुजापहम् ॥ ५.१७८
तवक्षीरं पयःक्षीरं यवजं गवयोद्भवम् ।
अन्यद्गोधूमजं चान्यत्पिष्टिकातण्डुलोद्भवम् ॥ ५.१७९
अन्यच्च तालसम्भूतं तालक्षीरादिनामकम् ।
वनगोक्षीरजं श्रेष्ठमभावेऽन्यदुदीरितम् ॥ ५.१८०
तवक्षीरं तु मधुरं शिशिरं दाहपित्तनुत् ।
क्षयकासकफश्वासनाशनं चास्रदोषनुत् ॥ ५.१८१
तालीसपत्रं तालीशं पत्राख्यं च शुकोदरम् ।
धात्रीपत्त्रं चार्कवेधं करिपत्रं घनच्छदम् ॥ ५.१८२
नीलं नीलाम्बरं तालं तालीपत्रं तलाह्वयम् ।
तालीसपत्रकस्येति नामान्याहुस्त्रयोदश ॥ ५.१८३
तालीसपत्रं तिक्तोष्णं मधुरं कफवातनुत् ।
कासहिक्काक्षयश्वासच्छर्दिदोषविनाशकृत् ॥ ५.१८४
स्याद्वंशरोचना वांशी तुङ्गक्षीरी तुगा शुभा ।
त्वक्क्षीरी वंशगा शुभ्रा वंशक्षीरी च वैणवी ॥ ५.१८५
त्वक्सारा कर्मरी श्वेतावंशकर्पूररोचने ।
तुङ्गा रोचनिका पिङ्गा नवेन्दुर्वंशशर्करा ॥ ५.१८६
स्याद्वंशरोचना रूक्षा कषाया मधुरा हिमा ।
रक्तशुद्धिकरी तापपित्तोद्रेकहरा शुभा ॥ ५.१८७
तवक्षीरे यवक्षीरे क्षीरे जातं गुणोत्तरम् ।
वंशक्षीरीसमं प्रोक्तं तदभावेऽन्यवस्तुजम् ॥ ५.१८८
गवयक्षीरजं क्षीरं सुस्निग्धं शीतलं लघु ।
सुगन्धि द्रावकं शुभ्रमन्यत्स्वल्पगुणं स्मृतम् ॥ ५.१८९
मञ्जिष्ठा हरिणी रक्ता गौरी योजनवल्लिका ।
समङ्गा विकसा पद्मा रोहिणी कालमेषिका ॥ ५.१९०
भण्डी चित्रलता चित्रा चित्राङ्गी जननी च सा ।
मण्डूकपर्णी विजया मञ्जूषा रक्तयष्टिका ॥ ५.१९१
क्षेत्रिणी चैव रागाढ्या भण्डीरी कालभाण्डिका ।
अरुणा ज्वरहन्त्री च छद्मा नागकुमारिका ॥ ५.१९२
भाण्डीरलतिका चैव रागाङ्गी वस्त्रभूषणा ।
त्रिंशाह्वया तथा प्रोक्ता मञ्जिष्ठा च भिषग्वरैः ॥ ५.१९३
मञ्जिष्ठा मधुरा स्वादे कषायोष्णा गुरुस्तथा ।
व्रणमेहज्वरश्लेष्मविषनेत्रामयापहा ॥ ५.१९४
चोलश्च योजनी कौञ्जी सिंहिली च चतुर्विधा ।
मञ्जिष्ठा चैव सा प्रोक्ता विलोमे चोत्तमोत्तमा ॥ ५.१९५
हरिद्रा हरिद्रञ्जनी स्वर्णवर्णा सुवर्णा शिवा वर्णिनी दीर्घरागा ।
हरिद्री च पीता वराङ्गी च गौरी जनिष्ठा वरा वर्णदात्री पवित्रा ॥ ५.१९६
हरिता रजनीनाम्नी विषघ्नी वरवर्णिनी ।
पिङ्गला वर्णदा चैव मङ्गल्या मङ्गला च सा ॥ ५.१९७
लक्ष्मी भद्रा शिफा शोफा शोभना सुभगाह्वया ।
श्यामा जयन्तिका द्वे च त्रिंशन्नामविलासिनी ॥ ५.१९८
हरिद्रा कटुतिक्तोष्णा कफवातास्रकुष्ठनुत् ।

मेहकण्डूव्रणान् हन्ति देहवर्णविधायिनी ॥ ५.१९९
अन्या दारुहरिद्रा च दार्वी पीतद्रु पीतिका ।
कालेयकं पीतदारु स्थिररागा च कामिनी ॥ ५.२००
कटङ्कटेरी पर्जन्या पीता दारुनिशा स्मृता ।
कालीयकं कामवती दारुपीता पचम्पचा ।
स्यात्कर्कटकिनी ज्ञेया प्रोक्ता सप्तदशाह्वया ॥ ५.२०१
तिक्ता दारुहरिद्रा तु कटूष्णा व्रणमेहनुत् ।
कण्डूविसर्पत्वग्दोषविषकर्णाक्षिदोषहा ॥ ५.२०२
लाक्षा खदिरका रक्ता रङ्गमाता पलङ्कषा ।
जतु च क्रिमिजा चैव द्रुमव्याधिरलक्तकः ॥ ५.२०३
पलाशी मुद्रणी दीप्तिर्जन्तुका गन्धमादनी ।
नीला द्रवरसा चैव पित्तारिर्मुनिभूह्वया ॥ ५.२०४
लाक्षा तिक्तकषाया स्यात्श्लेष्मपित्तार्तिदोषनुत् ।
विषरक्तप्रशमनी विषमज्वरनाशनी ॥ ५.२०५
अलक्तको जन्तुरसो रागो निर्भर्त्सनस्तथा ।
जननी जन्तुकारी च संधर्षा चक्रमर्दिनी ॥ ५.२०६
अलक्तकः सुतिक्तोष्णः कफवातामयापहः ।
कण्ठरुक्शमनो रुच्यो व्रणदोषार्तिनाशनः ॥ ५.२०७
लोध्रो रोध्रो भिल्लतरुश्चिल्लकः काण्डकीलकः ।
तिरीटो लोध्रको वृक्षः शम्बरो हस्तिरोध्रकः ॥ ५.२०८
तिल्वकः काण्डहीनश्च शावरो हेमपुष्पकः ।
भिल्ली शावरकश्चैव ज्ञेयः पञ्चदशाह्वयः ॥ ५.२०९
क्रमुकः पट्टिकारोध्रो वल्करोध्रो बृहद्दलः ।
जीर्णबुध्नो बृहद्वल्को जीर्णपत्रोऽक्षिभेषजः ॥ ५.२१०
शावरः श्वेतरोध्रश्च मार्जनो बहलत्वचः ।
पट्टी लाक्षाप्रसादश्च वल्कलो बाणभूह्वयः ॥ ५.२११
लोध्रद्वयं कषायं स्यात्शीतं वातकफास्रनुत् ।
चक्षुष्यं विषहृत्तत्र विशिष्टो वल्करोध्रकः ॥ ५.२१२
धातकी वह्निपुष्पी च ताम्रपुष्पी च धावनी ।
अग्निज्वाला सुभिक्षा च पार्वती बहुपुष्पिका ॥ ५.२१३
कुमुदा सीधुपुष्पी च कुञ्जरा मद्यवासिनी ।
गुच्छसङ्घादिपुष्पान्ता ज्ञेया सा लोध्रपुष्पिणी ।
तीव्रज्वाला वह्निशिखा मद्यपुष्पीन्द्रसम्मिता ॥ ५.२१४
धातकी कटुरुष्णा च मदकृद्विषनाशनी ।
प्रवाहिकातिसारघ्नी विसर्पव्रणनाशिनी ॥ ५.२१५
समुद्रनाम प्रथमं पश्चात्फलमुदाहरेत् ।
समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥ ५.२१६
फलं समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि ।
त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि ॥ ५.२१७
निर्विषापविषा चैव विविषा विषहा परा ।
विषहन्त्री विषाभावा ह्यविषा विषवैरिणी ॥ ५.२१८
निर्विषा तु कटुः शीता कफवातास्रदोषनुत् ।
अनेकविषदोषघ्नी व्रणसंरोपणी च सा ॥ ५.२१९
विषमाहेयममृतं गरलं दारदं गरम् ।
कालकूटं कालकूटे हरिद्रं रक्तशृङ्गकम् ॥ ५.२२०

नीलं च गरदं क्ष्वेडो घोरं हालाहलं हरम् ।
मरं हलाहलं शृङ्गी भूगरं चैकविंशतिः ॥ ५.२२१
अमृतं स्यात्वत्सनाभो विषमुग्रं महौषधम् ।
गरलं मरणं नागं स्तोककं प्राणहारकम् ।
गरलं स्थावरादि स्यात्प्रोक्तं चैकादशाह्वयम् ॥ ५.२२२
वत्सनाभोऽतिमधुरः सोष्णो वातकफापहः ।
कण्ठरुक्संनिपातघ्नः पित्तसंतापकारकः ॥ ५.२२३
स्थावरे विषजातीनां श्रेष्ठौ नागोग्रशृङ्गकौ ।
नागो देहकरे श्रेष्ठो लोहे चैवोग्रशृङ्गकः ॥ ५.२२४
विषस्याष्टादशभिदाश्चतुर्वर्गाश्च यत्पृथक् ।
तदत्र नोक्तमस्माभिर्ग्रन्थगौरवभीरुभिः ॥ ५.२२५
शटी शठी पलाशश्च षड्ग्रन्था सुव्रता वधूः ।
सुगन्धमूला गन्धाली शटिका च पलाशिका ॥ ५.२२६
सुभद्रा च तृणी दूर्वा गन्धा पृथुपलाशिका ।
सौम्या हिमोद्भवा गन्धवधूर्नागेन्दुसम्मिता ॥ ५.२२७
शटी सतिक्ताम्लरसा लघूष्णा रुचिप्रदा च ज्वरहारिणी च ।
कफास्रकण्डूव्रणदोषहन्त्री वक्त्रामयध्वंसकरी च सोक्ता ॥ ५.२२८
अन्या तु गन्धपत्रा स्यात्स्थूलास्या तिक्तकन्दका ।
वनजा शटिका वन्या स्तवक्षीर्यैकपत्त्रिका ॥ ५.२२९
गन्धपीता पलाशान्ता गन्धाढ्या गन्धपत्त्रिका ।
दीर्घपत्त्रा गन्धनिशा शरभूह्वा सुपाकिनी ॥ ५.२३०
गन्धपत्त्रा कटुः स्वादुस्तीक्ष्णोष्णा कफवातजित् ।
कासच्छर्दिज्वरान् हन्ति पित्तकोपं करोति च ॥ ५.२३१
समुद्रफेनं फेनश्च वार्धिफेनं पयोधिजम् ।
सुफेनमब्धिहिण्डीरं सामुद्रं सप्तनामकम् ॥ ५.२३२
समुद्रफेनं शिशिरं कषायं नेत्ररोगनुत् ।
कफकण्ठामयघ्नं च रुचिकृत्कर्णरोगहृत् ॥ ५.२३३
अफेनं खस्खसरसो निफेनं चाहिफेनकम् ।
अफेनं संनिपातघ्नं वृष्यं बल्यं च मोहदम् ॥ ५.२३४
चतुर्विधमफेनं स्यात्जारणं मारणं तथा ।
धारणं सारणं चैव क्रमाद्वक्ष्ये तु लक्षणम् ॥ ५.२३५
श्वेतं च जारणं प्रोक्तं कृष्णवर्णं च मारणम् ।
धारणं पीतवर्णं तु कर्बुरं सारणं तथा ॥ ५.२३६
जारणं जारयेदन्नं मारणं मृत्युदायकम् ।
धारणं च वयःस्तम्भं सारणं मलसारणम् ॥ ५.२३७
टङ्गणष्टङ्कणक्षारो रङ्गः क्षारो रसाधिकः ।
लोहद्रावी रसघ्नश्च सुभगो रङ्गदश्च सः ॥ ५.२३८
वर्तुलः कनकक्षारो मलिनो धातुवल्लभः ।
त्रयोदशाह्वयश्चायं कथितस्तु भिषग्वरैः ॥ ५.२३९
कथितष्टङ्कणक्षारः कटूष्णः कफनाशनः ।
स्थावरादिविषघ्नश्च कासश्वासापहारकः ॥ ५.२४०
द्वितीयं टङ्गणं श्वेतं श्वेतकं श्वेतटङ्गणम् ।
लोहशुद्धिकरं सिन्धुमालतीतीरसम्भवम् ।
शिवं च द्रावकं प्रोक्तं शितक्षारं दशाभिधम् ॥ ५.२४१
सुश्वेतं टङ्कणं स्निग्धं टूष्णं कफवातनुत् ।

आमक्षयापहृच्छ्वासविषकासमलापहम् ॥ ५.२४२
साकुरुण्डो ग्रन्थिफलो विकटो वस्त्रभूषणः ।
कुरुण्डः कर्बुरफलः सकुरुण्डश्च सप्तधा ॥ ५.२४३
साकुरुण्डः कषायश्च रुचिकृद्दीपनः परः ।
श्लेष्मवातापहारी च वस्त्ररञ्जनको लघुः ॥ ५.२४४
हिमावली च हृद्धात्री कुष्ठघ्नो गारकुष्ठकः ।
अङ्गारग्रन्थिको ग्रन्थी ग्रन्थिलो मुनिसंज्ञकः ॥ ५.२४५
हिमावली सरा तिक्ता प्लीहगुल्मोदरापहा ।
क्रिमिकुष्ठगुदात्युग्रखर्जूकण्डूतिहारिणी ॥ ५.२४६
हस्तिमदो गजमदो गजदानं मदस्तथा ।
कुम्भिमदो दन्तिमदो दानं द्वीपिमदोऽष्टधा ॥ ५.२४७
स्निग्धो हस्तिमदस्तिक्तः केश्योऽपस्मारनाशनः ।
विषहृत्कुष्ठकण्डूतिव्रणदद्रुविसर्पनुत् ॥ ५.२४८
स्वर्जिक्षारः स्वर्जिकश्च क्षारस्वर्जी सुखार्जिकः ।
सुवर्चिकः सुवर्ची च सुखवर्चा मुनिह्वयः ॥ ५.२४९
स्वर्जिकः कटुरुष्णश्च तीक्ष्णो वातकफार्तिनुत् ।
गुल्माध्मानक्रिमीन् हन्ति व्रणजाठरदोषनुत् ॥ ५.२५०
लवणारं लवणोत्थं लवणासुरजं च लवणभेदश्च ।
जलजं लवणक्षारं लवणं च क्षारलवणं च ॥ ५.२५१
लोणारक्षारमत्युष्णं तीक्ष्णं पित्तप्रवृद्धिदम् ।
क्षारं लवणमीषच्च वातगुल्मादिदोषनुत् ॥ ५.२५२
वज्रकं वज्रकक्षारं क्षारश्रेष्ठं विदारकम् ।
सारं चन्दनसारं च धूमोत्थं धूमजं गजाः ॥ ५.२५३
वज्रकं क्षारमत्युष्णं तीक्ष्णं क्षारं च रेचनम् ।
गुल्मोदरातिविष्टम्भशूलप्रशमनं सरम् ॥ ५.२५४
यवक्षारः स्मृतः पाक्यो यवजो यवसूचकः ।
यवशूको यवाह्वश्च यवापत्यं यवाग्रजः ॥ ५.२५५
यवक्षारः कटूष्णश्च कफवातोदरार्तिनुत् ।
आमशूलाश्मरीकृच्छ्रविषदोषहरः सरः ॥ ५.२५६
सर्वक्षारो बहुक्षारः समूहक्षारकस्तथा ।
स्तोमक्षारो महाक्षारो मलारिः क्षारमेलकः ॥ ५.२५७
सर्वक्षारो ह्यतिक्षारश्चक्षुष्यो वस्तिशोधनः ।
गुदावर्तक्रिमिघ्नश्च मलवस्त्रविशोधनः ॥ ५.२५८
मायाफलं मायिफलं च मायिका छिद्राफलं मायि च पञ्चनामकम् ।
मायाफलं वातहरं कटूष्णकं शैथिल्यसंकोचककेशकार्ष्ण्यदम् ॥ ५.२५९
इत्थं नानाद्रव्यसम्भारनामग्रामव्याख्यातद्गुणाख्यानपूर्वम् ।
वर्गं वीर्यध्वस्तरोगोपसर्गं बुद्ध्वा वैद्यो विश्ववन्द्यत्वमीयात् ॥ ५.२६०
साफल्याय किलैत्य यानि जनुषः कान्तारदूरान्तरात्स्वौजःपात्रविचारणाय विपणेर्मध्यं समध्यासते ।
तेषामाश्रयभूमिरेष भणितः पण्यौषधीनां बुधैर्वर्गो द्रव्यगुणाभिधाननिपुणैः पण्यादिवर्गात्मना ॥ ५.२६१
यः सौम्येन सदाशयेन कलयन् दिव्यागमानां जनैर्दुर्ग्राहं महिमानमाशु नुदते स्वं जग्मुषां दुर्गतीः ।
वर्गः पिप्पलिकादिरेष नृहरेस्तस्येह शस्यात्मनो ।
नामग्रामशिखामणौ खलु कृतौ षष्ठः प्रतिष्ठामगात् ॥ ५.२६२

शताह्वा चैव मिश्रेया शालिपर्णी समष्ठिला ।
बृहती कण्टकारी च द्विधा स्यात्पृश्निपर्णिका ॥ ६.१
द्विधा गोक्षुरकश्चैव यासो वासा शतावरी ।
धन्वयासद्वयं चाग्निदमनी वाकुची तथा ॥ ६.२
शणपुष्पी द्विधा चैव त्रिविधा शरपुङ्खिका ।
शणोऽम्बष्ठा द्विधा नीली द्विधा गोजिह्विका स्मृता ॥ ६.३
अपामार्गद्वयं पञ्च बला राष्ट्री महादि च ।
हयगन्धा च हपुषा शतावर्यौ द्विधा मते ॥ ६.४
एलवालुकतैरण्यौ कलिकारी जयन्तिका ।
काकमाची श्रुतश्रेणी भृङ्गराजस्त्रिधा मतः ॥ ६.५
काकजङ्घा त्रिधा चुञ्चुः त्रिविधः सिन्दुवारकः ।
भेण्डा स्यात्पुत्रदा चैव तक्रा स्वर्णुलिकाह्वया ॥ ६.६
खस्खसः शिमृडी चैव ज्ञेयो वन्यकुसुम्भकः ।
द्वयाहुल्यः कासमर्दश्च रविपत्री द्विधाम्लिका ॥ ६.७
अजगन्धादित्यभक्ता विषमुष्टिर्द्विधा परा ।
कालाञ्जनी द्विकार्पासी द्विविधः कोकिलाक्षकः ॥ ६.८
सातला कामवृद्धिश्च चक्रमर्दोऽथ झिञ्झिरा ।
शताह्वाद्याः क्रमेणैव क्षुपाः प्रोक्ता यथागुणाः ॥ ६.९
शताह्वा शतपुष्पा च मिसिर्घोषा च पोतिका ।
अहिच्छत्त्राप्यवाक्पुष्पी माधवी कारवी शिफा ॥ ६.१०
सङ्घातपत्रिका छत्त्रा वज्रपुष्पा सुपुष्पिका ।
शतप्रसूना बहला पुष्पाह्वा शतपत्त्रिका ॥ ६.११
वनपुष्पा भूरिपुष्पा सुगन्धा सूक्ष्मपत्त्रिका ।
गन्धारिकातिच्छत्रा च चतुर्विंशतिनामका ॥ ६.१२
शताह्वा तु कटुस्तिक्ता स्निग्धा श्लेष्मातिसारनुत् ।
ज्वरनेत्रव्रणघ्नी च वस्तिकर्मणि शस्यते ॥ ६.१३
मिश्रेया तालपर्णी च तालपत्रा मिशिस्तथा ।
शालेया स्याच्छीतशिवा शालीना वनजा च सा ॥ ६.१४
अवाक्पुष्पी मधुरिका छत्त्रा संहितपुष्पिका ।
सुपुष्पा सुरसा वन्या ज्ञेया पञ्चदशाह्वया ॥ ६.१५
मिश्रेया मधुरा स्निग्धा कटुः कफहरा परा ।
वातपित्तोत्थदोषघ्नी प्लीहजन्तुविनाशनी ॥ ६.१६
स्याच्छालिपर्णी सुदला सुपत्त्रिका स्थिरा च सौम्या कुमुदा गुहा ध्रुवा ।
विदारिगन्धांशुमती सुपर्णिका स्याद्दीर्घमूलापि च दीर्घपत्त्रिका ॥ ६.१७
वातघ्नी पीतिनी तन्वी सुधा सर्वानुकारिणी ।
शोफघ्नी सुभगा देवी निश्चला व्रीहिपर्णिका ॥ ६.१८
सुमूला च सुरूपा च सुपत्त्रा शुभपत्त्रिका ।
शालिपर्णी शालिदला स्यादूनत्रिंशदाह्वया ॥ ६.१९
शालिपर्णी रसे तिक्ता गुरूष्णा वातदोषनुत् ।
विषमज्वरमेहार्शःशोफसंतापनाशनी ॥ ६.२०
समष्ठिला च भण्डीरो नद्याम्रश्चाम्रगन्धधृक् ।
काकाम्रः कण्टकिफलोऽप्युपदंशो मुनिह्वयः ॥ ६.२१
नद्याम्रः कटुरुष्णश्च रुच्यो मुखविशोधनः ।
कफवातप्रशमनो दाहकृद्दीपनः परः ॥ ६.२२

बृहती महतिक्रान्ता वार्त्ताकी सिंहिकाकुली ।
राष्ट्रिका स्थलकण्टा च भण्टाकी तु महोटिका ॥ ६.२३
बहुपत्री कण्टतनुः कण्टालुः कट्फला तथा ।
डोरली वनवृन्ताकी नामान्यस्याश्चतुर्दश ॥ ६.२४
बृहती कटुतिक्तोष्णा वातजिज्ज्वरहारिणी ।
अरोचकामकासघ्नी श्वासहृद्रोगनाशनी ॥ ६.२५
बृहत्यन्या सर्पतनुः क्षविका पीततण्डुला ।
पुत्रप्रदा बहुफला गोधिनीति षडाह्वया ॥ ६.२६
क्षविका बृहती तिक्ता कटुरुष्णा च तत्समा ।
युक्त्या द्रव्यविशेषेण धारासंस्तम्भसिद्धिदा ॥ ६.२७
श्वेतान्या श्वेतबृहती ज्ञेया श्वेतमहोटिका ।
श्वेतसिंही श्वेतफला श्वेतवार्त्ताकिनी च षट् ॥ ६.२८
विज्ञेया श्वेतबृहती वातश्लेष्मविनाशनी ।
रुच्या चाञ्जनयोगेन नानानेत्रामयापहा ॥ ६.२९
कण्टकारी कण्टकिनी दुःस्पर्शा दुष्प्रधर्षिणी ।
क्षुद्रा व्याघ्री निदिग्धा च धाविनी क्षुद्रकण्टिका ॥ ६.३०
बहुकण्टा क्षुद्रकण्टा ज्ञेया क्षुद्रफला च सा ।
कण्टारिका चित्रफला स्याच्चतुर्दशसंज्ञका ॥ ६.३१
कण्टकारी कटूष्णा च दीपनी श्वासकासजित् ।
प्रतिश्यायार्तिदोषघ्नी कफवातज्वरार्तिनुत् ॥ ६.३२
सितकण्टारिका श्वेता क्षेत्रदूती च लक्ष्मणा ।
सितसिंही सितक्षुद्रा क्षुद्रवार्ताकिनी सिता ॥ ६.३३
क्लिन्ना च कटुवार्त्ताकी क्षेत्रजा कपटेश्वरी ।
स्यान्निःस्नेहफला रामा सितकण्टा महौषधी ॥ ६.३४
गर्दभी चन्द्रिका चान्द्री चन्द्रपुष्पा प्रियंकरी ।
नाकुली दुर्लभा रास्ना द्विरेषा द्वादशाह्वया ॥ ६.३५
श्वेतकण्टारिका रुच्या कटूष्णा कफवातनुत् ।
चक्षुष्या दीपनी ज्ञेया प्रोक्ता रसनियामिका ॥ ६.३६
स्यात्पृश्निपर्णी कलसी महागुहा शृगालविन्ना धमनी च मेखला ।
लाङ्गलिका क्रोष्टुकपुच्छिका गुहा शृगालिका सैव च सिंहपुच्छिका ॥ ६.३७
पृथक्पर्णी दीर्घपर्णी दीर्घा क्रोष्टुकमेखला ।
चित्रपर्ण्युपचित्रा च श्वपुच्छाष्टादशाह्वया ॥ ६.३८
पृश्निपर्णी कटूष्णाम्ला तिक्तातीसारकासजित् ।
वातरोगज्वरोन्मादव्रणदाहविनाशनी ॥ ६.३९
स्याद्गोक्षुरो गोक्षुरकः क्षुराङ्गः श्वदंष्ट्रकः कण्टकभद्रकण्टकौ ।
स्याद्व्यालदंष्ट्रः क्षुरको महाङ्गो दुश्चक्रमश्च क्रमशो दशाह्वः ॥ ६.४०
क्षुद्रोऽपरो गोक्षुरकस्त्रिकण्टकः कण्टी षडङ्गो बहुकण्टकः क्षुरः ।
गोकण्टकः कण्टफलः पलंकषः क्षुद्रक्षुरो भक्षटकश्चणद्रुमः ॥ ६.४१
स्थलशृङ्गाटकश्चैव वनशृङ्गाटकस्तथा ।
इक्षुगन्धः स्वादुकण्टः पर्यायाः षोडश स्मृताः ॥ ६.४२
स्यातामुभौ गोक्षुरकौ सुशीतलौ बलप्रदौ तौ मधुरौ च बृंहणौ ।
कृच्छ्राश्मरीमेहविदाहनाशनौ रसायनौ तत्र बृहद्गुणोत्तरः ॥ ६.४३
यासो यवासो बहुकण्टकोऽल्पकः क्षुद्रेङ्गुदी रोदनिका च कच्छुरा ।
स्याद्बालपत्रोऽधिककण्टकः खरः सुदूरमूली विषकण्टकोऽपि सः ॥ ६.४४
अनन्तस्तीक्ष्णकण्टश्च समुद्रान्तो मरूद्भवः ।

दीर्घमूलः सूक्ष्मपत्त्रो विषघ्नः कण्टकालुकः ।
त्रिपर्णिका च गान्धारी चैकविंशतिनामभिः ॥ ६.४५
यासो मधुरतिक्तोऽसौ शीतः पित्तार्तिदाहजित् ।
बलदीपनकृत्तृष्णाकफच्छर्दिविसर्पजित् ॥ ६.४६
वासकः सिंहिका वासा भिषङ्माता वसादनी ।
आटरूषः सिंहमुखी सिंही कण्ठीरवी वृषः ॥ ६.४७
शितपर्णी वाजिदन्ता नासा पञ्चमुखी तथा ।
सिंहपर्णी मृगेन्द्राणी नामान्यस्यास्तु षोडश ॥ ६.४८
वासा तिक्ता कटुः शीता कासघ्नी रक्तपित्तजित् ।
कामलाकफवैकल्यज्वरश्वासक्षयापहा ॥ ६.४९
शितावरी शितावरः सूच्याह्वः सूचिपत्त्रकः ।
श्रीवारकः शिखी बभ्रुः स्वस्तिकः सुनिषण्णकः ॥ ६.५०
कुरुटः कुक्कुटः सूचीदलः श्वेताम्बरोऽपि सः ।
मेधाकृद्ग्राहकश्चेति ज्ञेयः पञ्चदशाह्वयः ॥ ६.५१
शितावरस्तु संग्राही कषायोष्णस्त्रिदोषजित् ।
मेधारुचिप्रदो दाहज्वरहारी रसायनः ॥ ६.५२
धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा ।
दुरालभा च दुःस्पर्शा धन्वी धन्वयवासकः ॥ ६.५३
प्रबोधनी सूक्ष्मदला विरूपा दुरभिग्रहा ।
दुर्लभा दुष्प्रधर्षा च स्याच्चतुर्दशसंज्ञका ॥ ६.५४
दुरालम्भा कटुस्तिक्ता सोष्णा क्षाराम्लिका तथा ।
मधुरा वातपित्तघ्नी ज्वरगुल्मप्रमेहजित् ॥ ६.५५
अन्या क्षुद्रदुरालम्भा मरुस्था मरुसम्भवा ।
विशारदाजभक्षा स्यादजादन्युष्ट्रभक्षिका ॥ ६.५६
कषाया कफहृच्चैव ग्राहिणी करभप्रिया ।
करभादनिका चेति विज्ञेया द्वादशाभिधा ॥ ६.५७
दुरालम्भा द्वितीया च गौल्याम्लज्वरकुष्ठनुत् ।
श्वासकासभ्रमघ्नी च पारदे शुद्धिकारिका ॥ ६.५८
अथाग्निदमनी वह्निदमनी बहुकण्टका ।
वल्लिकण्टारिका गुच्छफला क्षुद्रफला च सा ॥ ६.५९
विज्ञेया क्षुद्रदुःस्पर्शा क्षुद्रकण्टारिका तथा ।
मर्त्येन्द्रमाता दमनी स्यादित्येषा दशाह्वया ॥ ६.६०
कटूष्णा चाग्निदमनी रूक्षा वातकफापहा ।
रुचिकृद्दीपनी हृद्या गुल्मप्लीहापहा भवेत् ॥ ६.६१
वाकुची सोमराजी च सोमवल्ली सुवल्लिका ।
सिता सितावरी चन्द्रलेखा चान्द्री च सुप्रभा ॥ ६.६२
कुष्ठहन्त्री च काम्बोजी प्रतिगन्धा च वल्गुजा ।
स्मृता चन्द्राभिधा राजी काल्माषी च तथैन्दवी ॥ ६.६३
कुष्ठदोषापहा चैव कान्तिदा वल्गुजा तथा ।
चन्द्राभिधा प्रभायुक्ता विंशतिः स्यात्तु नामतः ॥ ६.६४
वाकुची कटुतिक्तोष्णा क्रिमिकुष्ठकफापहा ।
त्वग्दोषविषकण्डूतिखर्जुप्रशमनी च सा ॥ ६.६५
शणपुष्पी बृहत्पुष्पी शणिका शणघण्टिका ।
पीतपुष्पी स्थूलफला लोमशा माल्यपुष्पिका ॥ ६.६६
शणपुष्पी रसे तिक्ता कषाया कफवातजित् ।

अजीर्णज्वरदोषघ्नी वमनी रक्तदोषनुत् ॥ ६.६७
द्वितीयान्या सूक्ष्मपुष्पा स्यात्क्षुद्रशणपुष्पिका ।
विष्टिका सूक्ष्मपर्णी च बाणाह्वा सूक्ष्मघण्टिका ।
शणपुष्पी क्षुद्रतिक्ता वम्या रसनियामिका ॥ ६.६८
तृतीयान्या वृत्तपर्णी श्वेतपुष्पा महासिता ।
सा महाश्वेतघण्टी च सा महाशणपुष्पिका ॥ ६.६९
महाश्वेता कषायोष्णा शस्ता रसनियामिका ।
कुतूहलेषु च प्रोक्ता मोहनस्तम्भनादिषु ॥ ६.७०
शरपुङ्खा काण्डपुङ्खा बाणपुङ्खेषुपुङ्खिका ।
ज्ञेया सायकपुङ्खा च इषुपुङ्खा च षड्विधा ॥ ६.७१
शराभिधा च पुङ्खा स्याच्छ्वेताढ्या सितसायका ।
सितपुङ्खा श्वेतपुङ्खा शुभ्रपुङ्खा च पञ्चधा ॥ ६.७२
शरपुङ्खा कटूष्णा च क्रिमिवातरुजापहा ।
श्वेता त्वेषा गुणाढ्या स्यात्प्रशस्ता च रसायने ॥ ६.७३
अन्या तु कण्टपुङ्खा स्यात्कण्टालुः कण्टपुङ्खिका ।
कण्टपुङ्खा कटूष्णा च कृमिशूलविनाशनी ॥ ६.७४
शणस्तु माल्यपुष्पः स्याद्वमनः कटुतिक्तकः ।
निशावनो दीर्घशाखस्त्वक्सारो दीर्घपल्लवः ।
शणस्त्वम्लः कषायश्च मलगर्भास्रपातनः ।
वान्तिकृद्वातकफनुज्ज्ञेयस्तीव्राङ्गमर्दजित् ॥ ६.७५
अम्बष्ठाम्बालिकाम्बाला शठाम्बाम्बष्ठिकाम्बिका ।
अम्बा च माचिका चैव दृढवल्का मयूरिका ॥ ६.७६
गन्धपत्त्री चित्रपुष्पी श्रेयसी मुखवाचिका ।
छिन्नपत्त्रा भूरिमल्ली विज्ञेया षोडशाह्वया ॥ ६.७७
अम्बष्ठा सा कषायाम्ला कफकण्ठरुजापहा ।
वातामयबलासघ्नी रुचिकृद्दीपनी परा ॥ ६.७८
नीली नीला नीलिनी नीलपत्त्री तुत्था राज्ञी नीलिका नीलपुष्पी ।
काली श्यामा शोधनी श्रीफला च ग्राम्या भद्रा भारवाही च मोचा ॥ ६.७९
कृष्णा व्यञ्जनकेशी च रञ्जनी च महाफला ।
असिता क्लीतनी नीलकेशी चारटिका मता ॥ ६.८०
गन्धपुष्पा श्यामलिका रङ्गपत्त्री महाबला ।
स्थिररङ्गा रङ्गपुष्पी स्यादेषा त्रिंशदाह्वया ॥ ६.८१
नीली तु कटुतिक्तोष्णा केश्या कासकफामनुत् ।
मरुद्विषोदरव्याधिगुल्मजन्तुज्वरापहा ॥ ६.८२
अन्या चैव महानील्यमला राजनीलिका ।
तुत्था श्रीफलिका मेला केशार्हा भृशपत्त्रिका ॥ ६.८३
महानीली गुणाढ्या स्याद्रङ्गश्रेष्ठा सुवीर्यदा ।
पूर्वोक्तनीलिकादेश्या सगुणा सर्वकर्मसु ॥ ६.८४
गोजिह्वा खरपत्त्री स्यात्प्रतना दार्विका तथा ।
अधोमुखा धेनुजिह्वा अधःपुष्पी च सप्तधा ॥ ६.८५
गोजिह्वा कटुका तीव्रा शीतला पित्तनाशनी ।
व्रणसंरोपणी चैव सर्वदन्तविषार्तिजित् ॥ ६.८६
अपामार्गस्तु शिखरी किणिही खरमञ्जरी ।
दुर्ग्रहश्चाप्यधःशल्यः प्रत्यक्पुष्पी मयूरकः ॥ ६.८७
काण्डकण्टः शैखरिको मर्कटी दुरभिग्रहः ।

वशिरश्च पराक्पुष्पी कण्टी मर्कटपिप्पली ॥ ६.८८
कटुर्माञ्जरिको नन्दी क्षवकः पङ्क्तिकण्टकः ।
मालाकण्टश्च कुब्जश्च त्रयोविंशतिनामकः ॥ ६.८९
अपामार्गस्तु तिक्तोष्णः कटुश्च कफनाशनः ।
अर्शःकण्डूदरामघ्नो रक्तहृद्ग्राहि वान्तिकृत् ॥ ६.९०
अन्यो रक्तो ह्यपामार्गः क्षुद्रापामार्गकस्तथा ।
आघट्टको दुग्धनिका रक्तबिन्दवल्पपत्रिका ॥ ६.९१
रक्तोऽपामार्गकः शीतः कटुकः कफवातनुत् ।
व्रणकण्डूविषघ्नश्च संग्राही वान्तिकृत्परः ॥ ६.९२
बला समङ्गोदकिका च भद्रा भद्रोदनी स्यात्खरकाष्ठिका च ।
कल्याणिनी भद्रबला च मोटा वाटी बलाढ्येति च रुद्रसंज्ञा ॥ ६.९३
बलातितिक्ता मधुरा पित्तातीसारनाशनी ।
बलवीर्यप्रदा पुष्टिकफरोगविशोधनी ॥ ६.९४
महासमङ्गोदनिका बलाह्वया वृक्षारुहा वृद्धिबलाक्षतण्डुला ।
भुजंगजिह्वापि च शीतपाकिनी शीता बला शीतवरा बलोत्तरा ॥ ६.९५
खिरिहिट्टी च बल्या च ललज्जिह्वा त्रिपञ्चधा ।
महासमङ्गा मधुरा अम्ला चैव त्रिदोषहा ।
युक्त्या बुधैः प्रयोक्तव्या ज्वरदाहविनाशनी ॥ ६.९६
महाबला ज्येष्ठबला कटंभरा केशारुहा केसरिका मृगादनी ।
स्याद्वर्षपुष्पापि च केशवर्धनी पुरासणी देवसहा च सारिणी ॥ ६.९७
सहदेवी पीतपुष्पी देवार्हा गन्धवल्लरी ।
मृगा मृगरसा चेति ज्ञेया सप्तदशाह्वया ॥ ६.९८
महाबला तु हृद्रोगवातार्शःशोफनाशनी ।
शुक्रवृद्धिकरी बल्या विषमज्वरहारिणी ॥ ६.९९
बलिकातिबला बल्या विकङ्कता वाट्यपुष्पिका घण्टा ।
शीता च शीतपुष्पा भूरिबला वृष्यगन्धिका दशधा ॥ ६.१००
तिक्ता कटुश्चातिबला वातघ्नी क्रिमिनाशनी ।
दाहतृष्णाविषछर्दिक्लेदोपशमनी परा ॥ ६.१०१
भद्रोदनी नागबला खरगन्धा चतुष्फला ।
महोदया महाशाखा महापत्त्रा महाफला ॥ ६.१०२
विश्वदेवा तथारिष्टा खर्वा ह्रस्वा गवेधुका ।
देवदण्डा महादण्डा घाटेत्याह्वास्तु षोडश ॥ ६.१०३
मधुराम्ला नागबला कषायोष्णा गुरुः स्मृता ।
कण्डूतिकुष्ठवातघ्नी व्रणपित्तविकारजित् ॥ ६.१०४
महाराष्ट्री तु सम्प्रोक्ता शारदी तोयपिप्पली ।
मच्छादनी मच्छगन्धा लाङ्गली शकुलादनी ॥ ६.१०५
अग्निज्वाला चित्रपत्त्री प्राणदा जलपिप्पली ।
तृणशीता बहुशिखा स्यादित्येषा त्रयोदश ॥ ६.१०६
महाराष्ट्री कटुस्तीक्ष्णा कषाया मुखशोधनी ।
व्रणकीटादिदोषघ्नी रसदोषनिबर्हणी ॥ ६.१०७
अश्वगन्धा वाजिगन्धा कम्बुकाष्ठा वराहिका ।
वराहकर्णी तुरगी वनजा वाजिनी हयी ॥ ६.१०८
पुष्टिदा बलदा पुण्या हयगन्धा च पीवरा ।
पलाशपर्णी वातघ्नी श्यामला कामरूपिणी ॥ ६.१०९
कालप्रियकरी बल्या गन्धपत्त्री हयप्रिया ।

वराहपत्री विज्ञेया त्रयोविंशतिनामका ॥ ६.११०
अश्वगन्धा कटूष्णा स्यात्तिक्ता च मदगन्धिका ।
बल्या वातहरा हन्ति कासश्वासक्षयव्रणान् ॥ ६.१११
हपुषा विपुषा विस्रा विस्रगन्धा विगन्धिका ।
अन्या चासौ स्वल्पफला कच्छूघ्नी ध्वाङ्क्षनाशनी ॥ ६.११२
प्लीहशत्रुर्विषघ्नी च कफघ्नी चापराजिता ।
पूर्वा तु पञ्चनाम्नी स्यादपरा सप्तधाभिधा ॥ ६.११३
हपुषा कटुतिक्तोष्णा गुरुः श्लेष्मबलासजित् ।
प्रदरोदरविड्बन्धशूलगुल्मार्शसां हरा ॥ ६.११४
शतावरी शतपदी पीवरीन्दीवरी वरी ।
भीरुर्द्वीप्या द्वीपिशत्रुर्द्वीपिकामरकण्टिका ॥ ६.११५
सूक्ष्मपत्रा सुपत्रा च बहुमूला शताह्वया ।
नारायणी स्वादुरसा शताह्वा लघुपर्णिका ॥ ६.११६
आत्मशल्या जटामूला शतवीर्या महौदनी ।
मधुरा शतमूला च केशिका शतनेत्रिका ॥ ६.११७
विश्वाख्या वैष्णवी कार्ष्णी वासुदेवी वरीयसी ।
दुर्मरा तेजवल्ली च स्यात्त्रयस्त्रिंशदाह्वया ॥ ६.११८
महाशतावरी वीरा तुङ्गिनी बहुपत्त्रिका ।
सहस्रवीर्या सुरसा महापुरुषदन्तिका ॥ ६.११९
ऊर्ध्वकण्टा महावीर्या फणिजिह्वा महाशता ।
शतवीर्या सुवीर्या च नामान्यस्यास्त्रयोदश ॥ ६.१२०
शतावर्यौ हिमे वृष्ये मधुरे पित्तजित्परे ।
कफवातहरे तिक्ते महाश्रेष्ठे रसायने ॥ ६.१२१
शतावरीद्वयं वृष्यं मधुरं पित्तजिद्धिमम् ।
महती कफवातघ्नी तिक्ता श्रेष्ठा रसायने ।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ ६.१२२
एलवालुकमालूकं वालुकं हरिवालुकम् ।
एल्वालुकं कपित्थं च दुर्वर्णं प्रसरं दृढम् ॥ ६.१२३
एलागन्धिकमेलाह्वं गुप्तगन्धि सुगन्धिकम् ।
एलाफलं च विज्ञेयं द्विःसप्ताह्वयमुच्यते ॥ ६.१२४
एलवालुकमत्युग्रं कषायं कफवातनुत् ।
मूर्छार्तिज्वरदाहांश्च नाशयेद्रोचनं परम् ॥ ६.१२५
तैरिणी तेरणस्तेरः कुनीली नामतश्चतुः ।
तेरणः शिशिरस्तिक्तो व्रणघ्नोऽरुणरङ्गदः ॥ ६.१२६
कलिकारी लाङ्गलिनी हलिनी गर्भपातिनी ।
दीप्तिर्विशल्याग्निमुखी हली नक्तेन्दुपुष्पिका ॥ ६.१२७
विद्युज्ज्वालाग्निजिह्वा च व्रणहृत्पुष्पसौरभा ।
स्वर्णपुष्पा वह्निशिखा स्यादेषा षोडशाह्वया ॥ ६.१२८
कलिकारी कटूष्णा च कफवातनिकृन्तनी ।
गर्भान्तःशल्यनिष्कासकारिणी सारिणी परा ॥ ६.१२९
जयन्ती तु बलामोटा हरिता च जया तथा ।
विजया सूक्ष्ममूला च विक्रान्ता चापराजिता ॥ ६.१३०
ज्ञेया जयन्ती गलगण्डहारी तिक्ता कटूष्णानिलनाशनी च ।
भूतापहा कण्ठविशोधनी च कृष्णा तु सा तत्र रसायनी स्यात् ॥ ६.१३१
काकमाची ध्वाङ्क्षमाची वायसाह्वा च वायसी ।

सर्वतिक्ता बहुफला कट्फला च रसायनी ॥ ६.१३२
गुच्छफला काकमाता स्वादुपाका च सुन्दरी ।
वरा चन्द्राविणी चैव मत्स्याक्षी कुष्ठनाशनी ।
तिक्तिका बहुतिक्ता च नाम्नामष्टादश स्मृताः ॥ ६.१३३
काकमाची कटुस्तिक्ता रसोष्णा कफनाशनी ।
शूलार्शःशोफदोषघ्नी कुष्ठकण्डूतिहारिणी ॥ ६.१३४
श्रुतश्रेणी द्रवन्ती च न्यग्रोधी मूषिकाह्वया ।
चित्रा मूषकमारी च प्रत्यक्श्रेणी च शम्बरी ॥ ६.१३५
श्रुतश्रेणी च चक्षुष्या कटुराखुविषापहा ।
व्रणदोषहरा चैव नेत्रामयनिकृन्तनी ॥ ६.१३६
मार्कवो भृङ्गराजश्च भृङ्गाह्वः केशरञ्जनः ।
पितृप्रियो रङ्गकश्च केश्यः कुन्तलवर्धनः ॥ ६.१३७
पीतोऽन्यः स्वर्णभृङ्गारो हरिवासो हरिप्रियः ।
देवप्रियो वन्दनीयः पवनश्च षडाह्वयः ॥ ६.१३८
नीलस्तु भृङ्गराजोऽन्यो महानीलस्तु नीलकः ।
महाभृङ्गो नीलपुष्पः श्यामलश्च षडाह्वयः ॥ ६.१३९
भृङ्गराजास्तु चक्षुष्यास्तिक्तोष्णाः केशरञ्जनाः ।
कफशोफविषघ्नाश्च तत्र नीलो रसायनः ॥ ६.१४०
काकजङ्घा ध्वाङ्क्षजङ्घा काकाह्वा साथ वायसी ।
पारावतपदी दासी नदीकान्ता सुलोमशा ॥ ६.१४१
काकजङ्घा तु तिक्तोष्णा क्रिमिव्रणकफापहा ।
बाधिर्याजीर्णजित्जीर्णविषमज्वरहारिणी ॥ ६.१४२
चुञ्चुश्च विजला चञ्चुः कलभी वीरपत्त्रिका ।
चुञ्चुरश्चुञ्चुपत्त्रश्च सुशाकः क्षेत्रसम्भवः ॥ ६.१४३
चुञ्चुस्तु मधुरा तीक्ष्णा कषाया मलशोषणी ।
गुल्मोदरविबन्धार्शोग्रहणीरोगहारिणी ॥ ६.१४४
बृहच्चुञ्चुर्विषारिः स्यान्महाचुञ्चुः सुचुञ्चुका ।
स्थूलचुञ्चुर्दीर्घपत्त्री दिव्यगन्धा च सप्तधा ॥ ६.१४५
महाचुञ्चुः कटूष्णा च कषाया मलरोधनी ।
गुल्मशूलोदरार्शआर्तिविषघ्नी च रसायनी ॥ ६.१४६
क्षुद्रचुञ्चुः सुचुञ्चुः स्याच्चुञ्चुः शुनकचुञ्चुका ।
त्वक्सारभेदिनी क्षुद्रा कटुका चिरपत्त्रिका ॥ ६.१४७
क्षुद्रचुञ्चुस्तु मधुरा कटूष्णा च कषायिका ।
दीपनी शूलगुल्मार्शःशमनी च विबन्धकृत् ॥ ६.१४८
चुञ्चुबीजं कटूष्णं च गुल्मशूलोदरार्तिजित् ।
विषत्वग्दोषकण्डूतिखर्जूकुष्ठविषापहम् ॥ ६.१४९
सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः ।
सूरसाधनको नेता सिद्धकश्चार्थसिद्धकः ॥ ६.१५०
सिन्दुवारः कटुस्तिक्तः कफवातक्षयापहः ।
कुष्ठकण्डूतिशमनः शूलहृत्कासिसिद्धिदः ॥ ६.१५१
सुगन्धान्या शीतसहा निर्गुण्डी नीलसिन्दुकः ।
सिन्दूकश्चपिका भूतकेशीन्द्राणी च नीलिका ॥ ६.१५२
कटूष्णा नीलनिर्गुण्डी तिक्ता रूक्षा च कासजित् ।
श्लेष्मशोफसमीरार्तिप्रदराध्मानहारिणी ॥ ६.१५३
शेफालिका तु सुवहा शुक्लाङ्गी शीतमञ्जरी प्रोक्ता ।

अपराजिता च विजया वातारिर्भूतकेशी च ॥ ६.१५४
शेफालिः कटुतिक्तोष्णा रूक्षा वातक्षयापहा ।
स्यादङ्गसंधिवातघ्नी गुदवातादिदोषनुत् ॥ ६.१५५
भेण्डा भिण्डातिका भिण्डो भिण्डकः क्षेत्रसम्भवः ।
चतुष्पदश्चतुष्पुण्ड्रः सुशाकश्चाम्लपत्त्रकः ॥ ६.१५६
करपर्णो वृत्तबीजो भवेदेकादशाह्वयः ।
भेण्डा त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ॥ ६.१५७
पुत्रदा गर्भदात्री च प्रजादापत्यदा च सा ।
सृष्टिप्रदा प्राणिमाता तापसद्रुमसंनिभा ॥ ६.१५८
पुत्रदा मधुरा शीता नारीपुष्पादिदोषहा ।
पित्तदाहश्रमहरा गर्भसम्भूतिदायिका ॥ ६.१५९
तक्राह्वा तक्रभक्षा तु तक्रपर्यायवाचका ।
पञ्चाङ्गुली सिताभा स्यादेषा पञ्चाभिधा स्मृता ।
तक्रा कटुः क्रिमिघ्नी स्याद्व्रणनिर्मूलिनी च सा ॥ ६.१६०
स्वर्णुली हेमपुष्पी स्यात्स्वर्णपुष्पध्वजा तथा ।
स्वर्णुली कटुका शीता कषाया च व्रणापहा ॥ ६.१६१
खस्खसः सूक्ष्मबीजः स्यात्सुबीजः सूक्ष्मतण्डुलः ।
खस्खसो मधुरः पाके कान्तिवीर्यबलप्रदः ॥ ६.१६२
शिमृडी मतिदा प्रोक्ता बल्या पङ्गुत्वहारिणी ।
द्रवत्पत्त्री च वातघ्नी गुच्छपुष्पी च सप्तधा ॥ ६.१६३
शिमृडी कटुरुष्णा च वातहृत्पृष्ठशूलहा ।
युक्त्या रसायने योग्या देहदार्ढ्यकरी च सा ॥ ६.१६४
ज्ञेयोऽरण्यकुसुम्भः स्यात्कौसुम्भश्चाग्निसम्भवः ।
कौसुम्भः कटुकः पाके श्लेष्महृद्दीपनश्च सः ॥ ६.१६५
आहुल्यं हलुराख्यं च करं तरवटं तथा ।
शिम्बीफलं सुपुष्पं स्यादर्बरं दन्तकाष्ठकम् ॥ ६.१६६
हेमपुष्पं तथा पीतपुष्पं काञ्चनपुष्पकम् ।
नृपमङ्गल्यकं चैव शरत्पुष्पं त्रिरेकधा ॥ ६.१६७
आहुल्यं तिक्तशीतं स्याच्चक्षुष्यं पित्तदोषनुत् ।
मुखरुक्कुष्ठकण्डूतिजन्तुशूलव्रणापहम् ॥ ६.१६८
आहुल्यं कुष्ठकेतुर्मार्कण्डीयं महौषधम् ।
आहुल्यं तिक्तरसं ज्वरकुष्ठामसिध्मनुत् ॥ ६.१६९
कासमर्दोऽरिमर्दश्च कासारिः कासमर्दकः ।
कालः कनक इत्युक्तो जारणो दीपकश्च सः ॥ ६.१७०
कासमर्दः सतिक्तोष्णो मधुरः कफवातनुत् ।
अजीर्णकासपित्तघ्नः पाचनः कण्ठशोधनः ॥ ६.१७१
आदित्यपत्त्रोऽर्कदलार्कपत्त्रः स्यात्सूक्ष्मपत्त्रस्तपनच्छदश्च ।
कुष्ठारिरर्को विटपः सुपत्त्रो रविप्रियो रश्मिपतिश्च रुद्रः ॥ ६.१७२
आदित्यपत्त्रः कटुरुष्णवीर्यः कफापहो वातरुजापहश्च ।
संदीपनो जाठरगुल्महारी ज्ञेयः स चारोचननाशकश्च ॥ ६.१७३
श्वेताम्ली त्वम्बिका प्रोक्ता पिष्टौण्डिः पिण्डिका च सा ।
श्वेताम्ली मधुरा वृष्या पित्तघ्नी बलदायिनी ॥ ६.१७४
नीलाम्ली नीलपिष्टौण्डी श्यामाम्ली दीर्घशाखिका ।
नीलाम्ली मधुरा रुच्या कफवातहरा परा ॥ ६.१७५
अजगन्धा बस्तगन्धा सुरपुष्पाविगन्धिका ।

उग्रगन्धा ब्रह्मगर्भा ब्राह्मी पूतिमयूरिका ॥ ६.१७६
अजगन्धा कटूष्णा स्याद्वातगुल्मोदरापहा ।
कर्णव्रणार्तिशूलघ्नी पीता चेदञ्जने हिता ॥ ६.१७७
आदित्यभक्ता वरदार्कभक्ता सुवर्चला सूर्यलतार्ककान्ता ।
मण्डूकपर्णी सुरसम्भवा च सौरिः सुतेजार्कहिता रवीष्टा ॥ ६.१७८
मण्डूकी सत्यनाम्नी स्याद्देवी मार्तण्डवल्लभा ।
विक्रान्ता भास्करेष्टा च भवेदष्टादशाह्वया ॥ ६.१७९
आदित्यभक्ता शिशिरा सतिक्ता कटुस्तथोग्रा कफहारिणी च ।
त्वग्दोषकण्डूव्रणकुष्ठभूतग्रहोग्रशीतज्वरनाशिनी च ॥ ६.१८०
विषमुष्टिः केशमुष्टिः सुमुष्टिरणुमुष्टिकः ।
क्षुपडोडिसमायुक्तो मुष्टिः पञ्चाभिधः स्मृतः ॥ ६.१८१
विषमुष्टिः कटुस्तिक्तो दीपनः कफवातहृत् ।
कण्ठामयहरो रुच्यो रक्तपित्तार्तिदाहकृत् ॥ ६.१८२
अन्या डोडी तु जीवन्ती शाकश्रेष्ठा सुखालुका ।
बहुपर्णी दीर्घपत्त्रा सूक्ष्मपत्त्रा च जीवनी ॥ ६.१८३
डोडी तु कटुतिक्तोष्णा दीपनी कफवातजित् ।
कण्ठामयहरा रुच्या रक्तपित्तार्तिदाहनुत् ॥ ६.१८४
कालाञ्जनी चाञ्जनी च रेचनी चासिताञ्जनी ।
नीलाञ्जनी च कृष्णाभा काली कृष्णाञ्जनी च सा ॥ ६.१८५
कालाञ्जनी कटूष्णा स्यादम्लामक्रिमिशोधनी ।
अपानावर्तशमनी जठरामयहारिणी ॥ ६.१८६
कार्पासी सारिणी चैव चव्या स्थूला पिचुस्तथा ।
बदरी बादरश्चैव गुणसूस्तुण्डिकेरिका ।
मरूद्भवा समुद्रान्ता ज्ञेया एकादशाभिधा ॥ ६.१८७
कार्पासी मधुरा शीता स्तन्या पित्तकफापहा ।
तृष्णादाहश्रमभ्रान्तिमूर्छाहृद्बलकारिणी ॥ ६.१८८
वनजारण्यकार्पासी भारद्वाजी वनोद्भवा ।
भारद्वाजी हिमा रुच्या व्रणशस्त्रक्षतापहा ॥ ६.१८९
कोकिलाक्षः शृगाली च शृङ्खला रकणस्तथा ।
शृङ्गालघण्टी वज्रास्थिशृङ्खला वज्रकण्टकः ॥ ६.१९०
इक्षुरः क्षुरको वज्रः शृङ्खलिका पिकेक्षणः ।
पिच्छिला चेक्षुगन्धा च ज्ञेया भुवनसंमिता ॥ ६.१९१
कोकिलाक्षस्तु मधुरः शीतः पित्तातिसारनुत् ।
वृष्यः कफहरो बल्यो रुच्यः संतर्पणः परः ॥ ६.१९२
सातला सप्तला सारी विदुला विमलामला ।
बहुफेना चर्मकषा फेना दीप्ता विषाणिका ।
स्वर्णपुष्पी चित्रघना स्यात्त्रयोदशनामका ॥ ६.१९३
सातला कफपित्तघ्नी लघुतिक्तकषायिका ।
विसर्पकुष्ठविस्फोटव्रणशोफनिकृन्तनी ॥ ६.१९४
स्यात्कामवृद्धिः स्मरवृद्धिसंज्ञो मनोजवृद्धिर्मदनायुधश्च ।
कन्दर्पजीवश्च जितेन्द्रियाह्वः कामोपजीवोऽपि च जीवसंज्ञः ॥ ६.१९५
कामवृद्धेस्तु बीजं स्यान्मधुरं बलवर्धनम् ।
कामवृद्धिकरं रुच्यं बहुलेन्द्रियवृद्धिदम् ॥ ६.१९६
स्याच्चक्रमर्दोऽण्डगजो गजाख्यो मेषाह्वयश्चैडगजोऽण्डहस्ती ।
व्यावर्तकश्चक्रगजश्च चक्री पुंनाडपुंनाटविमर्दकाश्च ॥ ६.१९७

दद्रुघ्नस्तर्वटश्च स्याच्चक्राह्वः शुकनाशनः ।
दृढबीजः प्रपुन्नाटः खर्जूघ्नश्चोनविंशतिः ॥ ६.१९८
चक्रमर्दः कटुस्तीव्रो मेदोवातकफापहः ।
व्रणकण्डूतिकुष्ठार्तिदद्रुपामादिदोषनुत् ॥ ६.१९९
झिञ्झिरीटा कण्टफली पीतपुष्पापि झिञ्झिरा ।
हुडरोमाश्रयफला वृत्ता चैव षडाह्वया ॥ ६.२००
झिञ्झिरीटा कटुः शीता कषाया चातिसारजित् ।
वृष्या संतर्पणी बल्या महिषीक्षीरवर्धनी ॥ ६.२०१
इत्थं पृथुक्षुपकदम्बकनामकाण्डनिर्वर्णनागुणनिरूपणपूर्वमेतम् ।
वर्गं वटुः स्फुटमधीत्य दधीत सद्यः सौवर्गवैद्यकविचारसुचातुरीं सः ॥ ६.२०२
येन स्वेन नृणां क्षणेन महता वीर्येण सूर्योपमा व्यत्यस्याङ्गविकारमुद्धततया दूरं क्षिपन्त्यामयान् ।
स्वस्मिन्नाम्न्यपि संस्तवादिवशतस्तेषां विकारोदयव्यत्यासं दधतां नितान्तगहनो वर्गः क्षुपाणामयम् ॥ ६.२०३
संतापं विदुषां प्रसह्य समितौ स्फीतं प्रतापं द्विषां यस्मिन् विस्मयतेऽवनं च निधनं दृष्ट्वाधुना तेजसा ।
धुन्वन्त्यौषधयः स्वयं किल गदान् येनार्पिताः स्पर्धया तुर्यस्तस्य कृतौ स्थितो नरहरेर्वर्गः शताह्वादिकः ॥ ६.२०४

राजनिघण्टु, मूलकादिवर्गः
मूलकं पञ्चधा प्रोक्तं चतुर्धा शिग्रुरुच्यते ।
वंशो द्विर्वेत्रो माकन्दी हरिद्रा वनजा तथा ॥ ७.१
शृङ्गाटो भ्रमरच्छल्ली वन्यार्द्रकमथापरम् ।
रसोनो द्विविधः प्रोक्तः पलाण्डुश्च द्विधा मतः ॥ ७.२
विंशत्येकोत्तरं मूलं शरणं द्वंद्वमुच्यते ।
आलूकसप्तकं चाथ प्रोक्ताश्चारण्यकन्दकाः ॥ ७.३
महिषीहस्तिकोलाश्च वाराही विष्णुधारिणी ।
द्विधा च नाकुली माला विदारीद्वयशाल्मली ॥ ७.४
चण्डालस्तैलकन्दश्च त्रिपर्णी पुष्करस्तथा ।
मुसली द्विविधा चाथ त्रिधा गुच्छास्तथैव च ॥ ७.५
एषु नागकराह्वा च पत्त्रशाकमथोच्यते ।
वास्तुकं चुक्रकं चिल्ली त्रिविधं शिग्रुपत्त्रकम् ॥ ७.६
पालक्यराजशाकिन्यौ चतुर्धोपोदकी क्रमात् ।
कुणञ्जरः कुसुम्भाख्यः शताह्वा पत्त्रतण्डुली ॥ ७.७
राजिकाद्वयचाङ्गेरी घोलिका त्रिविधा मता ।
जीवशाकस्तथा गौरसुवर्णाख्यः पुनर्नवा ॥ ७.८
वसुकः फञ्जिकादिश्च मिश्रकोऽङ्ककराह्वयः ।
अतः परं च कुष्माण्डी कुम्भतुम्बी त्वलाबुका ॥ ७.९
भूतुम्बिका कलिङ्गश्च द्विधा कोशातकी तथा ।
पटोली मधुराद्या च मृगाक्षी दधिपुष्पिका ॥ ७.१०
शिम्बी च कारवल्ली च कर्कोटी स्वादुतुम्बिका ।
निष्पावीद्वयवार्त्ताकी डङ्गरी खर्बुजा तथा ।
कर्कटी त्रपुसैर्वारुर्वालुकी चीनकर्कटी ॥ ७.११
चिर्भिटा च शशाण्डूली कुडुहुञ्ची मुनीक्षणैः ।
वेदभेदाः क्रमान्मूलकन्दपत्त्रफलात्मकाः ॥ ७.१२
शाकवर्गेऽत्र कथ्यन्ते मनोहरगुणाश्रयाः ।
एवं चतुर्विधं द्रव्यं बाणखं चन्द्रसंयुतम् ॥ ७.१३
मूलकं नीलकण्ठं च मूलाह्वं दीर्घमूलकम् ।
भूक्षारं कन्दमूलं स्याद्धस्तिदन्तं सितं तथा ॥ ७.१४
शङ्खमूलं हरित्पर्णं रुचिरं दीर्घकन्दकम् ।
कुञ्जरक्षारमूलं च मूलस्यैते त्रयोदश ॥ ७.१५
मूलकं तीक्ष्णमुष्णं च कटूष्णं ग्राहि दीपनम् ।
दुर्नामगुल्महृद्रोगवातघ्नं रुचिदं गुरु ॥ ७.१६
चाणाख्यमूलकं चान्यच्छालेयं विष्णुगुप्तकम् ।
स्थूलमूलं महाकन्दं कौटिल्यं मरुसम्भवम् ।
शालामर्कटकं मिश्रं ज्ञेयं चैव नवाभिधम् ॥ ७.१७
चाणाख्यमूलकं सोष्णं कटुकं रुच्यदीपनम् ।
कफवातक्रिमीन् गुल्मं नाशयेद्ग्राहकं गुरु ॥ ७.१८
गृञ्जनं शिखिमूलं च यवनेष्टं च वर्तुलम् ।
ग्रन्थिमूलं शिखाकन्दं कन्दं डिण्डीरमोदकम् ॥ ७.१९
गृञ्जनं कटुकोष्णं च कफवातरुजापहम् ।
रुच्यं च दीपनं हृद्यं दुर्गन्धं गुल्मनाशनम् ॥ ७.२०
पिण्डमूलं गजाण्डं च पिण्डकं पिण्डमूलकम् ।
पिण्डमूलं कटूष्णं च गुल्मवातादिदोषनुत् ॥ ७.२१

सोष्णं तीक्ष्णं च तिक्तं मधुरकटुरसं मूत्रदोषापहारि श्वासार्शःकासगुल्मक्षयनयनरुजानाभिशूलामयघ्नम् ।
कण्ठ्यं बल्यं च रुच्यं मलविकृतिहरं मूलकं बालकं स्यातुष्णं जीर्णं च शोषप्रदमुदितमिदं दाहपित्तास्रदायि ॥ ७.२२
आमं संग्राहि रुच्यं कफपवनहरं पक्वमेतत्कटूष्णं भुक्तेः प्राग्भक्षितं चेत्सपदि वितनुते पित्तदाहास्रकोपम् ।
भुक्त्या सार्धं तु जग्धं हितकरबलकृद्वेशवारेण तच्चेत्पक्वं हृद्रोगशूलप्रशमनमुदितं शूलरुग्घारि मूलम् ॥ ७.२३
गर्जरं पिङ्गमूलं च पीतकं च सुमूलकम् ।
स्वादुमूलं सुपीतं च नारङ्गं पीतमूलकम् ॥ ७.२४
गर्जरं मधुरं रुच्यं किंचित्कटु कफापहम् ।
आध्मानक्रिमिशूलघ्नं दाहपित्ततृषापहम् ॥ ७.२५
शिग्रुर्हरितशाकश्च शाकपत्त्रः सुपत्त्रकः ।
उपदंशः क्षमादंशो ज्ञेयः कोमलपत्त्रकः ।
बहुमूलो दंशमूलस्तीक्ष्णमूलो दशाह्वयः ॥ ७.२६
शिग्रुश्च कटुतिक्तोष्णस्तीक्ष्णो वातकफापहः ।
मुखजाड्यहरो रुच्यो दीपनो व्रणदोषनुत् ॥ ७.२७
शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः ।
मुखामोदः कृष्णशिग्रुश्चक्षुष्यो रुचिरञ्जनः ॥ ७.२८
शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा ।
जन्तुवातार्तिशूलघ्नश्चक्षुष्यो रोचनः परः ॥ ७.२९
श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः ।
सुमूलः श्वेतमरिचो रोचनो मधुशिग्रुकः ॥ ७.३०
श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः ।
अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत् ॥ ७.३१
रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः ।
सुगन्धकेसरः सिंहो मृगारिश्च प्रकीर्तितः ॥ ७.३२
रक्तशिग्रुर्महावीर्यो मधुरश्च रसायनः ।
शोफाध्मानसमीरार्तिपित्तश्लेष्मापसारकः ॥ ७.३३
वंशो यवफलो वेणुः कर्मारस्तृणकेतुकः ।
मस्करः शतपर्वा च कण्टालुः कण्टकी तथा ॥ ७.३४
महाबलो दृढग्रन्थिर्दृढपत्त्रो धनुद्रुमः ।
धनुष्यो दृढकाण्डश्च विज्ञेयो बाणभूमितः ॥ ७.३५
वंशौ त्वम्लौ कषायौ च किंचित्तिक्तौ च शीतलौ ।
मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रनाशनौ ॥ ७.३६
अन्यस्तु रन्ध्रवंशः स्यात्त्वक्सारः कीचकाह्वयः ।
मस्करो वादनीयश्च सुषिराख्यः षडाह्वयः ॥ ७.३७
विशेषो रन्ध्रवंशस्तु दीपनोऽजीर्णनाशनः ।
रुचिकृत्पाचनो हृद्यः शूलघ्नो गुल्मनाशनः ॥ ७.३८
वंशाग्रं तु करीरो वंशाङ्कुरश्च यवफलाङ्कुरः ।
तस्य ग्रन्थिस्तु परुः पर्व तथा काण्डसन्धिश्च ॥ ७.३९
करीरं कटुतिक्ताम्लं कषायं लघु शीतलम् ।
पित्तास्रदाहकृच्छ्रघ्नं रुचिकृत्पर्व निर्गुणम् ॥ ७.४०
वेत्रो वेतो योगिदण्डः सुदण्डो मृदुपर्वकः ।
वेत्रः पञ्चविधः शैत्यकषायो भूतपित्तहृत् ॥ ७.४१
माकन्दी बहुमूला च मादनी गन्धमूलिका ।
एका विशदमूली च श्यामला च तथापरा ॥ ७.४२
माकन्दी कटुका तिक्ता मधुरा दीपनी परा ।
रुच्याल्पवातला पथ्या न वर्षासु हिताधिका ॥ ७.४३

शोली वनहरिद्रा स्यात्वनारिष्टा च शोलिका ।
शोलिका कटुगौल्या च रुच्या तिक्ता च दीपनी ॥ ७.४४
शृङ्गाटकः शृङ्गरुहो जलवल्ली जलाश्रया ।
शृङ्गकन्दः शृङ्गमूलो विषाणी सप्तनामकः ॥ ७.४५
शृङ्गाटकः शोणितपित्तहारी लघुः सरो वृष्यतमो विशेषात् ।
त्रिदोषतापश्रमशोफहारो रुचिप्रदो मेहनदार्ढ्यहेतुः ॥ ७.४६
भृङ्गाह्वा भ्रमरच्छल्ली भ्रमरा भृङ्गमूलिका ।
भृङ्गच्छल्ली कटूष्णा स्यात्तिक्ता दीपनरोचनी ॥ ७.४७
पेऊर्वनार्द्रका प्रोक्ता वनजारण्यजार्द्रका ।
पेऊस्तु कटुकाम्ला च रुचिकृद्बल्यदीपनी ॥ ७.४८
रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ।
भूतघ्नश्चोग्रगन्धश्च लशुनः शीतमर्दकः ॥ ७.४९
रसोनोऽम्लरसोनः स्यात्गुरूष्णः कफवातनुत् ।
अरुचिक्रिमिहृद्रोगशोफघ्नश्च रसायनः ॥ ७.५०
रसोन उष्णः कटुपिच्छिलश्च स्निग्धो गुरुः स्वादुरसोऽतिबल्यः ।
वृष्यश्च मेधास्वरवर्णचक्षुष्यास्थिसंधर्भानकरः सुतीक्ष्णः ॥ ७.५१
रसोनोऽन्यो महाकन्दो गृजनो दीर्घपत्त्रकः ।
पृथुपत्त्रः स्थूलकन्दो यवनेष्टो बले हितः ॥ ७.५२
गृञ्जनस्य मधुरं कटु कन्दं नालमप्युपदिशन्ति कषायम् ।
पत्त्रसंचयमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति ॥ ७.५३
हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकृच्छ्रशोफान् ।
दुर्नामकुष्ठानिलसादजन्तुकफामयान् हन्ति महारसोनः ॥ ७.५४
पलाण्डुस्तीक्ष्णकन्दश्च उल्ली च मुखदूषणः ।
शूद्रप्रियः क्रिमिघ्नश्च दीपनो मुखगन्धकः ॥ ७.५५
बहुपत्त्रो विश्वगन्धो रोचनो रुद्रसंज्ञकः ।
श्वेतकन्दश्च तत्रैको हारिद्रोऽन्य इति द्विधा ॥ ७.५६
पलाण्डुः कटुको बल्यः कफपित्तहरो गुरुः ।
वृष्यश्च रोचनः स्निग्धो वान्तिदोषविनाशनः ॥ ७.५७
अन्यो राजपलाण्डुः स्यात्यवनेष्टो नृपाह्वयः ।
राजप्रियो महाकन्दो दीर्घपत्त्रश्च रोचकः ॥ ७.५८
नृपेष्टो नृपकन्दश्च महाकन्दो नृपप्रियः ।
रक्तकन्दश्च राजेष्टो नामान्यत्र त्रयोदश ॥ ७.५९
पलाण्डुर्नृपपूर्वः स्यात्शिशिरः पित्तनाशनः ।
कफहृद्दीपनश्चैव बहुनिद्राकरस्तथा ॥ ७.६०
वक्ष्यते नृपपलाण्डुलक्षणं क्षारतीक्ष्णमधुरो रुचिप्रदः ।
कण्ठशोषशमनोऽतिदीपनः श्लेष्मपित्तशमनोऽतिबृंहणः ॥ ७.६१
कण्डूलः शूरणः कन्दी सुकन्दी स्थूलकन्दकः ।
दुर्नामारिः सुवृत्तश्च वातारिः कन्दशूरणः ॥ ७.६२
अर्शोघ्नस्तीव्रकन्दश्च कन्दार्हः कन्दवर्धनः ।
बहुकन्दो रुच्यकन्दः शूरकन्दस्तु षोडशः ॥ ७.६३
शूरणः कटुकरुच्यदीपनः पाचनः क्रिमिकफानिलापहः ।
श्वासकासवमनार्शसां हरः शूलगुल्मशमनोऽस्रदोषकृत् ॥ ७.६४
सितशूरणस्तु वन्यो वनकन्दोऽरण्यशूरणो वनजः ।
स श्वेतशूरणाख्यो वनकन्दः कण्डूलश्च सप्ताख्यः ॥ ७.६५
श्वेतशूरणको रुच्यः कटूष्णः क्रिमिनाशनः ।

गुल्मशूलादिदोषघ्नः स चारोचकहारकः ॥ ७.६६
मुखालुर्मण्डपारोहो दीर्घकन्दः सुकन्दकः ।
स्थूलकन्दो महाकन्दः स्वादुकन्दश्च सप्तधा ॥ ७.६७
मुखालुकः स्यान्मधुरः शिशिरः पित्तनाशनः ।
रुचिकृद्वातकृच्चैव दाहशोषतृषापहः ॥ ७.६८
पिण्डालुः स्यात्ग्रन्थिलः पिण्डकन्दः कन्दग्रन्थी रोमशो रोमकन्दः ।
रोमाह्वः स्यात्सोऽपि ताम्बूलपत्त्रो लालाकन्दः पिण्डकोऽयं दशाह्वः ॥ ७.६९
पिण्डालुर्मधुरः शीतो मूत्रकृच्छ्रामयापहः ।
दाहशोषप्रमेहघ्नो वृष्यः संतर्पणो गुरुः ॥ ७.७०
अन्यस्तु रक्तपिण्डालू रक्तालू रक्तपिण्डकः ।
लोहितो रक्तकन्दश्च लोहितालुः षडाह्वयः ॥ ७.७१
रक्तपिण्डालुकः शीतो मधुराम्लः श्रमापहः ।
पित्तदाहापहो वृष्यो बलपुष्टिकरो गुरुः ॥ ७.७२
कासालुः कासकन्दश्च कन्दालुश्चालुकश्च सः ।
आलुर्विशालपत्त्रश्च पत्त्रालुश्चेति सप्तधा ॥ ७.७३
कासालुरुग्रकण्डूतिवातश्लेष्मामयापहः ।
अरोचकहरः स्वादुः पथ्यो दीपनकारकः ॥ ७.७४
फोण्डालुर्लोहितालुश्च रक्तपत्त्रो मृदुच्छदः ।
फोण्डालुः श्लेष्मवातघ्नः कटूष्णो दीपनश्च सः ॥ ७.७५
पाणियालुर्जलालुः स्यातनुपालुरवालुकः ।
पाणियालुस्त्रिदोषघ्नः संतर्पणकरः परः ॥ ७.७६
नीलालुरसितालुः स्यात्कृष्णालुः श्यामलालुकः ।
नीलालुर्मधुरः शीतः पित्तदाहश्रमापहः ॥ ७.७७
शुभ्रालुर्महिषीकन्दो लुलायकन्दश्च शुक्लकन्दश्च ।
सर्पाख्यो वनवासी विषकन्दो नीलकन्दोऽन्यः ॥ ७.७८
कटूष्णो महिषीकन्दः कफवातामयापहः ।
मुखजाड्यहरो रुच्यो महासिद्धिकरः सितः ॥ ७.७९
हस्तिकन्दो हस्तिपत्त्रः स्थूलकन्दोऽतिकन्दकः ।
बृहत्पत्त्रोऽतिपत्त्रश्च हस्तिकर्णः सुकर्णकः ॥ ७.८०
त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः ।
गजकन्दो नागकन्दो ज्ञेयो द्विसप्तनामकः ॥ ७.८१
हस्तिकन्दः कटूष्णः स्यात्कफवातामयापहः ।
त्वग्दोषश्रमहा कुष्ठविषवीसर्पनाशकः ॥ ७.८२
कोलकन्दः क्रिमिघ्नश्च पञ्जलो वस्त्रपञ्जलः ।
पुटालुः सुपुटश्चैव पुटकन्दश्च सप्तधा ॥ ७.८३
कोलकन्दः कटुश्चोष्णः क्रिमिदोषविनाशनः ।
वान्तिविच्छर्दिशमनो विषदोषनिवारणः ॥ ७.८४
स्याद्वाराही शूकरी क्रोडकन्या गृष्टिर्विष्वक्सेनकान्ता वराही ।
कौमारी स्याद्ब्रह्मपुत्री त्रिनेत्रा क्रौडी कन्या गृष्टिका माधवेष्टा ॥ ७.८५
शूकरकन्दः क्रोडो वनवासी कुष्ठनाशनो वन्यः ।
अमृतश्च महावीर्यो महौषधिः शबरकन्दश्च ॥ ७.८६
वराहकन्दो वीरश्च ब्राह्मकन्दः सुकन्दकः ।
वृद्धिदो व्याधिहन्ता च वसुनेत्रमिताह्वयाः ॥ ७.८७
वाराही तिक्तकटुका विषपित्तकफापहा ।
कुष्ठमेहक्रिमिहरा वृष्या बल्या रसायनी ॥ ७.८८

विष्णुकन्दो विष्णुगुप्तः सुपुष्टो बहुसम्पुटः ।
जलवासो बृहत्कन्दो दीर्घवृन्तो हरिप्रियः ॥ ७.८९
विष्णुकन्दस्तु मधुरः शिशिरः पित्तनाशनः ।
दाहशोफहरो रुच्यः संतर्पणकरः परः ॥ ७.९०
धारिणी धारणीया च वीरपत्री सुकन्दकः ।
कन्दालुर्वनकन्दश्च कन्दाद्यो दण्डकन्दकः ॥ ७.९१
मधुरो धारिणीकन्दः कफपित्तामयापहः ।
वक्त्रदोषप्रशमनः कुष्ठकण्डूतिनाशनः ॥ ७.९२
नाकुली सर्पगन्धा च सुगन्धा रक्तपत्त्रिका ।
ईश्वरी नागगन्धा चाप्यहिभुक्स्वरसा तथा ।
सर्पादनी व्यालगन्धा ज्ञेया चेति दशाह्वया ॥ ७.९३
अन्या महासुगन्धा च सुवहा गन्धनाकुली ।
सर्पाक्षी फणिहन्त्री च नकुलाढ्याहिभुक्च सा ॥ ७.९४
विषमर्दनिका चाहिमर्दिनी विषमर्दिनी ।
महाहिगन्धाहिलता ज्ञेया सा द्वादशाह्वया ॥ ७.९५
नाकुलीयुगलं तिक्तं कटूष्णं च त्रिदोषजित् ।
अनेकविषविध्वंसि किंचिच्छ्रेष्ठं द्वितीयकम् ॥ ७.९६
अथ मालाकन्दः स्यादालिकन्दश्च पङ्क्तिकन्दश्च ।
त्रिशिखदला ग्रन्थिदला कन्दलता कीर्तिता षोढा ॥ ७.९७
मालाकन्दः सुतीक्ष्णः स्यात्गण्डमालाविनाशकः ।
दीपनो गुल्महारश्च वातश्लेष्मापकर्षकृत् ॥ ७.९८
विदारिका स्वादुकन्दा सिता शुक्ला शृगालिका ।
विदारी वृष्यकन्दा च विडाली वृष्यवल्लिका ॥ ७.९९
भूकुष्माण्डी स्वादुलता गजेष्टा वारिवल्लभा ।
ज्ञेया कन्दफला चेति मनुसंख्याह्वया मता ॥ ७.१००
विदारी मधुरा शीता गुरुः स्निग्धास्रपित्तजित् ।
ज्ञेया च कफकृत्पुष्टिबल्या वीर्यविवर्धनी ॥ ७.१०१
अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्लरी ।
इक्षुवल्ली क्षीरकन्दः क्षीरवल्ली पयस्विनी ॥ ७.१०२
क्षीरशुक्ला क्षीरलता पयःकन्दा पयोलता ।
पयोविदारिका चेति विज्ञेया द्वादशाह्वया ॥ ७.१०३
ज्ञेया क्षीरविदारी च मधुराम्ला कषायका ।
तिक्ता च पित्तशूलघ्नी मूत्रमेहामयापहा ॥ ७.१०४
क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः ।
विनालो रोगहर्ता स्याद्वयःस्तम्भी सनालकः ॥ ७.१०५
शाल्मलीकन्दकश्चाथ विजुलो वनवासकः ।
वनवासी मलघ्नश्च मलहन्ता षडाह्वयः ॥ ७.१०६
मधुरः शाल्मलीकन्दो मलसंग्रहरोधजित् ।
शिशिरः पित्तदाहार्तिशोषसंतापनाशनः ॥ ७.१०७
प्रोक्तश्चण्डालकन्दः स्यादेकपत्त्रो द्विपत्त्रकः ।
त्रिपत्त्रोऽथ चतुष्पत्त्रः पञ्चपत्त्रश्च भेदतः ॥ ७.१०८
चण्डालकन्दो मधुरः कफपित्तास्रदोषजित् ।
विषभूतादिदोषघ्नो विज्ञेयश्च रसायनः ॥ ७.१०९
अथ तैलकन्द उक्तो द्रावककन्दस्तिलाङ्कितदलश्च ।
करवीरकन्दसंज्ञो ज्ञेयस्तिलचित्रपत्त्रको बाणैः ॥ ७.११०

लोहद्रावी तैलकन्दः कटूष्णो वातापस्मारापहारी विषारिः ।
शोफघ्नः स्याद्बन्धकारी रसस्य द्रागेवासौ देहसिद्धिं विधत्ते ॥ ७.१११
अश्वारिपत्त्रसंकाशः तिलबिन्दुसमन्वितः ।
संस्निग्धाधस्थभूमिस्थः तिलकन्दोऽतिविस्तृतः ॥ ७.११२
त्रिपर्णिका बृहत्पत्त्री छिन्नग्रन्थिनिका च सा ।
कन्दालः कन्दबहलाप्यम्लवल्ली विषापहा ॥ ७.११३
त्रिपर्णी मधुरा शीता श्वासकासविनाशनी ।
पित्तप्रकोपशमनी विषव्रणहरा परा ॥ ७.११४
मुसली तालमूली च सुवहा तालमूलिका ।
गोधापदी हेमपुष्पी भूताली दीर्घकन्दिका ॥ ७.११५
मुसली मधुरा शीता वृष्या पुष्टिबलप्रदा ।
पिच्छिला कफदा पित्तदाहश्रमहरा परा ॥ ७.११६
मुसली स्याद्द्विधा प्रोक्ता श्वेता चापरसंज्ञका ।
श्वेता स्वल्पगुणोपेता अपरा च रसायनी ॥ ७.११७
गुच्छाह्वकन्दस्तवकाह्वकन्दको गुलुच्छकन्दश्च विघण्टिकाभिधः ।
गुलुच्छकन्दो मधुरः सुशीतलो वृष्यप्रदस्तर्पणदाहनाशनः ॥ ७.११८
लक्ष्मणा पुत्रकन्दा च पुत्रदा नागिनी तथा ।
नागाह्वा नागपत्त्री च तुलिनी मञ्जिका च सा ।
अस्रबिन्दुच्छदा चैव सुकन्दा दशधाह्वया ॥ ७.११९
लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यत्वविनाशनी ।
रसायनकरी बल्या त्रिदोषशमनी परा ॥ ७.१२०
हस्तपर्यायपूर्वस्तु जोडिर्वैद्यवरैः स्मृतः ।
करजोडिरिति ख्यातो रसबन्धादिवश्यकृत् ॥ ७.१२१
वास्तुकं वास्तु वास्तूकं वस्तुकं हिलमोचिका ।
शाकराजो राजशाकश्चक्रवर्तिश्च कीर्तितः ॥ ७.१२२
वास्तुकं तु मधुरं सुशीतलं क्षारमीषदम्लं त्रिदोषजित् ।
रोचनं ज्वरहरं महार्शसां नाशनं च मलमूत्रशुद्धिकृत् ॥ ७.१२३
चुक्रं तु चुक्रवास्तूकं लिकुचं चाम्लवास्तुकम् ।
दलाम्लमम्लशाकाख्यमम्लादि हिलमोचिका ॥ ७.१२४
चुक्रं स्यादम्लपत्त्रं तु लघूष्णं वातगुल्मनुत् ।
रुचिकृद्दीपनं पथ्यमीषत्पित्तकरं परम् ॥ ७.१२५
पलाशलोहिता चिल्ली वास्तुका चिल्लिका च सा ।
मृदुपत्त्री क्षारदला क्षारपत्त्री तु वास्तुकी ॥ ७.१२६
चिल्ली वास्तुकतुल्या च सक्षारा श्लेष्मपित्तनुत् ।
प्रमेहमूत्रकृच्छ्रघ्नी पथ्या च रुचिकारिणी ॥ ७.१२७
श्वेतचिल्ली तु वास्तूकी सुपथ्या श्वेतचिल्लिका ।
सितचिल्ल्युपचिल्ली च ज्वरघ्नी क्षुद्रवास्तुकी ॥ ७.१२८
श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा च सा ।
त्रिदोषशमनी पथ्या ज्वरदोषविनाशनी ॥ ७.१२९
अन्या शुनकचिल्ली स्यात्सुचिल्ली श्वानचिल्लिका ।
श्वचिल्ली कटुतीक्ष्णा च कण्डूतिव्रणहारिणी ॥ ७.१३०
शिग्रुपत्त्रभवं शाकं रुच्यं वातकफापहम् ।
कटूष्णं दीपनं पथ्यं क्रिमिघ्नं पाचनं परम् ॥ ७.१३१
पालक्यं तु पलक्यायां मधुरा क्षुरपत्त्रिका ।
सुपत्त्रा स्निग्धपत्त्रा च ग्रामीणा ग्राम्यवल्लभा ॥ ७.१३२

पालक्यमीषत्कटुकं मधुरं पथ्यशीतलम् ।
रक्तपित्तहरं ग्राहि ज्ञेयं संतर्पणं परम् ॥ ७.१३३
राजाभिधानपूर्वा तु नगाह्वा चापरेण वा ।
राजाद्रिः स्याद्राजगिरिर्ज्ञातव्या राजशाकिनी ॥ ७.१३४
राजशाकिनिका रुच्या पित्तघ्नी शीतला च सा ।
सैवातिशीतला रुच्या विज्ञेया स्थूलशाकिनी ॥ ७.१३५
उपोदकी कलम्बी च पिच्छिला पिच्छिलच्छदा ।
मोहिनी मदशाकश्च विशालाद्या ह्युपोदकी ॥ ७.१३६
उपोदकी कषायोष्णा कटुका मधुरा च सा ।
निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकारिणी ॥ ७.१३७
उपोदक्यपरा क्षुद्रा सूक्ष्मपत्रा तु मण्डपी ।
रसवीर्यविपाकेषु सदृशी पूर्वया स्वयम् ॥ ७.१३८
उपोदकी तृतीया च वन्यजा वनजाह्वया ।
वनजोपोदकी तिक्ता कटूष्णा रोचनी च सा ॥ ७.१३९
मूलपोती क्षुद्रवल्ली पोतिका क्षुद्रपोतिका ।
क्षुपोपोदकनाम्नी च वल्लिः शाकटपोतिका ॥ ७.१४०
मूलपोती त्रिदोषघ्नी वृष्या बल्या लघुश्च सा ।
बलपुष्टिकरी रुच्या जठरानलदीपनी ॥ ७.१४१
कुणञ्जरस्त्रिदोषघ्नो मधुरो रुच्यदीपकः ।
ईषत्कषायः संग्राही पित्तश्लेष्मकरो लघुः ॥ ७.१४२
कौसुम्भशाकं मधुरं कटूष्णं विण्मूत्रदोषापहरं मदघ्नम् ।
दृष्टिप्रसादं कुरुते विशेषाद्रुचिप्रदं दीप्तिकरं च वह्नेः ॥ ७.१४३
शतपुष्पादलं सोष्णं मधुरं गुल्मशूलजित् ।
वातघ्नं दीपनं पथ्यं पित्तहृद्रुचिदायकम् ॥ ७.१४४
तण्डुलीयकदलं हिममर्शःपित्तरक्तविषकासविनाशि ।
ग्राहकं च मधुरं च विपाके दाहशोषशमनं रुचिदायि ॥ ७.१४५
कटूष्णं राजिकापत्त्रं क्रिमिवातकफापहम् ।
कण्ठामयहरं स्वादु वह्निदीपनकारकम् ॥ ७.१४६
सार्षपं पत्त्रमत्युष्णं रक्तपित्तप्रकोपनुत् ।
विदाहि कटुकं स्वादु शुक्रहृद्रुचिदायकम् ॥ ७.१४७
चाङ्गेरीशाकमत्युष्णं कटु रोचनपाचनम् ।
दीपनं कफवातार्शःसंग्रहण्यतिसारजित् ॥ ७.१४८
घोला च घोलिका घोली कलन्दुः कवलालुकम् ॥ ७.१४९
क्षेत्रजं लवणं रुच्यमम्लं वातकफापहम् ॥ ७.१५०
आरामघोलिका चाम्ला रूक्षा रुच्यानिलापहा ।
पित्तश्लेष्मकरी चान्या सूक्ष्मा जीर्णज्वरापहा ॥ ७.१५१
जीवन्तो रक्तनालश्च ताम्रपत्त्रः सनालकः ।
शाकवीरस्तु मधुरो जीवशाकश्च मेषकः ॥ ७.१५२
जीवशाकः सुमधुरो बृंहणो वस्तिशोधनः ।
दीपनः पाचनो बल्यो वृष्यः पित्तापहारकः ॥ ७.१५३
गौरसुवर्णं स्वर्णं सुगन्धिकं भूमिजं च वारिजं च ।
ह्रस्वं च गन्धशाकं कटुशृङ्गाटं च वर्णशाकाङ्कः ॥ ७.१५४
गौरसुवर्णं शिशिरं कफपित्तज्वरापहम् ।
पथ्यं दाहरुचिभ्रान्तिरक्तश्रमहरं परम् ॥ ७.१५५
वर्षाभूवसुकौ श्लेष्मवह्निमान्द्यानिलापहौ ।

पाके रूक्षतरौ गुल्मप्लीहशूलापहारकौ ॥ ७.१५६
फञ्जिका जीवनी पद्मा तर्कारी चुचुकः पृथक् ।
वातामयहरं ग्राहि दीपनं रुचिदायकम् ॥ ७.१५७
फञ्ज्यादिपञ्चकं भेण्डा कुणञ्जस्त्रिपुटस्तथा ।
इत्यादि वनपत्त्राणां शाकमेकत्र योजितम् ॥ ७.१५८
दीपनं पाचनं रुच्यं बलवर्णविधायकम् ।
त्रिदोषशमनं पथ्यं ग्राहि वृष्यं सुखावहम् ॥ ७.१५९
कर्कोटिका च कुष्माण्डी कुम्भाण्डी तु बृहत्फला ।
सुफला स्यात्कुम्भफला नागपुष्पफला मुनिः ॥ ७.१६०
मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीच्छेदनं विण्मूत्रग्लपनं तृषार्तिशमनं जीर्णाङ्गपुष्टिप्रदम् ।
वृष्यं स्वादुतरं त्वरोचकहरं बल्यं च पित्तापहं कुष्माण्डं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः ॥ ७.१६१
गोरक्षतुम्बी गोरक्षी नवालाम्बुर्घटाभिधा ।
कुम्भालाम्बुर्घटालाम्बुः कुम्भतुम्बी च सप्तधा ॥ ७.१६२
कुम्भतुम्बी सुमधुरा शिशिरा पित्तहारिणी ।
गुरुः संतर्पणी रुच्या वीर्यपुष्टिबलप्रदा ॥ ७.१६३
क्षीरतुम्बी दुग्धतुम्बी दीर्घवृत्तफलाभिधा ।
इक्ष्वाकुः क्षत्रियवरा दीर्घबीजा महाफला ॥ ७.१६४
क्षीरिणी दुग्धबीजा च दन्तबीजा पयस्विनी ।
महावल्ली ह्यलाम्बुश्च श्रमघ्नी शरभूमिता ॥ ७.१६५
तुम्बी सुमधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत् ।
वृष्या वातप्रदा चैव बलपुष्टिविवर्धनी ॥ ७.१६६
भूतुम्बी नागतुम्बी च शक्रचापसमुद्भवा ।
वल्मीकसम्भवा देवी दिव्यतुम्बी षडाह्वया ॥ ७.१६७
भूतुम्बी कटुकोष्णा च संनिपातापहारिणी ।
दन्तार्गलं दन्तरोधं धनुर्वातादिदोषनुत् ॥ ७.१६८
मांसलफलः कलिङ्गश्चित्रफलश्चित्रवल्लिकश्चित्रः ।
मधुरफलो वृत्तफलो घृणाफलो मांसलो नवधा ॥ ७.१६९
कलिङ्गो मधुरः शीतः पित्तदाहश्रमापहः ।
वृष्यः संतर्पणो बल्यो वीर्यपुष्टिविवर्धनः ॥ ७.१७०
कोशातकी स्वादुफला सुपुष्पा कर्कोटकी स्यादपि पीतपुष्पा ।
धाराफला दीर्घफला सुकोशा धामार्गवः स्यान्नवसंज्ञकोऽयम् ॥ ७.१७१
धाराकोशातकी स्निग्धा मधुरा कफपित्तनुत् ।
ईषद्वातकरी पथ्या रुचिकृद्बलवीर्यदा ॥ ७.१७२
हस्तिकोशातकी त्वन्या बृहत्कोशातकी तथा ।
महाकोशातकी वृत्ता ग्राम्यकोशातकी शराः ॥ ७.१७३
हस्तिकोशातकी स्निग्धा मधुराध्मानवातकृत् ।
वृष्या क्रिमिकरी चैव व्रणसंरोपणी च सा ॥ ७.१७४
ज्ञेया स्वादुपटोली च पटोली मण्डली च सा ।
पटोली मधुरादिः स्यात्प्रोक्ता दीर्घपटोलिका ।
स्निग्धपर्णी स्वादुपूर्वैः पर्यायैश्च पटोलिका ॥ ७.१७५
पटोली स्वादुः पित्तघ्नी रुचिकृत्ज्वरनाशनी ।
बलपुष्टिकरी पथ्या ज्ञेया दीपनपाचनी ॥ ७.१७६
पटोलपत्त्रं पित्तघ्नं नालं तस्य कफापहम् ।
फलं त्रिदोषशमनं मूलं चास्य विरेचनम् ॥ ७.१७७
मृगाक्षी शतपुष्पा च मृगेर्वारुर्मृगादनी ।

चित्रवल्ली बहुफला कपिलाक्षी मृगेक्षणा ॥ ७.१७८
चित्रा चित्रफला पथ्या विचित्रा मृगचिर्भिटा ।
मरुजा कुम्भसी देवी कट्फला लघुचिर्भिटा ।
सेन्दिनी च महादेवी बुधैः सा विंशतिर्मताः ॥ ७.१७९
मृगाक्षी कटुका तिक्ता पाकेऽम्ला वातनाशनी ।
पित्तकृत्पीनसहरा दीपनी रुचिकृत्परा ॥ ७.१८०
दधिपुष्पी खट्वाङ्गी खट्वा पर्यङ्कपादिका कूपा ।
खट्वापादी वंश्या काकोली कोलपालिका नवधा ॥ ७.१८१
दधिपुष्पी कटुमधुरा शिशिरा संतापपित्तदोषघ्नी ।
वातामयदोषकरी गुरुस्तथारोचकघ्नी च ॥ ७.१८२
असिशिम्बी खड्गशिम्बी शिम्बी निस्त्रिंशशिम्बिका ।
स्थूलशिम्बी महाशिम्बी बृहच्छिम्बी सुशिम्बिका ॥ ७.१८३
असिशिम्बी तु मधुरा कषाया श्लेष्मपित्तजित् ।
व्रणदोषापहन्त्री च शीतला रुचिदीपनी ॥ ७.१८४
करका कारवल्ली च चीरिपत्त्रः करिल्लका ।
सूक्ष्मवल्ली कण्टफला पीतपुष्पाम्बुवल्लिका ॥ ७.१८५
कारवल्ली सुतिक्तोष्णा दीपनी कफवातजित् ।
अरोचकहरा चैव रक्तदोषहरी च सा ॥ ७.१८६
कर्कोटकी स्वादुफला मनोज्ञा च मनस्विनी ।
बोधना वन्ध्यकर्कोटी देवी कण्टफलापि च ॥ ७.१८७
कर्कोटकी कटूष्णा च तिक्ता विषविनाशनी ।
वातघ्नी पित्तहृत्चैव दीपनी रुचिकारिणी ॥ ७.१८८
अथ भवति मधुरबिम्बी मधुबिम्बी स्वादुतुम्बिका तुण्डी ।
रक्तफला रुचिरफला सोष्णफला पीलुपर्णी च ॥ ७.१८९
बिम्बी तु मधुरा शीता पित्तश्वासकफापहा ।
असृग्ज्वरहरा रम्या कासजिद्गृहबिम्बिका ॥ ७.१९०
निष्पावी ग्रामजादिः स्यात्फलीनी नखपूर्विका ।
मण्डपी फलिका शिम्बी ज्ञेया गुच्छफला च सा ।
विशालफलिका चैव निष्पाविश्चिपिटा तथा ॥ ७.१९१
अन्याङ्गुलीफला चैव नखनिष्पाविका स्मृता ।
वृत्तनिष्पाविका ग्राम्या नखपुच्छफला शराः ॥ ७.१९२
निष्पावौ द्वौ हरिच्छुभ्रौ कषायौ मधुरौ रसौ ।
कण्ठशुद्धिकरौ मेध्यौ दीपनौ रुचिकारकौ ।
संग्राहि समवीर्यं स्यादीषच्छ्रेष्ठं द्वितीयकम् ॥ ७.१९३
वार्त्ताकी कण्टवृन्ताकी कण्टालुः कण्टपत्त्रिका ।
निद्रालुर्मांसलफला वृन्ताकी च महोटिका ॥ ७.१९४
चित्रफला कण्टकिनी महती कट्फला च सा ।
मिश्रवर्णफला नीलफला रक्तफला तथा ।
शाकश्रेष्ठा वृत्तफला नृपप्रियफलस्मृतिः ॥ ७.१९५
वार्त्ताकी कटुका रुच्या मधुरा पित्तनाशिनी ।
बलपुष्टिकरी हृद्या गुरुर्वातेषु निन्दिता ॥ ७.१९६
डङ्गरी डाङ्गरी चैव दीर्घेर्वारुश्च डङ्गरिः ।
डङ्गारी नागशुण्डी च गजदन्तफला मुनिः ॥ ७.१९७
डङ्गरी शीतला रुच्या वातपित्तास्रदोषजित् ।
शोषहृत्तर्पणी गौल्या जाड्यहा मूत्ररोधनुत् ॥ ७.१९८

बालं डाङ्गरिकं फलं सुमधुरं शीतं च पित्तापहं तृष्णादाहनिबर्हणं च रुचिकृत्संतर्पणं पुष्टिदम् ।
वीर्योन्मेषकरं बलप्रदमिदं भ्रान्तिश्रमध्वंसनं पक्वं चेत्कुरुते तदेव मधुरं तृड्दाहरक्तं गुरु ॥ ७.१९९
अथ खर्बुजा मधुफला षड्रेखा वृत्तकर्कटी तिक्ता ।
तिक्तफला मधुपाका वृत्तेर्वारुश्च षण्मुखा नवधा ॥ ७.२००
तिक्तं बाल्ये तदनु मधुरं किंचिदम्लं च पाके निष्पक्वं चेत्तदमृतसमं तर्पणं पुष्टिदायि ।
वृष्यं दाहश्रमविशमनं मूत्रशुद्धिं विधत्ते पित्तोन्मादापहरकफदं खर्बुजं वीर्यकारि ॥ ७.२०१
अथ कर्कटी कटुदला छर्द्यायनिका च पीनसा मूत्रफला ।
त्रपुसी च हस्तिपर्णी लोमशकण्टा च मूत्रला नवाभिधा ॥ ७.२०२
कर्कटी मधुरा शीता त्वक्तिक्ता कफपित्तजित् ।
रक्तदोषकरा पक्वा मूत्ररोधार्तिनाशनी ॥ ७.२०३
मूत्रावरोधशमनं बहुमूत्रकारि कृच्छ्राश्मरीप्रशमनं विनिहन्ति पित्तम् ।
वान्तिश्रमघ्नबहुदाहनिवारि रुच्यं श्लेष्मापहं लघु च कर्कटिकाफलं स्यात् ॥ ७.२०४
त्रपुसी पीतपुष्पी कण्टालुस्त्रपुसकर्कटी ।
बहुफला कोशफला सा तुन्दिलफला मुनिः ॥ ७.२०५
स्यात्त्रपुसीफलं रुच्यं मधुरं शिशिरं गुरु ।
भ्रमपित्तविदाहार्तिवान्तिहृद्बहुमूत्रदम् ॥ ७.२०६
एर्वारुः कर्कटी प्रोक्ता व्यालपत्त्रा च लोमशा ।
स्थूला तोयफला चैव हस्तिदन्तफला मुनिः ॥ ७.२०७
एर्वारुकं पित्तहरं सुशीतलं मूत्रामयघ्नं मधुरं रुचिप्रदम् ।
संतापमूर्छापहरं सुतृप्तिदं वातप्रकोपाय घनं तु सेवितम् ॥ ७.२०८
अथ वालुकी बहुफला स्निग्धफला क्षेत्रकर्कटी क्षेत्ररुहा ।
मधुरफला शारदिका क्षुद्रेर्वारुश्च पीतपुष्पिका ॥ ७.२०९
वालुकी मधुरा शीताध्मानहृच्च श्रमापहा ।
पित्तास्रशमनी रुच्या कुरुते कासपीनसौ ॥ ७.२१०
वालुकानि च सर्वाणि दुर्जराणि गुरूणि च ।
मन्दानलं प्रकुर्वन्ति वातरक्तहराणि च ॥ ७.२११
स्याद्वालुकी शरदि वर्षजदोषकर्त्री हेमन्तजा तु खलु पित्तहरा च रुच्या ।
क्षिप्रं करोति खलु पीनसमर्धपक्वा पक्वा त्वतीव मधुरा कफकारिणी च ॥ ७.२१२
चीनकर्कटिका ज्ञेया बीजकर्कटिका तथा ।
सुदीर्घा राजिलफला बाणैः कुलककर्कटी ॥ ७.२१३
चीनकर्कटिका रुच्या शिशिरा पित्तनाशनी ।
मधुरा तृप्तिदा हृद्या दाहशोषापहारिणी ॥ ७.२१४
स्यात्चिर्भिटा सुचित्रा चित्रफला क्षेत्रचिर्भिटा पाण्डुफला ।
पथ्या च रोचनफला चिर्भिटिका कर्कटिका ग्रहसंख्या ॥ ७.२१५
बाल्ये तिक्ता चिर्भिटा किंचिदम्ला गौल्योपेता दीपनी सा च पाके ।
शुष्का रूक्षा श्लेष्मवातारुचिघ्नी जाड्यघ्नी सा रोचनी दीपनी च ॥ ७.२१६
शशाण्डुली बहुफला तण्डुली क्षेत्रसम्भवा ।
क्षुद्राम्ला लोमशफला धूम्रवृत्तफला च सा ॥ ७.२१७
शशाण्डुली तिक्तकटुश्च कोमला कट्वम्लयुक्ता जरठा कफापहा ।
पाके तु साम्ला मधुरा विदाहकृत्कफश्च शुष्का रुचिकृच्च दीपनी ॥ ७.२१८
कुडुहुञ्ची श्रीफलिका प्रतिपत्त्रफला च सा ।
शुभ्रवी कारवी चैव प्रोक्ता बहुफला तथा ॥ ७.२१९
क्षुद्रकारलिका प्रोक्ता ज्ञेया कन्दलता तथा ।
क्षुद्रादिकारवल्ली च प्रोक्ता सा च नवाह्वया ॥ ७.२२०
कुडुहुञ्ची कटुरुष्णा तिक्ता रुचिकारिणी च दीपनदा ।

रक्तानिलदोषकरी पथ्यापि च सा फले प्रोक्ता ॥ ७.२२१
कारलीकन्दमर्शोघ्नं मलरोधविशोधनम् ।
योनिनिर्गतदोषघ्नं गर्भस्रावविषापहम् ॥ ७.२२२
इति मूलकन्दफलपत्त्रसुन्दरक्रमनामतद्गुणनिरूपणोल्वणम् ।
अवलोक्य वर्गमिममामयोचितामगदप्रयुक्तिमवबुध्यतां बुधः ॥ ७.२२३
मन्दाग्निमरोचकिनं येऽपि शिलामाशयन्ति निजशक्त्या ।
तेषां शाकानामयमाश्रयभूः शाकवर्ग इति कथितः ॥ ७.२२४
लब्धान्योऽन्यसहायवैद्यककुलाच्छङ्काकलङ्कापनुत्दस्रैक्यावतरोऽयमित्यविरतं सन्तः प्रशंसन्ति यम् ।
तस्य श्रीनृहरेः कृतावविसितो यो मलकादिर्महान् वर्गोऽसावभिधानकोशपरिषच्चूडामणौ सप्तमः ॥ ७.२२५

राजनिघण्टु, शाल्मल्यादिवर्गः
शाल्मली तस्य निर्यासो रोहितश्चैकवीरकः ।
पारिभद्रोऽथ खदिरस्त्रिधारिः खादिरः स्मृतः ॥ ८.१
शमीद्वयं च बर्बुरद्वितयं चारिमेदकः ।
पक्वाण्डेङ्गुदिका प्रोक्ता निष्पत्त्री च स्नुही द्विधा ॥ ८.२
कन्थारिका त्रिधैरण्डो घोण्टा वल्लीकरञ्जकः ।
कारिका मदनस्त्रेधा बिल्वान्तरस्तरट्टिका ॥ ८.३
श्रीवल्ली कुञ्जिका चैव रामकाण्डस्तथापरः ।
सयावनालौ द्विशरौ मुञ्जकाशी द्विधा कुशः ॥ ८.४
वल्वजा कुतृणौ चाथ नलौ दूर्वा चतुर्विधा ।
कुन्दुरो भूतृणो ज्ञेय उखल इक्षुदर्भकः ॥ ८.५
गोमूत्री शिल्पी निश्रेणी गर्मोटी मज्जरास्तथा ।
गिरिभूर्वंशपत्त्री च मन्थानः पल्लिवाहकः ॥ ८.६
पट्टुतृणशुको ज्ञेयः त्रिपण्यान्धः त्रिगुण्डकः ।
कसेरुश्चणिका प्रोक्ता गुण्डाला शूलिका तथा ।
परिपेल्लं हिज्जुलं च सेवालं च शराङ्कधा ॥ ८.७
शाल्मलिश्चिरजीवी स्यात्पिच्छिलो रक्तपुष्पकः ।
कुक्कुटी तूलवृक्षश्च मोचाख्यः कण्टकद्रुमः ॥ ८.८
रक्तफलो रम्यपुष्पो बहुवीर्यो यमद्रुमः ।
दीर्घद्रुमः स्थूलफलो दीर्घायुस्तिथिभिर्मितः ॥ ८.९
शाल्मली पिच्छिलो वृष्यो बल्यो मधुरशीतलः ।
कषायश्च लघुः स्निग्धः शुक्रश्लेष्मविवर्धनः ॥ ८.१०
तद्रसस्तद्गुणो ग्राही कषायः कफनाशनः ।
पुष्पं तद्वच्च निर्दिष्टं फलं तस्य तथाविधम् ॥ ८.११
मोचरसो मोचस्तु मोचस्रावश्च मोचनिर्यासः ।
पिच्छिलसारः सुरसः शाल्मलिवेष्टश्च मोचसारश्च ॥ ८.१२
मोचरसस्तु कषायः कफवातहरो रसायनो योगात् ।
बलपुष्टिवर्णवीर्यप्रज्ञायुर्देहसिद्धिदो ग्राही ॥ ८.१३
रोहीतको रोहितकश्च रोहितः कुशाल्मलिर्दाडिमपुष्पसंज्ञकः ।
सदाप्रसूनः स च कूटशाल्मलिर्विरोचनः शाल्मलिको नवाह्वयः ॥ ८.१४
सप्ताह्वः श्वेतरोहितः सितपुष्पः सिताह्वयः ।
सिताङ्गः शुक्लरोहितो लक्ष्मीवान् जनवल्लभः ॥ ८.१५
रोहितकौ कटुस्निग्धौ कषायौ च सुशीतलौ ।
क्रिमिदोषव्रणप्लीहरक्तनेत्रामयापहौ ॥ ८.१६
एकवीरो महावीरः सकृद्वीरः सुवीरकः ।
एकादिवीरपर्यायैर्वीरश्चेति षडाह्वयः ॥ ८.१७
एकवीरो भवेच्चोष्णः कटुकस्तोदवातनुत् ।
गृध्रसीकटिपृष्ठादिशूलपक्षाभिघातनुत् ॥ ८.१८
अथ भवति पारिभद्रो मन्दारः पारिजातको निम्बतरुः ।
रक्तकुसुमः क्रिमिघ्नो बहुपुष्पो रक्तकेसरो वसवः ॥ ८.१९
पारिभद्रः कटूष्णः स्यात्कफवातनिकृन्तनः ।
अरोचकहरः पथ्यो दीपनश्चापि कीर्तितः ॥ ८.२०
खदिरो बालपत्त्रश्च खाद्यः पत्त्री क्षिती क्षमा ।
सुशल्यो वक्रकण्टश्च यज्ञाङ्गो दन्तधावनः ॥ ८.२१
गायत्री जिह्मशल्यश्च कण्टी सारद्रुमस्तथा ।

कुष्ठारिर्बहुसारश्च मेध्यः सप्तदशाह्वयः ॥ ८.२२
खदिरस्तु रसे तिक्तः शीतः पित्तकफापहः ।
पाचनः कुष्ठकासास्रशोफकण्डूव्रणापहः ॥ ८.२३
खदिरः श्वेतसारोऽन्यः कार्मुकः कुब्जकण्टकः ।
सोमसारो नेमिवृक्षः सोमवल्कः पथिद्रुमः ॥ ८.२४
श्वेतस्तु खदिरस्तिक्तः कषायः कटुरुष्णकः ।
कण्डूतिभूतकुष्ठघ्नः कफवातव्रणापहः ॥ ८.२५
स रक्तो रक्तसारश्च सुसारस्ताम्रकण्टकः ।
स प्रोक्तो बहुशल्यश्च याज्ञिकः कुष्ठतोदनः ।
यूपद्रुमोऽस्रखदिरोऽपरुश्च दशधा स्मृतः ॥ ८.२६
कटूष्णो रक्तखदिरः कषायो गुरुतिक्तकः ।
आमवातास्रवातघ्नो व्रणभूतज्वरापहः ॥ ८.२७
विट्खदिरः काम्भोजी कालस्कन्धश्च गोरटो मरुजः ।
पत्त्रतरुर्बहुसारः संसारः खादिरो ग्रहैर्महासारः ॥ ८.२८
विट्खदिरः कटुरुष्णस्तिक्तो रक्तव्रणोत्थदोषहरः ।
कण्डूतिविषविसर्पज्वरकुष्ठोन्मादभूतघ्नः ॥ ८.२९
अरिः संदानिका दाला ज्ञेया खदिरपत्त्रिका ।
अरिः कषायकटुका तिक्ता रक्तार्तिपित्तनुत् ॥ ८.३०
खादिरः खदिरोद्भूतस्तत्सारो रङ्गदः स्मृतः ।
ज्ञेयः खदिरसारश्च तथा रङ्गः षडाह्वयः ॥ ८.३१
कटुकः खादिरः सारस्तिक्तोष्णः कफवातहृत् ।
व्रणकण्ठामयघ्नश्च रुचिकृद्दीपनः परः ॥ ८.३२
शमी शान्ता तुङ्गा कचरिपुफला केशमथनी शिवेशा नौर्लक्ष्मीस्तपनतनुनष्टा शुभकरी ।
हविर्गन्धा मेध्या दुरितशमनी शङ्कुफलिका सुभद्रा मङ्गल्या सुरभिरथ पापशमनी ॥ ८.३३
भद्राथ शंकरी ज्ञेया केशहन्त्री शिवाफला ।
सुपत्त्रा सुखदा चैव पञ्चविंशाभिधा मता ॥ ८.३४
शमी रूक्षा कषाया च रक्तपित्तातिसारजित् ।
तत्फलं तु गुरु स्वादु तिक्तोष्णं केशनाशनम् ॥ ८.३५
द्वितीया तु शमी शान्ता शुभा भद्रापराजिता ।
जया च विजया चैव पूर्वोक्तगुणसंयुता ॥ ८.३६
बर्बुरो युगलाक्षश्च कण्टालुस्तीक्ष्णकण्टकः ।
गोशृङ्गः पङ्क्तिबीजश्च दीर्घकण्टः कफान्तकः ।
दृढबीजः श्वासभक्ष्यो ज्ञेयश्चेति दशाह्वयः ॥ ८.३७
बर्बुरस्तु कषायोष्णः कफकासामयापहः ।
आमरक्तातिसारघ्नः पित्तदाहार्तिनाशनः ॥ ८.३८
जालबर्बुरकस्त्वन्यश्छत्त्राकः स्थूलकण्टकः ।
सूक्ष्मशाखस्तनुच्छायो रन्ध्रकण्टः षडाह्वयः ॥ ८.३९
जालबर्बुरको रूक्षो वातामयविनाशकृत् ।
पित्तकृच्च कषायोष्णः कफहृद्दाहकारकः ॥ ८.४०
इरिमेदोऽरिमेदश्च गोधास्कन्धोऽरिमेदकः ।
अहिमेदोऽहिमारश्च शितमेदोऽहिमेदकः ॥ ८.४१
अरिमेदः कषायोष्णस्तिक्तो भूतविनाशकः ।
शोफातिसारकासघ्नो विषवीसर्पनाशनः ॥ ८.४२
पक्वाण्डः पञ्चकृत्पञ्चवर्धनः पञ्चरक्षकः ।
दृष्ट्यञ्जनविधौ शस्तः कटुः जीर्णज्वरापहः ॥ ८.४३

इङ्गुदी हिङ्गुपत्रश्च विषकण्टोऽनिलान्तकः ।
गौरस्तूक्तः सुपत्रश्च शूलारिस्तापसद्रुमः ॥ ८.४४
तीक्ष्णकण्टस्तैलफलः पूतिगन्धो विगन्धकः ।
ज्ञेयः क्रोष्टुफलश्चैव वह्नीन्दुगणिताह्वयः ॥ ८.४५
इङ्गुदी मदगन्धिः स्यात्कटूष्णा फेनिला लघुः ।
रसायनी हन्ति जन्तुवातामयकफव्रणान् ॥ ८.४६
निष्पत्रकः करीरश्च करीरग्रन्थिलस्तथा ।
कृकरो गूढपत्रश्च करकस्तीक्ष्णकण्टकः ॥ ८.४७
करीरमाध्मानकरं कषायं कटूष्णमेतत्कफकारि भूरि ।
श्वासानिलारोचकसर्वशूलविच्छर्दिखर्जूव्रणदोषहारि ॥ ८.४८
स्नुही सुधा महावृक्षः क्षीरी निस्त्रिंशपत्त्रिका ।
शाखाकण्टश्च गुण्डाख्यः सेहुण्डो वज्रकण्टकः ॥ ८.४९
बहुशाखो वज्रवृक्षो वातारिः क्षीरकाण्डकः ।
भद्रो व्याघ्रनखश्चैव नेत्रारिर्दण्डवृक्षकः ।
समन्तदुग्धो गण्डीरो ज्ञेयः स्नुक्चेति विंशतिः ॥ ८.५०
स्नुही चोष्णा पित्तदाहकुष्ठवातप्रमेहनुत् ।
क्षीरं वातविषाध्मानगुल्मोदरहरं परम् ॥ ८.५१
स्नुही चान्या त्रिधारा स्यात्तिस्रो धारास्तु यत्र सा ।
पूर्वोक्तगुणवत्येषा विशेषाद्रससिद्धिदा ॥ ८.५२
कन्थारी कथरी कन्था दुर्धर्षा तीक्ष्णकण्टका ।
तीक्ष्णगन्धा क्रूरगन्धा दुष्प्रवेशाष्टकाभिधा ॥ ८.५३
कन्थारी कटुतिक्तोष्णा कफवातनिकृन्तनी ।
शोफघ्नी दीपनी रुच्या रक्तग्रन्थिरुजापहा ॥ ८.५४
श्वेतैरण्डः सितैरण्डश्चित्रो गन्धर्वहस्तकः ।
आमण्डस्तरुणः शुक्लो वातारिर्दीर्घदण्डकः ।
पञ्चाङ्गुलो वर्धमानो रुवुको द्वादशाह्वयः ॥ ८.५५
रक्तैरण्डोऽपरो व्याघ्रो हस्तिकर्णो रुवुस्तथा ।
उरुवुको नागकर्णश्चञ्चुरुत्तानपत्त्रकः ॥ ८.५६
करपर्णो याचनकः स्निग्धो व्याघ्रदलस्तथा ।
तत्करश्चित्रबीजश्च ह्रस्वैरण्डस्त्रिपञ्चधा ॥ ८.५७
श्वेतैरण्डः सकटुकरसस्तिक्त उष्णः कफार्तिध्वंसं धत्ते ज्वरहरमरुत्कासहारी रसार्हः ।
रक्तैरण्डः श्वयथुपचनः वान्तिरक्तार्तिपाण्डुभ्रान्तिश्वासज्वरकफहरोऽरोचकघ्नो लघुश्च ॥ ८.५८
स्थूलैरण्डो महैरण्डो महापञ्चाङ्गुलादिकः ।
स्थूलैरण्डो गुणाढ्यः स्याद्रसवीर्यविपक्तिषु ॥ ८.५९
घोण्टा बदरिका घोटी गोलिका शत्रुकण्टकः ।
कर्कटी च तुरंगी च तुरगाह्वाष्टधा स्मृता ॥ ८.६०
घोटिका कटुकोष्णा च मधुरा वातनाशनी ।
व्रणकण्डूतिकुष्ठासृग्दोषश्वयथुहारिणी ॥ ८.६१
लताकरञ्जो दुःस्पर्शो वीरास्यो वज्रवीरकः ।
धनदाक्षः कण्टफलः कुबेराक्षश्च सप्तधा ॥ ८.६२
लताकरञ्जपत्त्रं तु कटूष्णं कफवातनुत् ।
तद्बीजं दीपनं पथ्यं शूलगुल्मव्यथापहम् ॥ ८.६३
कारी तु कारिका कार्या गिरिजा कटुपत्त्रिका ।
तत्रैका कण्टकारी स्यादन्या त्वाकर्षकारिका ॥ ८.६४
कारी कषायमधुरा द्विविधा पित्तनाशनी ।

दीपनी ग्राहिणी रुच्या कण्ठशोधकरी गुरुः ॥ ८.६५
मदनः शल्यकैडर्यः पिण्डी धाराफलस्तथा ।
तरटः करहाटश्च राहुः पिण्डातकः स्मृतः ॥ ८.६६
कण्टालो विषमुष्टिश्च छर्दनो विषपुष्पकः ।
घण्टालो मादनो हर्षो घण्टाख्यो वस्तिरोधनः ।
ग्रन्थिफलो गोलफलो मदनाह्वश्च विंशतिः ॥ ८.६७
मदनः कटुतिक्तोष्णः कफवातव्रणापहः ।
शोफदोषापहश्चैव वमने च प्रशस्यते ॥ ८.६८
वाराहोऽन्यः कृष्णवर्णो महापिण्डीतको महान् ।
स्निग्धपिण्डीतकश्चान्यः स्थूलवृक्षफलस्तथा ॥ ८.६९
अन्यौ च मदनौ श्रेष्ठौ कटुतिक्तरसान्वितौ ।
छर्दनौ कफहृद्रोगपक्वामाशयशोधनौ ॥ ८.७०
बिल्वान्तरश्चीरवृक्षः क्षुधाकुशलसंज्ञकः ।
दीर्घमूलो वीरवृक्षः कृच्छ्रारिश्च षडाह्वयः ॥ ८.७१
बिल्वान्तरः कटूष्णश्च कृच्छ्रघ्नः संधिशूलनुत् ।
वह्निदीप्तिकरः पथ्यो वातामयविनाशनः ॥ ८.७२
तरटी तारटी तीव्रा खर्बुरा रक्तबीजका ।
तरटी तिक्तमधुरा गुरुर्बल्या कफापहृत् ॥ ८.७३
श्रीवल्ली शिववल्ली च कण्टवल्ली च शीतला ।
अम्ला कटुफलाश्वत्था दुरारोहा च साष्टधा ॥ ८.७४
श्रीवल्ली कटुकाम्ला च वातशोफककफापहा ।
तत्फलं तैललेपघ्नमत्यम्लं रुचिकृत्परम् ॥ ८.७५
अन्या निकुञ्जिकाम्लाख्या कुञ्जिका कुञ्जवल्लरी ।
निकुञ्जिका बुधैरुक्ता श्रीवल्लीसदृशी गुणैः ॥ ८.७६
अपर्वदण्डो दीर्घश्च रामबाणो नृपप्रियः ।
रामकाण्डो रामशरो रामस्येषुश्च सप्तधा ॥ ८.७७
रामकाण्डजमूलं स्यादीषदुष्णं रुचिप्रदम् ।
रसे चाम्लकषायश्च पित्तकृत्कफवातहृत् ॥ ८.७८
यावनालोऽथ नदीजो दृढत्वग्वारिसम्भवः ।
यावनालनिभश्चैव खरपत्त्रः षडाह्वयः ॥ ८.७९
यावनालशरमूलमीषन्मधुररुच्यकम् ।
शीतं पित्ततृषापघ्नं पशूनामबलप्रदम् ॥ ८.८०
शरो बाण इषुः काण्ड उत्कटः सायकः क्षुरः ।
इक्षुरः क्षुरिकापत्त्रो विशिखश्च दशाभिधः ॥ ८.८१
स्थूलोऽन्यः स्थूलशरो महाशरः स्थूलसायकमुखाख्यः ।
इक्षुरकः क्षुरपत्त्रो बहुमूलो दीर्घमूलको मुनिभिः ॥ ८.८२
शरद्वयं स्यान्मधुरं सुतिक्तं कोष्णं कफभ्रान्तिमदापहारि ।
बलं च वीर्यं च करोति नित्यं निषेवितं वातकरं च किंचित् ॥ ८.८३
मुञ्जो मौञ्जीतृणाख्यः स्याद्ब्रह्मण्यस्तेजनाह्वयः ।
वानीरजो मुञ्जनकः शारी दर्भाह्वयश्च सः ॥ ८.८४
दूरमूलो दृढतृणो दृढमूलो बहुप्रजः ।
रञ्जनः शत्रुभङ्गश्च स्याच्चतुर्दशसंज्ञकः ॥ ८.८५
मुञ्जस्तु मधुरः शीतः कफपित्तजदोषजित् ।
ग्रहरक्षासु दीक्षासु पावनो भूतनाशनः ॥ ८.८६
काशः काण्डेक्षुरिक्ष्वारिः काकेक्षुर्वायसेक्षुकः ।

इक्षुरश्चेक्षुकाण्डश्च शारदः सितपुष्पकः ॥ ८.८७
नादेयो दर्भपत्त्रश्च लेखनः काण्डकाण्डकौ ।
कण्ठालंकारकश्चैव ज्ञेयः पञ्चदशाह्वयः ॥ ८.८८
काशश्च शिशिरो गौल्यो रुचिकृत्पित्तदाहनुत् ।
तर्पणो बलकृद्वृष्य आमशोषक्षयापहः ॥ ८.८९
अन्योऽशिरी मिशिर्गण्डा अश्वालो नीरजः शरः ।
मिशिर्मधुरशीतः स्यात्पित्तदाहक्षयापहः ॥ ८.९०
सितदर्भो ह्रस्वकुम्भः पूतो यज्ञियपत्त्रकः ।
वज्रो ब्रह्मपवित्रश्च तीक्ष्णो यज्ञस्य भूषणः ।
सूचीमुखः पुण्यतृणो वह्निः पूततृणो द्विषट् ॥ ८.९१
दर्भमूलं हिमं रुच्यं मधुरं पित्तनाशनम् ।
रक्तज्वरतृषाश्वासकामलादोषशोषकृत् ॥ ८.९२
कुशोऽन्यः शरपत्त्रश्च हरिद्गर्भः पृथुच्छदः ।
शारी च रूक्षदर्भश्च दीर्घपत्त्रः पवित्रकः ॥ ८.९३
दर्भौ द्वौ च गुणे तुल्यौ तथापि च सितोऽधिकः ।
यदि श्वेतकुशाभावस्त्वपरं योजयेत्भिषक् ॥ ८.९४
बल्वजा दृढपत्त्री च तृणेक्षुस्तृणबल्वजा ।
मौञ्जीपत्त्रा दृढतृणा पानीयाश्वा दृढक्षुरा ॥ ८.९५
बल्वजा मधुरा शीता पित्तदाहतृषापहा ।
वातप्रकोपणी रुच्या कण्ठशुद्धिकरी परा ॥ ८.९६
कुतृणं कत्तृणं भूतिर्भूतिकं रोहिषं तृणम् ।
श्यामकं ध्यामकं पूतिर्मुद्गलं दवदग्धकम् ॥ ८.९७
कुतृणं दशनामाढ्यं कटुतिक्तकफापहम् ।
शस्त्रशल्यादिदोषघ्नं बालग्रहविनाशनम् ॥ ८.९८
अन्यद्रोहिषकं दीर्घं दृढकाण्डो दृढच्छदम् ।
द्राघिष्ठं दीर्घनालश्च तिक्तसारश्च कुत्सितम् ॥ ८.९९
दीर्घरोहिषकं तिक्तं कटूष्णं कफवातजित् ।
भूतग्रहविषघ्नश्च व्रणक्षतविरोपणम् ॥ ८.१००
नालो नडो नलश्चैव कुक्षिरन्ध्रोऽथ कीचकः ।
वंशान्तरश्च धमनः शून्यमध्यो विभीषणः ॥ ८.१०१
छिद्रान्तो मृदुपत्त्रश्च रन्ध्रपत्त्रो मृदुच्छदः ।
नालवंशः पोटगल इत्यस्याह्वास्त्रिपञ्चधा ॥ ८.१०२
नलः शीतकषायश्च मधुरो रुचिकारकः ।
रक्तपित्तप्रशमनो दीपनो वीर्यवृद्धिदः ॥ ८.१०३
अन्यो महानलो वन्यो देवनलो नलोत्तमः ।
स्थूलनालः स्थूलदण्डः सुरनालः सुरद्रुमः ॥ ८.१०४
देवनालोऽतिमधुरो वृष्य ईषत्कषायकः ।
नलः स्यादधिको वीर्ये शस्यते रसकर्मणि ॥ ८.१०५
स्यान्नीलदूर्वा हरिता च शाम्भवी श्यामा च शान्ता शतपर्विकामृता ।
पूता शतग्रन्थिरनुष्णवल्लिका शिवा शिवेष्टापि च मङ्गला जया ॥ ८.१०६
सुभगा भूतहन्त्री च शतमूला महौषधी ।
अमृता विजया गौरी शान्ता स्यादेकविंशतिः ॥ ८.१०७
नीलदूर्वा तु मधुरा तिक्ता शिशिररोचनी ।
रक्तपित्तातिसारघ्नी कफवातज्वरापहा ॥ ८.१०८
स्याद्गोलोमी श्वेतदूर्वा सिताख्या चण्डा भद्रा भार्गवी दुर्मरा च ।

गौरी विघ्नेशानकान्ताप्यनन्ता श्वेता दिव्या श्वेतकाण्डा प्रचण्डा ॥ ८.१०९
सहस्रवीर्या च सहस्रकाण्डा सहस्रपर्वा सुरवल्लभा च ।
शुभा सुपर्वा च सितच्छदा च स्वच्छा च कच्छान्तरुहाब्धिहस्ता ॥ ८.११०
श्वेतदूर्वातिशिशिरा मधुरा वान्तिपित्तजित् ।
आमातिसारकासघ्नी रुच्या दाहतृषापहा ॥ ८.१११
मालादूर्वा वल्लिदूर्वालिदूर्वा मालाग्रन्थिर्ग्रन्थिला ग्रन्थिदूर्वा ।
मूलग्रन्थिर्वल्लरी ग्रन्थिमूला रोहत्पर्वा पर्ववल्ली सिताख्या ।
वल्लिदूर्वा सुमधुरा तिक्ता च शिशिरा च सा ।
पित्तदोषप्रशमनी कफवान्तितृषापहा ॥ ८.११२
गण्डाली स्याद्गण्डदूर्वातितीव्रा मत्स्याक्षी स्याद्वारुणी मीननेत्रा ।
श्यामग्रन्थिः ग्रन्थिला ग्रन्थिपर्णी सूचीपत्रा श्यामकाण्डा जलस्था ॥ ८.११३
शकुलाक्षी कलाया च चित्रा पञ्चदशाह्वया ॥ ८.११४
गण्डदूर्वा तु मधुरा वातपित्तज्वरापहा ।
शिशिरा द्वंद्वदोषघ्नी भ्रमतृष्णाश्रमापहा ॥ ८.११५
दूर्वाः कषाया मधुराश्च शीताः पित्तात्तृषारोचकवान्तिहन्त्र्यः ।
सदाहमूर्च्छाग्रहभूतशान्तिश्लेष्मश्रमध्वंसनतृप्तिदाश्च ॥ ८.११६
कुन्दुरुः कन्दुरो रुण्डी दीर्घपत्त्रः खरच्छदः ।
रसाभः क्षेत्रसम्भूतः सुतृष्णो मृगवल्लभः ॥ ८.११७
गौल्यं कुन्दुरुमूलं च शीतं पित्तातिसारनुत् ।
प्रशस्तं शोधनानां च बलपुष्टिविवर्धनम् ॥ ८.११८
भूतृणो रोहिणो भूतिर्भूतिकोऽथ कुटुम्बकः ।
मालातृणं सुमाली च छत्त्रोऽतिछत्त्रकस्तथा ॥ ८.११९
गुह्यबीजः सुगन्धश्च गुलालः पुंस्त्वविग्रहः ।
बधिरश्चातिगन्धश्च शृङ्गरोहः रसेन्दुकः ॥ ८.१२०
भूतृणं कटुतिक्तं च वातसंतापनाशनम् ।
हन्ति भूतग्रहावेशान् विषदोषांश्च दारुणान् ॥ ८.१२१
सुगन्धभूतृणश्चान्यः सुरसः सुरभिस्तथा ।
गन्धतृणः सुगन्धश्च मुखवासः षडाह्वयः ॥ ८.१२२
गन्धतृणं सुगन्धि स्यादीषत्तिक्तं रसायनम् ।
स्निग्धं मधुरशीतं च कफपित्तश्रमापहम् ॥ ८.१२३
उखलो भूरिपत्त्रश्च सुतृणश्च तृणोत्तमः ।
उखलो बलदो रुच्यः पशूनां सर्वदा हितः ॥ ८.१२४
इक्षुदर्भा सुदर्भा च पत्त्रालुस्तृणपत्त्रिका ॥ ८.१२५
इक्षुदर्भा सुमधुरा स्निग्धा चेषत्कषायका ।
कफपित्तहरा रुच्या लघुः संतर्पणी स्मृता ॥ ८.१२६
गोमूत्रिका रक्ततृणा क्षेत्रजा कृष्णभूमिजा ।
गोमूत्रिका तु मधुरा वृष्या गोदुग्धदायिनी ॥ ८.१२७
शिल्पिका शिल्पिनी शीता क्षेत्रजा च मृदुच्छदा ।
शिल्पिका मधुरा शीता तद्बीजं बलवृष्यदम् ॥ ८.१२८
निःश्रेणिका श्रेणिका च नीरसा वनवल्लरी ।
निःश्रेणिका नीरसोष्णा पशूनामबलप्रदा ॥ ८.१२९
गर्मोटिका सुनीला च जरडी च जलाश्रया ॥ ८.१३०
जरडी मधुरा शीता सारणी दाहहारिणी ।
रक्तदोषहरा रुच्या पशूनां दुग्धदायिनी ॥ ८.१३१
मज्जरः पवनः प्रोक्तः सुतृणः स्निग्धपत्त्रकः ।

मृदुग्रन्थिश्च मधुरो धेनुदुग्धकरश्च सः ॥ ८.१३२
तृणाढ्यं पर्वततृणं पत्राढ्यं च मृगप्रियम् ।
बलपुष्टिकरं रुच्यं पशूनां सर्वदा हितम् ॥ ८.१३३
वंशपत्री वंशदला जीरिका जीर्णपत्त्रिका ।
वंशपत्री सुमधुरा शिशिरा पित्तनाशनी ।
रक्तदोषहरा रुच्या पशूनां दुग्धदायिनी ॥ ८.१३४
मन्थानकस्तु हरितो दृढमूलस्तृणाधिपः ।
स्निग्धो धेनुप्रियो दोग्धा मधुरो बहुवीर्यकः ॥ ८.१३५
पल्लिवाहो दीर्घतृणः सुपत्त्रस्ताम्रवर्णकः ।
अदृढः शाकपत्त्रादिः पशूनामबलप्रदः ॥ ८.१३६
लवणतृणं लोणतृणं तृणाम्लं पटुतृणकमम्लकाण्डं च ।
कटुतृणकं क्षाराम्लं कषायस्तन्यमश्ववृद्धिकरम् ॥ ८.१३७
पण्यान्धः कङ्गुनीपत्त्रः पण्यान्धा पणधा च सा ॥ ८.१३८
पण्यान्धा समवीर्या स्यात्तिक्ता क्षारा च सारिणी ।
तत्कालशस्त्रघातस्य व्रणसंरोपणी परा ॥ ८.१३९
दीर्घा मध्या तथा ह्रस्वा पण्यान्धा त्रिविधा स्मृता ।
रसवीर्यविपाके च मध्यमा गुणदायिका ॥ ८.१४०
गुण्डस्तु काण्डगुण्डः स्याद्दीर्घकाण्डस्त्रिकोणकः ।
छत्त्रगुच्छोऽसिपत्त्रश्च नीलपत्त्रस्त्रिधारकः ॥ ८.१४१
वृत्तगुण्डोऽपरो वृत्तो दीर्घनालो जलाश्रयः ।
तत्र स्थूलो लघुश्चान्यस्त्रिधायं द्वादशाभिधः ॥ ८.१४२
गुण्डास्तु मधुराः शीताः कफपित्तातिसारहाः ।
दाहरक्तहरास्तेषां मध्ये स्थूलतरोऽधिकः ॥ ८.१४३
गुण्डकन्दः कसेरुः स्यात्क्षुद्रमुस्ता कसेरुका ।
शूकरेष्टः सुगन्धिश्च सुकन्दो गन्धकन्दकः ॥ ८.१४४
कसेरुकः कषायोऽल्पमधुरोऽतिखरस्तथा ।
रक्तपित्तप्रशमनः शीतो दाहश्रमापहः ॥ ८.१४५
चणिका दुग्धदा गौल्या सुनीला क्षेत्रजा हिमा ।
वृष्या बल्यातिमधुरा बीजैः पशुहिता तृणैः ॥ ८.१४६
गुण्डासिनी तु गुण्डा गुण्डाला गुच्छमूलका चिपिटा ।
तृणपत्त्री जलवासा पृथुला सुविष्टरा च नवाह्वा ॥ ८.१४७
गुण्डासिनी कटुः स्वादे पित्तदाहश्रमापहा ।
तिक्तोष्णा श्वयथुघ्नी च व्रणदोषनिबर्हणी ॥ ८.१४८
शूली तु शूलपत्त्री स्यादशाखा धूम्रमूलिका ।
जलाश्रया मृदुलता पिच्छिला महिषीप्रिया ॥ ८.१४९
शूली तु पिच्छिला चोष्णा गुरुर्गौल्या बलप्रदा ।
पित्तदाहहरा रुच्या दुग्धवृद्धिप्रदायिका ॥ ८.१५०
परिपेल्लं प्लवं धान्यं गोपुटं स्यात्कुटन्नटम् ।
सितपुष्पं दासपुरं गोनर्दं जीर्णबुध्नकम् ॥ ८.१५१
परिपेल्लं कटूष्णं च कफमारुतनाशनम् ।
व्रणदाहामशूलघ्नं रक्तदोषहरं परम् ॥ ८.१५२
हिज्जलोऽथ नदीकान्तो जलजो दीर्घपत्त्रकः ।
नदीजो निचुलो रक्तः कार्मुकः कथितश्च सः ॥ ८.१५३
हिज्जलः कटुरुष्णश्च पवित्रो भूतनाशनः ।
वातामयहरो नानाग्रहसंचारदोषजित् ॥ ८.१५४

शैवालं जलनीली स्यात्शैवलं जलजं च तत् ।
शैवालं शीतलं स्निग्धं संतापव्रणनाशनम् ॥ ८.१५५
इत्थं नानाकण्टकिविटपिप्रस्तावव्याख्यातैरण्डादिकतृणविस्ताराढ्यम् ।
वर्गं विद्वान् वैद्यकविषयप्रावीण्यज्ञेयं पण्यारण्यकगुणमीयाद्वैद्यः ॥ ८.१५६
दुर्वारां विकृतिं स्वसेवनविदां भिन्दन्ति ये भूयसा दुर्वाहाश्च हठेन कण्टकितया सूक्ष्माश्च ये केचन ।
तेषामेष महागमान्तरभुवामारण्यकानां किल क्रूरातङ्कभयार्तनिर्वृतिकरो वर्गः सतां संमतः ॥ ८.१५७
द्विजानां यो राजा जयति रचयन्नोषधिगणं प्रतीतोऽयं नृणाममृतकरतां धारयति च ।
अमुष्यायं वर्गो नृहरिकृतिनः काङ्क्षति कृतौ स्थितिं शाल्मल्यादिर्वसुभिरभिधाशेखरमणौ ॥ ८.१५८

राजनिघण्टु, प्रभद्रादिवर्गः

प्रभद्रः पञ्चधा प्रोक्तः काश्मर्यो लघुपूर्वकः ।
द्विरग्निमन्थः श्योनाकद्वितयं चाजशृङ्गिका ॥ ९.१
काश्मर्याश्मन्तकश्चाथ कर्णिकारद्वयं तथा ।
वृश्चिकाली च कुटजस्तद्बीजं च शिरीषकः ॥ ९.२
करञ्जः षड्विधोऽङ्कोलो नीलः सर्जाश्वकर्णकौ ।
तालः श्रीतालहिन्तालमाडास्तूलस्तमालकः ॥ ९.३
चतुर्विधः कदम्बोऽथ वानीरः कुम्भिवेतसः ।
धवश्च धन्वनो भूर्जस्तिनिशश्च ततोऽर्जुनः ॥ ९.४
हरिद्रुदग्धाशाखोटाः शाकोऽथो शिंशपात्रयम् ।
असनत्रयं च वरुणः पुत्रजीवश्च पिण्डिका ॥ ९.५
कारस्करोऽथ कटभ्यौ क्षवको देवसर्षपः ।
डहुर्विकङ्कतश्चेति स्वराब्धिगणिताः क्रमात् ॥ ९.६
अथ निगदितः प्रभद्रः पिचुमन्दः पारिभद्रको निम्बः ।
काकफलः कीरेष्टो नेतारिष्टश्च सर्वतोभद्रः ॥ ९.७
धमनो विशीर्णपर्णः पवनेष्टः पीतसारकः शीतः ।
वरतिक्तोऽरिष्टफलो ज्येष्ठामालकश्च हिङ्गुनिर्यासः ॥ ९.८
छर्दनश्चाग्निधमनो ज्ञेया नाम्नां तु विंशतिः ॥ ९.९
प्रभद्रकः प्रभवति शीततिक्तकः कफव्रणकृमिवमिशोफशान्तये ।
बलासभिद्बहुविषपित्तदोषजिद्विशेषतो हृदयविदाहशान्तिकृत् ॥ ९.१०
महानिम्बो मदोद्रेकः कार्मुकः केशमुष्टिकः ।
काकाण्डो रम्यकोऽक्षीरो महातिक्तो हिमद्रुमः ॥ ९.११
महानिम्बस्तु शिशिरः कषायः कटुतिक्तकः ।
अस्रदाहबलासघ्नो विषमज्वरनाशनः ॥ ९.१२
कैडर्योऽन्यो महानिम्बो रामणो रमणस्तथा ।
गिरिनिम्बो महारिष्टः शुक्लशालः कफाह्वयः ॥ ९.१३
कैडर्यः कटुकस्तिक्तः कषायः शीतलो लघुः ।
संतापशोषकुष्ठास्रकृमिभूतविषापहः ॥ ९.१४
भूनिम्बो नार्यतिक्तः स्यात्कैरातो रामसेनकः ।
कैराततिक्तको हैमः काण्डतिक्तः किरातकः ॥ ९.१५
भूनिम्बो वातलस्तिक्तः कफपित्तज्वरापहः ।
व्रणसंरोपणः पथ्यः कुष्ठकण्डूतिशोफनुत् ॥ ९.१६
नेपालनिम्बो नैपालस्तृणनिम्बो ज्वरान्तकः ।
नाडीतिक्तोऽर्धतिक्तश्च निद्रारिः संनिपातहा ॥ ९.१७
नेपालनिम्बः शीतोष्णो योगवाही लघुस्तथा ।
तिक्तोऽतिकफपित्तास्रशोफतृष्णाज्वरापहः ॥ ९.१८
कण्डूलः कृष्णगर्भश्च सोमवल्कप्रचेतसी ।
भद्रावती महाकुम्भी कैडर्यो रामसेनकः ॥ ९.१९
कुमुदा चोग्रगन्धश्च भद्रा रञ्जनकस्तथा ।
कुम्भी च लघुकाश्मर्यः श्रीपर्णी च त्रिपञ्चधा ॥ ९.२०
कट्फलः कटुरुष्णश्च कासश्वासज्वरापहः ।
उग्रदाहहरो रुच्यो मुखरोगशमप्रदः ॥ ९.२१
अग्निमन्थोऽग्निमथनः तर्कारी वैजयन्तिका ।
वह्निमन्थोऽरणी केतुः श्रीपर्णी कर्णिका जया ।
नादेयी विजयानन्ता नदी यावत्त्रयोदश ॥ ९.२२

तर्कारी कटुरुष्णा च तिक्तानिलकफापहा ।
शोफश्लेष्माग्निमान्द्यार्शोविड्बन्धाध्माननाशनी ॥ ९.२३
क्षुद्राग्निमन्थस्तपनो विजया गणिकारिका ।
अरणिर्लघुमन्थश्च तेजोवृक्षस्तनुत्वचा ॥ ९.२४
अग्निमन्थद्वयं चैव तुल्यं वीर्यरसादिषु ।
तत्प्रयोगानुसारेण योजयेत्स्वमनीषया ॥ ९.२५
श्योनाकः शुकनासश्च कट्वङ्गोऽथ कटंभरः ।
मयूरजङ्घोऽरलुकः प्रियजीवः कुटन्नटः ॥ ९.२६
श्योनाकः पृथुशिम्बोऽन्यो भल्लको दीर्घवृन्तकः ।
पोतवृक्षश्च टेण्टूको भूतसारो मुनिद्रुमः ॥ ९.२७
निःसारः फल्गुवृन्ताकः पूतिपत्त्रो वसन्तकः ।
मण्डूकपर्णः पीताङ्गो जम्बूकः पीतपादकः ॥ ९.२८
वातारिः पीतकः शोणः कुटनश्च विरेचनः ।
भ्रमरेष्टो बर्हिजङ्घो नेत्रनेत्रमिताभिधः ॥ ९.२९
श्योनाकयुगलं तिक्तं शीतलं च त्रिदोषजित् ।
पित्तश्लेष्मातिसारघ्नं संनिपातज्वरापहम् ॥ ९.३०
टेण्टुफलं कटूष्णं च कफवातहरं लघु ।
दीपनं पाचनं हृद्यं रुचिकृल्लवणाम्लकम् ॥ ९.३१
अजशृङ्गी मेषशृङ्गी वर्तिका सर्पदंष्ट्रिका ।
चक्षुष्या तिक्तदुग्धा च पुत्रश्रेणी विषाणिका ॥ ९.३२
अजशृङ्गी कटुस्तिक्ता कफार्शःशूलशोफजित् ।
चक्षुष्या श्वासहृद्रोगविषकासातिकुष्ठजित् ॥ ९.३३
अजशृङ्गीफलं तिक्तं कटूष्णं कफवातजित् ।
जठरानलकृथृद्यं रुचिरं लवणाम्लकम् ॥ ९.३४
स्यात्काश्मर्यः काश्मरी कृष्णवृन्ता हीरा भद्रा सर्वतोभद्रिका च ।
श्रीपर्णी स्यात्सिन्धुपर्णी सुभद्रा कम्भारी सा कट्फला भद्रपर्णी ॥ ९.३५
कुमुदा च गोपभद्रा विदारिणी क्षीरिणी महाभद्रा ।
मधुपर्णी स्वभद्रा कृष्णा श्वेता च रोहिणी गृष्टिः ॥ ९.३६
स्थूलत्वचा मधुमती सुफला मेदिनी महाकुमुदा ।
सुदृढत्वचा च कथिता विज्ञेयोनत्रिंशतिर्नाम्नाम् ॥ ९.३७
काश्मरी कटुका तिक्ता गुरूष्णा कफशोफनुत् ।
त्रिदोषविषदाहार्तिज्वरतृष्णास्रदोषजित् ॥ ९.३८
अश्मन्तकश्चेन्दुकश्च कुद्दालश्चाम्लपत्त्रकः ।
श्लक्ष्णत्वक्पीलुपत्त्रश्च स्मृतो यमलपत्त्रकः ॥ ९.३९
अश्मान्तकेन्दुशफरी शिलान्तश्चाम्बुदः स्मृतः ।
पाषाणान्तक इत्युक्तो वह्निचन्द्रमिताह्वयः ॥ ९.४०
अश्मन्तकः स्यान्मधुरः कषायः सुशीतलः पित्तहरः प्रमेहजित् ।
विदाहतृष्णाविषमज्वरापहो विषार्तिविच्छर्दिहरश्च भूतजित् ॥ ९.४१
अथ भवति कर्णिकारो राजतरुः प्रग्रहश्च कृतमालः ।
सुफलश्च परिव्याधो व्याधिरिपुः पङ्क्तिबीजको वसुसंज्ञः ॥ ९.४२
कर्णिकारो रसे तिक्तः कटूष्णः कफशूलहृत् ।
उदरकृमिमेहघ्नो व्रणगुल्मनिवारणः ॥ ९.४३
आरग्वधोऽन्यो मन्थानो रोचनश्चतुरङ्गुलः ।
आरेवतो दीर्घफलो व्याधिघातो नृपद्रुमः ॥ ९.४४
हेमपुष्पो राजतरुः कण्डूघ्नश्च ज्वरान्तकः ।

अरुजः स्वर्णपुष्पश्च स्वर्णद्रुः कुष्ठसूदनः ॥ ९.४५
कर्णाभरणकः प्रोक्तो महाराजद्रुमः स्मृतः ।
कर्णिकारो महादिः स्यात्प्रोक्तश्चैकोनविंशतिः ॥ ९.४६
आरग्वधोऽतिमधुरः शीतः शूलापहारकः ।
ज्वरकण्डूकुष्ठमेहकफविष्टम्भनाशनः ॥ ९.४७
वृश्चिकाली विषाणी च विषघ्नी नेत्ररोगहा ।
उष्ट्रिकाप्यलिपर्णी च दक्षिणावर्त्तकी तथा ॥ ९.४८
कलिकाप्यागमावर्त्ता देवलाङ्गुलिका तथा ।
करभा भूरिदुग्धा च कर्कशा चामरा च सा ॥ ९.४९
स्वर्णपुष्पा युग्मफला तथा क्षीरविषाणिका ।
प्रोक्ता भासुरपुष्पा च वसुचन्द्रसमाह्वया ॥ ९.५०
वृश्चिकाली कटुस्तिक्ता सोष्णा हृद्वक्त्रशुद्धिकृत् ।
रक्तपित्तहरा बल्या विबन्धारोचकापहा ॥ ९.५१
कुटजः कौटजः शक्रो वत्सको गिरिमल्लिका ।
कलिङ्गो मल्लिकापुष्पः प्रावृष्यः शक्रपादपः ॥ ९.५२
वरतिक्तो यवफलः संग्राही पाण्डुरद्रुमः ।
प्रावृषेण्यो महागन्धः स्यात्पञ्चदशधाभिधः ॥ ९.५३
कुटजः कटुतिक्तोष्णः कषायश्चातिसारजित् ।
तत्रासितोऽस्रपित्तघ्नस्त्वग्दोषार्शोनिकृन्तनः ॥ ९.५४
इन्द्रयवा तु शक्राह्वा शक्रबीजानि वत्सकः ।
तथा वत्सकबीजानि भद्रजा कुटजाफलम् ॥ ९.५५
ज्ञेया भद्रयवा चैव बीजान्ता कुटजाभिधा ।
तथा कलिङ्गबीजानि पर्यायैर्दशधाभिधा ॥ ९.५६
इन्द्रयवा कटुस्तिक्ता शीता कफवातरक्तपित्तहरा ।
दाहातिसारशमनो नानाज्वरदोषशूलमूलघ्नी ॥ ९.५७
शिरीषः शीतपुष्पश्च भण्डिको मृदुपुष्पकः ।
शुकेष्टो बर्हिपुष्पश्च विषहन्ता सुपुष्पकः ॥ ९.५८
उद्दानकः शुकतरुर्ज्ञेयो लोमशपुष्पकः ।
कपीतनः कलिङ्गश्च श्यामलः शङ्खिनीफलः ।
मधुपुष्पस्तथा वृत्तपुष्पः सप्तदशाह्वयः ॥ ९.५९
शिरीषः कटुकः शीतो विषवातहरः परः ।
पामासृक्कुष्ठकण्डूतित्वग्दोषस्य विनाशनः ॥ ९.६०
करञ्जो नक्तमालश्च पूतिकश्चिरबिल्वकः ।
पूतिपर्णो वृद्धफलो रोचनश्च प्रकीर्यकः ॥ ९.६१
करञ्जः कटुरुष्णश्च चक्षुष्यो वातनाशनः ।
तस्य स्नेहोऽतिस्निग्धश्च वातघ्नः स्थिरदीप्तिदः ॥ ९.६२
अन्यो घृतकरञ्जः स्यात्प्रकीर्यो घृतपर्णकः ।
स्निग्धपत्रस्तपस्वी च विषारिश्च विरोचनः ॥ ९.६३
घृतकरञ्जः कटूष्णो वातहृद्व्रणनाशनः ।
सर्वत्वग्दोषशमनो विषस्पर्शविनाशनः ॥ ९.६४
ज्ञेयो महाकरञ्जोऽन्यः षड्ग्रन्थो हस्तिचारिणी ।
उदकीर्या विषघ्नी च काकघ्नी मदहस्तिनी ।
अङ्गारवल्ली शार्ङ्गेष्टा मधुसत्तावमायिनी ॥ ९.६५
हस्तिरोहणकश्चैव ज्ञेयो हस्तिकरञ्जकः ।
सुमनाः काकभाण्डी च मदमत्तश्च षोडश ॥ ९.६६

महाकरञ्जस्तीक्ष्णोष्णः कटुको विषनाशनः ।
कण्डूविचर्चिकाकुष्ठत्वग्दोषव्रणनाशनः ॥ ९.६७
प्रकीर्यो रजनीपुष्पः सुमनाः पूतिकर्णिकः ।
पूतिकरञ्जः कैडर्यः कलिमालश्च सप्तधा ॥ ९.६८
अन्यो गुच्छकरञ्जः स्निग्धदलो गुच्छपुच्छको नन्दी ।
गुच्छी च मातृनन्दी सानन्दो दन्तधावनो वसवः ॥ ९.६९
करञ्जः कटुतिक्तोष्णो विषवातार्तिकृन्तनः ।
कण्डूविचर्चिकाकुष्ठस्पर्शत्वग्दोषनाशनः ॥ ९.७०
रीठाकरञ्जकस्त्वन्यो गुच्छलो गुच्छपुष्पकः ।
रीठा गुच्छफलोऽरिष्टो मङ्गल्यः कुम्भबीजकः ।
प्रकीर्यः सोमवल्कश्च फेनिलो रुद्रसंज्ञकः ॥ ९.७१
रीठाकरञ्जस्तिक्तोष्णः कटुः स्निग्धश्च वातजित् ।
कफघ्नः कुष्ठकण्डूतिविषविस्फोटनाशनः ॥ ९.७२
अङ्कोलः कोठरो रेची गूढपत्रो निकोचकः ।
गुप्तस्नेहः पीतसारो मदनो गूढमल्लिका ॥ ९.७३
पीतस्ताम्रफलो ज्ञेयो दीर्घकालो गुणाढ्यकः ।
कोलः कोलम्बकर्णश्च गन्धपुष्पश्च रोचनः ।
विज्ञानतैलगर्भश्च स्मृतिसंख्याभिधा स्मृतः ॥ ९.७४
अङ्कोलः कटुकः स्निग्धो विषलूतादिदोषनुत् ।
कफानिलहरः सूतशुद्धिकृत्रेचनीयकः ॥ ९.७५
नीलस्तु नीलवृक्षो वातारिः शोफनाशनो नखनामा ।
नखवृक्षश्च नखालुर्नखप्रियो दिग्गजेन्द्रमितसंज्ञः ॥ ९.७६
नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा ।
वातामयप्रशमनो नानाश्वयथुनाशनः ॥ ९.७७
सर्जः सर्जरसः शालः कालकुटो रजोद्भवः ।
वल्लीवृक्षश्चीरपर्णो रालः कार्श्योऽजकर्णकः ॥ ९.७८
वस्तकर्णः कषायी च ललनो गन्धवृक्षकः ।
वंशश्च शालनिर्यासो दिव्यसारः सुरेष्टकः ।
शूरोऽग्निवल्लभश्चैव यक्षधूपः सुसिद्धकः ॥ ९.७९
सर्जस्तु कटुतिक्तोष्णो हिमः स्निग्धोऽतिसारजित् ।
पित्तास्रदोषकुष्ठघ्नः कण्डूविस्फोटवातजित् ॥ ९.८०
जरणद्रुमोऽश्वकर्णस्तार्क्ष्यप्रसवश्च शस्यसंवरणः ।
धन्यश्च दीर्घपर्णः कुशिकतरुः कौशिकश्चापि ॥ ९.८१
अश्वकर्णः कटुस्तिक्तः स्निग्धः पित्तास्रनाशनः ।
ज्वरविस्फोटकण्डूघ्नः शिरोदोषार्तिकृन्तनः ॥ ९.८२
तालस्तालद्रुमः पत्री दीर्घस्कन्धो ध्वजद्रुमः ।
तृणराजो मधुरसो मदाढ्यो दीर्घपादपः ॥ ९.८३
चिरायुस्तरुराजश्च गजभक्ष्यो दृढच्छदः ।
दीर्घपत्रो गुच्छपत्रोऽप्यासवद्रुश्च षोडश ॥ ९.८४
तालश्च मधुरः शीतपित्तदाहश्रमापहः ।
सरश्च कफपित्तघ्नो मदकृद्दाहशोषनुत् ॥ ९.८५
श्रीतालो मधुतालश्च लक्ष्मीतालो मृदुच्छदः ।
विशालपत्रो लेखार्हो मसीलेख्यदलस्तथा ।
शिरालपत्रकश्चैव याम्योद्भूतो नवाह्वयः ॥ ९.८६
श्रीतालो मधुरोऽत्यन्तमीषच्चैव कषायकः ।

पित्तजित्कफकारी च वातमीषत्प्रकोपयेत् ॥ ९.८७
हिन्तालः स्थूलतालश्च वल्कपत्रो बृहद्दलः ।
गर्भस्रावी लतातालो भीषणो बहुकण्टकः ॥ ९.८८
स्थिरपत्रो द्विधालेख्यः शिरापत्रः स्थिराङ्घ्रिपः ।
अम्लसारो बृहत्तालः स्याच्चतुर्दशधाभिधः ॥ ९.८९
हिन्तालो मधुराम्लश्च कफकृत्पित्तदाहनुत् ।
श्रमतृष्णापहारी च शिशिरो वातदोषनुत् ॥ ९.९०
माडो माडद्रुमो दीर्घो ध्वजवृक्षो वितानकः ।
मद्यद्रुमो मोहकारी मदद्रुरजुरङ्कधा ॥ ९.९१
माडस्तु शिशिरो रुच्यः कषायः पित्तदाहकृत् ।
तृष्णापहो मरुत्कारी श्रमहृत्श्लेष्मकारकः ॥ ९.९२
तूलं तूदं ब्रह्मकाष्ठं ब्राह्मणेष्टं च यूपकम् ।
ब्रह्मदारु सुपुष्पं च सुरूपं नीलवृन्तकम् ।
क्रमुकं विप्रकाष्ठं च मृदुसारं द्विभूमितम् ॥ ९.९३
तूलं तु मधुराम्लं स्यात्वातपित्तहरं सरम् ।
दाहप्रशमनं वृष्यं कषायं कफनाशनम् ॥ ९.९४
तमालो नीलतालः स्यात्कालस्कन्धस्तमालकः ।
नीलध्वजश्च तापिञ्छः कालतालो महाबलः ॥ ९.९५
तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः ।
कफपित्ततृषादाहश्रमभ्रान्तिकरः परः ॥ ९.९६
कदम्बो वृत्तपुष्पश्च सुरभिर्ललनाप्रियः ।
कादम्बर्यः सिन्धुपुष्पो मदाढ्यः कर्णपूरकः ॥ ९.९७
कदम्बस्तिक्तकटुकः कषायो वातनाशनः ।
शीतलः कफपित्तार्तिनाशनः शुक्रवर्धनः ॥ ९.९८
धाराकदम्बः प्रावृष्यः पुलकी भृङ्गवल्लभः ।
मेघागमप्रियो नीपः प्रावृषेण्यः कदम्बकः ॥ ९.९९
धूलीकदम्बः क्रमुकप्रसूनः परागपुष्पो बलभद्रसंज्ञकः ।
वसन्तपुष्पो मकरन्दवासो भृङ्गप्रियो रेणुकदम्बकोऽष्टौ ॥ ९.१००
भूमीकदम्बो भूनिम्बो भूमिजो भृङ्गवल्लभः ।
लघुपुष्पो वृत्तपुष्पो विषघ्नो व्रणहारकः ॥ ९.१०१
त्रिकदम्बाः कटुर्वर्ण्या विषशोफहरा हिमाः ।
कषायाः पित्तलास्तिक्ता वीर्यवृद्धिकराः पराः ॥ ९.१०२
वानीरो वृत्तपुष्पश्च शाखालो जलवेतसः ।
व्याधिघातः परिव्याधो नादेयो जलसम्भवः ॥ ९.१०३
वानीरस्तिक्तशिशिरो रक्षोघ्नो व्रणशोधनः ।
पित्तास्रकफदोषघ्नः संग्राही च कषायकः ॥ ९.१०४
कुम्भी रोमालुविटपी रोमशः पर्पटद्रुमः ।
कुम्भी कटुः कषायोष्णो ग्राही वातकफापहः ॥ ९.१०५
वेतसो निचुलो ज्ञेयो वञ्जुलो दीर्घपत्रकः ।
कलनो मञ्जरीनम्रः सुषेणो गन्धपुष्पकः ॥ ९.१०६
वेतसः कटुकः स्वादुः शीतो भूतविनाशनः ।
पित्तप्रकोपणो रुच्यो विज्ञेयो दीपनः परः ।
रक्तपित्तोद्भवं रोगं कुष्ठदोषं च नाशयेत् ॥ ९.१०७
धवो दृढतरुर्गौरः कषायो मधुरत्वचः ।
शुक्लवृक्षः पाण्डुतरुर्धवलः पाण्डुरो नव ॥ ९.१०८

धवः कषायः कटुकः कफघ्नोऽनिलनाशनः ।
पित्तप्रकोपणो रुच्यो विज्ञेयो दीपनः परः ॥ ९.१०९
धन्वनो रक्तकुसुमो धनुवृक्षो महाबलः ।
रुजापहः पिच्छलको रूक्षः स्वादुफलश्च सः ॥ ९.११०
धन्वनः कटुकोष्णश्च कषायः कफनाशनः ।
दाहशोषकरो ग्राही कण्ठामयशमप्रदः ॥ ९.१११
भूर्जो वल्कद्रुमो भुर्जः सुचर्मा भूर्जपत्रकः ।
चित्रत्वग्बिन्दुपत्रश्च रक्षापत्रो विचित्रकः ।
भूतघ्नो मृदुपत्रश्च शैलेन्द्रस्थो द्विभूमितः ॥ ९.११२
भूर्जः कटुकषायोष्णो भूतरक्षाकरः परः ।
त्रिदोषशमनः पथ्यो दुष्टकौटिल्यनाशनः ॥ ९.११३
तिनिशः स्यन्दनश्चक्री शताङ्गः शकटो रथः ।
रथिको भस्मगर्भश्च मेषी जलधरो दश ॥ ९.११४
तिनिशस्तु कषायोष्णः कफरक्तातिसारजित् ।
ग्राहको दाहजननो वातामयहरः परः ॥ ९.११५
अर्जुनः शम्बरः पार्थश्चित्रयोधी धनंजयः ।
वैरान्तकः किरीटी च गाण्डीवी शिवमल्लकः ॥ ९.११६
सव्यसाची नदीसर्जः कर्णारिः कुरुवीरकः ।
कौन्तेय इन्द्रसूनुश्च वीरद्रुः कृष्णसारथिः ।
पृथाजः फाल्गुनो धन्वी ककुभश्चैकविंशतिः ॥ ९.११७
अर्जुनस्तु कषायोष्णः कफघ्नो व्रणनाशनः ।
पित्तश्रमतृषार्तिघ्नो मारुतामयकोपनः ॥ ९.११८
हरिद्रुः पीतदारुः स्यात्पीतकाष्ठश्च पीतकः ।
कदम्बकः सुपुष्पश्च सुराह्वः पीतकद्रुमः ॥ ९.११९
हरिद्रुः शीतलस्तिक्तो मङ्गल्यः पित्तवान्तिजित् ।
अङ्गकान्तिकरो बल्यो नानात्वग्दोषनाशनः ॥ ९.१२०
दग्धा दग्धरुहा प्रोक्ता दग्धिका च स्थलेरुहा ।
रोमशा कर्कशदला भस्मरोहा सुदग्धिका ॥ ९.१२१
दग्धा कटुकषायोष्णा कफवातनिकृन्तनी ।
पित्तप्रकोपणी चैव जठरानलदीपनी ॥ ९.१२२
शाखोटः स्याद्भूतवृक्षो गवाक्षी यूकावासो भूर्जपत्रश्च पीतः ।
कौशिक्योऽजक्षीरनाशश्च सूक्तस्तिक्तोष्णोऽयं पित्तकृद्वातहारी ॥ ९.१२३
शाकः क्रकचपत्रः स्यात्खरपत्रोऽतिपत्रकः ।
महीसहः श्रेष्टकाष्ठः स्थिरसारो गृहद्रुमः ॥ ९.१२४
शाकस्तु सारकः प्रोक्तः पित्तदाहश्रमापहः ।
कफघ्नं मधुरं रुच्यं कषायं शाकवल्कलम् ॥ ९.१२५
शिंशपा तु महाश्यामा कृष्णसारा च धूम्रिका ।
तीक्ष्णसारा च धीरा च कपिला कृष्णशिंशपा ॥ ९.१२६
श्यामादिशिंशपा तिक्ता कटूष्णा कफवातनुत् ।
नष्टाजीर्णहरा दीप्या शोफातीसारहारिणी ॥ ९.१२७
शिंशपान्या श्वेतपत्रा सिताह्वादिश्च शिंशपा ।
श्वेतादिशिंशपा तिक्ता शिशिरा पित्तदाहनुत् ॥ ९.१२८
कपिला शिंशपा चान्या पीता कपिलशिंशपा ।
सारिणी कपिलाक्षी च भस्मगर्भा कुशिंशपा ॥ ९.१२९
कपिला शिंशपा तिक्ता शीतवीर्या श्रमापहा ।

वातपित्तज्वरघ्नी च छर्दिहिक्काविनाशिनी ॥ ९.१३०
शिंशपात्रितयं वर्ण्यं हिमशोफविसर्पजित् ।
पित्तदाहप्रशमनं बल्यं रुचिकरं परम् ॥ ९.१३१
असनस्तु महासर्जः सौरिर्बन्धूकपुष्पकः ।
प्रियको बीजवृक्षश्च नीलकः प्रियशालकः ॥ ९.१३२
असनः कटुरुष्णश्च तिक्तो वातार्तिदोषनुत् ।
सारको गलदोषघ्नो रक्तमण्डलनाशनः ॥ ९.१३३
द्वितीयो नीलबीजः स्यान्नीलपत्रः सुनीलकः ।
नीलद्रुमो नीलसारो नीलनिर्यासको रसैः ॥ ९.१३४
बीजवृक्षौ कटू शीतौ कषायौ कुष्ठनाशनौ ।
सारकौ कण्डुदद्रुघ्नौ श्रेष्ठस्तत्रासितस्तयोः ॥ ९.१३५
वरुणः श्वेतपुष्पश्च तिक्तशाकः कुमारकः ।
श्वेतद्रुमः साधुवृक्षः तमालो मारुतापहः ॥ ९.१३६
वरुणः कटुरुष्णश्च रक्तदोषहरः परः ।
शीर्षवातहरः स्निग्धो दीप्यो विद्रधिवातजित् ॥ ९.१३७
पुत्रजीवः पवित्रश्च गर्भदः सुतजीवकः ।
कुटजीवोऽपत्यजीवः सिद्धिदोऽपत्यजीवकः ॥ ९.१३८
पुत्रजीवो हिमो वृष्यः श्लेष्मदो गर्भजीवदः ।
चक्षुष्यः पित्तशमनो दाहतृष्णानिवारणः ॥ ९.१३९
महापिण्डीतरुः प्रोक्तः श्वेतपिण्डीतकश्च सः ।
करहाटः क्षुरश्चैव शस्त्रकोशतरुः सरः ॥ ९.१४०
पिण्डीतरुः कषायोष्णस्त्रिदोषशमनोऽपि च ।
चर्मरोगापहश्चैव विशेषाद्रक्तदोषजित् ॥ ९.१४१
कारस्करस्तु किम्पाको विषतिन्दुर्विषद्रुमः ।
गरद्रुमो रम्यफलः कुपाकः कालकूटकः ॥ ९.१४२
कारस्करः कटूष्णश्च तिक्तः कुष्ठविनाशनः ।
वातामयास्रकण्डूतिकफामार्शोव्रणापहः ॥ ९.१४३
कटभी नाभिका शौण्डी पाटली किणिही तथा ।
मधुरेणुः क्षुद्रशामा कैडर्यः श्यामला नव ॥ ९.१४४
शितादिकटभी श्वेता किणिही गिरिकर्णिका ।
शिरीषपत्रा कालिन्दी शतपादी विषघ्निका ।
महाश्वेता महाशौण्डी महादिकटभी तथा ॥ ९.१४५
कटभी भवेत्कटूष्णा गुल्मविषाध्मानशूलदोषघ्नी ।
वातकफाजीर्णरुजाशमनी श्वेता च तत्र गुणयुक्ता ॥ ९.१४६
क्षवकः क्षुरकस्तीक्ष्णः क्रूरो भूताङ्कुशः क्षवः ।
राजोद्वेजनसंज्ञश्च भूतद्रावी ग्रहाह्वयः ॥ ९.१४७
भूताङ्कुशस्तीव्रगन्धः कषायोष्णः कटुस्तथा ।
भूतग्रहादिदोषघ्नः कफवातनिकृन्तनः ॥ ९.१४८
देवसर्षपकश्चाक्षो बदरो रक्तमूलकः ।
सुरसर्षपकश्चैन्द्रस्तथा सूक्ष्मदलः स्मृतः ।
सर्षपो निर्जरादिः स्यात्कुरराङ्घ्रिर्नवाभिधः ॥ ९.१४९
देवसर्षपनामा तु कटूष्णः कफनाशनः ।
जन्तुदोषहरो रुच्यो वक्त्रामयविशोधनः ॥ ९.१५०
लकुचो लिकुचः शालः कषायी दृढवल्कलः ।
डहुः कार्श्यश्च शूरश्च स्थूलस्कन्धो नवाह्वयः ॥ ९.१५१

लकुचः स्वरसे तिक्तः कषायोष्णो लघुस्तथा ।
कफदोषहरो दाही मलसंग्रहदायकः ॥ ९.१५२
विकङ्कतो व्याघ्रपादो ग्रन्थिलः स्वादुकण्टकः ।
कण्ठपादो बहुफलो गोपघोण्टा स्रुवद्रुमः ॥ ९.१५३
मृदुफलो दन्तकाष्ठो यज्ञीयो ब्रह्मपादपः ।
पिण्डरोहिणकः पूतः किङ्किणी च त्रिपञ्चधा ॥ ९.१५४
विकङ्कतोऽम्लमधुरः पाकेऽतिमधुरो लघुः ।
दीपनः कामलास्रघ्नः पाचनः पित्तनाशनः ॥ ९.१५५
इत्थं वन्यमहीरुहाह्वयगुणाभिख्यानमुख्यानया भङ्ग्या भङ्गुरिताभिधान्तरमहाभोगश्रिया भास्वरम् ।
वैद्यो वै द्यतु वर्गमेनमखिलं विज्ञाय वैज्ञानिकः प्रज्ञालोकविजृम्भणेन सहसा स्वैरं गदानां गणम् ॥ ९.१५६
ये वृश्चन्ति नृणां गदान् गुरुतरानाक्रम्य वीर्यासिना ये स्थित्वापि वने गुणेन सरुजां स्वेनावनं तन्वते ।
तेषामेष महानसीममहिमा वन्यात्मनां वासभूर्वृक्षाणां भणितो भिषग्भिरसमो यो वृक्षवर्गाख्यया ॥ ९.१५७
यः काश्मीरकुलोज्ज्वलाम्बुजवनीहंसोऽपि संसेव्यते नित्योल्लासितनीलकण्ठमनसः प्रीत्याद्यभग्नश्रिया ।
तस्यायं नवमः कृतौ नरहरेर्वर्गः प्रभद्रादिको भद्रात्मन्यभिधानशेखरशिखाचूडामणौ संस्थितः ॥ ९.१५८

चतुर्धा करवीरोऽथ धत्तूरत्रितयं तथा ।
कोविदारोऽब्धिरर्कः स्यान्नमेरुः किंशुकस्तथा ॥ १०.१
पुन्नागस्तिलकोऽगस्त्यः पाटल्यौ च द्विधा स्मृते ।
अशोकश्चम्पको धन्वी केतकी द्विविधा तथा ॥ १०.२
सिन्दूरी च तथा जाती मुद्गरः शतपत्रिका ।
मल्लिका च चतुर्धा स्याद्वासन्ती नवमल्लिका ॥ १०.३
अतिमुक्तो द्विधा यूथी कुब्जको मुचकुन्दकः ।
करुणी माधवी चाथ गणिकारी च कुन्दकः ॥ १०.४
बककेविकबन्धूकास्त्रिसन्धिश्च जपा तथा ।
प्रोक्ता भ्रमरमारी च तरुण्यम्लानकस्तथा ॥ १०.५
किङ्किरातोऽथ बालाख्यो झिण्टिका चोष्ट्रकाण्डिका ।
तगरं दमनद्वन्द्वं तुलसी मरुवो द्विधा ॥ १०.६
अर्जकश्च चतुर्गङ्गा पत्री पाची च बालकः ।
बर्बरो मञ्चिकापत्रः प्रोक्ता चारामशीतला ॥ १०.७
अथ कमलपुण्डरीकाह्वयकोकनदानि पद्मिनी चैव ।
पद्माक्षं च मृणालं तत्कन्दः केसरश्च तथा ॥ १०.८
उत्पलकुमुदकुवलयमुत्पलिनी चाङ्कवसुमित्या ।
उत्तंसनाम्नि वर्गे द्रव्याण्यत्रोपदिश्यन्ते ॥ १०.९
करवीरो महावीरो हयमारोऽश्वमारकः ।
हयघ्नः प्रतिहासश्च शतकुन्दोऽश्वरोधकः ॥ १०.१०
हयारिर्वीरकः कुन्दः शकुन्दः श्वेतपुष्पकः ।
अश्वान्तकस्तथाश्वघ्नो नखराह्वोऽश्वनाशकः ॥ १०.११
स्थलादिकुमुदः प्रोक्तो दिव्यपुष्पो हरप्रियः ।
गौरीपुष्पः सिद्धपुष्पो द्विकराह्वः प्रकीर्त्तितः ॥ १०.१२
करवीरः कटुस्तीक्ष्णः कुष्ठकण्डूतिनाशनः ।
व्रणार्तिविषविस्फोटशमनोऽश्वमतिप्रदः ॥ १०.१३
रक्तकरवीरकोऽन्यो रक्तप्रसवो गणेशकुसुमश्च ।
चण्डीकुसुमः क्रूरो भूतद्रावी रविप्रियो मुनिभिः ॥ १०.१४
रक्तस्तु करवीरः स्यात्कटुस्तीक्ष्णो विशोधकः ।
त्वग्दोषव्रणकण्डूतिकुष्ठहारी विषापहः ॥ १०.१५
पीतकरवीरकोऽन्यः पीतप्रसवः सुगन्धिकुसुमश्च ।
कृष्णस्तु कृष्णकुसुमश्चतुर्विधोऽयं गुणे तुल्यः ॥ १०.१६
धत्तूरः कितवो धूर्त उन्मत्तः कनकाह्वयः ।
शठो मातुलकः श्यामो मदनः शिवशेखरः ॥ १०.१७
खर्जूघ्नः काहलापुष्पः खलः कण्टफलस्तथा ।
मोहनः कलभोन्मत्तः शैवः सप्तदशाह्वयः ॥ १०.१८
धत्तूरः कटुरुष्णश्च कान्तिकारी व्रणार्तिनुत् ।
त्वग्दोषखर्जूकण्डूतिज्वरहारी भ्रमप्रदः ॥ १०.१९
कृष्णधत्तूरकः सिद्धः कनकः सचिवः शिवः ।
कृष्णपुष्पो विषारातिः क्रूरधूर्तश्च कीर्तितः ॥ १०.२०
राजधत्तूरकश्चान्यो राजधूर्तो महाशठः ।
निस्त्रैणिपुष्पको भ्रान्तो राजस्वर्णः षडाह्वयः ॥ १०.२१
सितनीलकृष्णलोहितपीतप्रसवाश्च सन्ति धत्तूराः ।
सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः स्यात् ॥ १०.२२

कोविदारः काञ्चनारः कुद्दालः कनकारकः ।
कान्तपुष्पश्च करकः कान्तारो यमलच्छदः ॥ १०.२३
पीतपुष्पः सुवर्णारो गिरिजः काञ्चनारकः ।
युग्मपत्रो महापुष्पः स्याच्चतुर्दशधाभिधः ॥ १०.२४
कोविदारः कषायः स्यात्संग्राही व्रणरोपणः ।
दीपनः कफवातघ्नो मूत्रकृच्छ्रनिबर्हणः ॥ १०.२५
अर्कः क्षीरदलः पुच्छी प्रतापः क्षीरकाण्डकः ।
विक्षीरो भास्करः क्षीरी खर्जूघ्नः शिवपुष्पकः ॥ १०.२६
भञ्जनः क्षीरपर्णी स्यात्सविता च विकीरणः ।
सूर्याह्वश्च सदापुष्पो रविरास्फोटकस्तथा ।
तूलफलः शुकफलो विंशतिश्च समाह्वयः ॥ १०.२७
अर्कस्तु कटुरुष्णश्च वातजिद्दीपनीयकः ।
शोफव्रणहरः कण्डूकुष्ठक्रिमिविनाशनः ॥ १०.२८
शुक्लार्कस्तपनः श्वेतः प्रतापश्च सितार्ककः ।
सुपुष्पः शङ्करादिः स्यादत्यर्को वृत्तमल्लिका ॥ १०.२९
श्वेतार्कः कटुतिक्तोष्णो मलशोधनकारकः ।
मूत्रकृच्छ्रास्रशोफार्तिव्रणदोषविनाशनः ॥ १०.३०
राजार्को वसुकोऽलर्को मन्दारो गणरूपकः ।
काष्ठीलश्च सदापुष्पो ज्ञेयोऽत्र सप्तसंमितः ॥ १०.३१
राजार्कः कटुतिक्तोष्णः कफमेदोविषापहः ।
वातकुष्ठव्रणान् हन्ति शोफकण्डूविसर्पनुत् ॥ १०.३२
श्वेतमन्दारकस्त्वन्यः पृथ्वी कुरवकः स्मृतः ।
दीर्घपुष्पः सितालर्को दीर्घात्यर्कः रसाह्वयः ॥ १०.३३
श्वेतमन्दारकोऽत्युष्णस्तिक्तो मलविशोधनः ।
मूत्रकृच्छ्रव्रणान् हन्ति क्रिमीनत्यन्तदारुणान् ॥ १०.३४
नमेरुः सुरपुन्नागः सुरेष्टः सुरपर्णिका ।
सुरतुङ्गश्च पञ्चाह्वः पुन्नागगुणसंयुतः ॥ १०.३५
पलाशः किंशुकः पर्णो वातपोथोऽथ याज्ञिकः ।
त्रिपर्णो वक्रपुष्पश्च पूतद्रुर्ब्रह्मवृक्षकः ।
ब्रह्मोपनेता काष्ठद्रुः पर्यायैकादश स्मृताः ॥ १०.३६
पलाशस्तु कषायोष्णः क्रिमिदोषविनाशनः ।
तद्बीजं पामकण्डूतिदद्रुत्वग्दोषनाशकृत् ॥ १०.३७
तस्य पुष्पं च सोष्णं च कण्डूकुष्ठार्त्तिनाशनम् ।
रक्तः पीतः सितो नीलः कुसुमैस्तु विभज्यते ॥ १०.३८
किंशुकैर्गुणसाम्येऽपि सितो विज्ञानदः स्मृतः ॥ १०.३९
पुन्नागः पुरुषस्तुङ्गः पुन्नामा पाटलः पुमान् ।
रक्तपुष्पो रक्तरेणुररुणोऽयं नवाह्वयः ॥ १०.४०
पुन्नागो मधुरः शीतः सुगन्धिः पित्तनाशकृत् ।
भूतविद्रावणश्चैव देवतानां प्रसादनः ॥ १०.४१
तिलको विशेषकः स्यान्मुखमण्डनकश्च पुण्ड्रकः पुण्ड्रः ।
स्थिरपुष्पः छिन्नरुहो दग्धरुहो रेचकश्च मृतजीवी ॥ १०.४२
तरुणीकटाक्षकामो वासन्तः सुन्दरोऽभीष्टः ।
भालविभूषणसंज्ञो विज्ञेयः पञ्चदशनामा ॥ १०.४३
तिलको मधुरः स्निग्धो वातपित्तकफापहः ।
बलपुष्टिकरो हृद्यो लघुर्मेदोविवर्धनः ॥ १०.४४

तिलकत्वक्कषायोष्णा पुंस्त्वघ्नी दन्तदोषनुत् ।
क्रिमिशोफव्रणान् हन्ति रक्तदोषविनाशनी ॥ १०.४५
अगस्त्यः शीघ्रपुष्पः स्यातगस्तिस्तु मुनिद्रुमः ।
व्रणारिर्दीर्घफलको वक्रपुष्पः सुरप्रियः ॥ १०.४६
सितपीतनीललोहितकुसुमविशेषाच्चतुर्विधोऽगस्तिः ।
मधुरशिशिरस्त्रिदोषश्रमकासविनाशनश्च भूतघ्नः ॥ १०.४७
अगस्त्यं शिशिरं गौल्यं त्रिदोषघ्नं श्रमापहम् ।
बलासकासवैवर्ण्यभूतघ्नं च बलापहम् ॥ १०.४८
पाटली ताम्रपुष्पी च कुम्भिका रक्तपुष्पिका ।
वसन्तदूती चामोघा स्थाली च विटवल्लभा ।
स्थिरगन्धाम्बुवासी च कालवृन्तीन्दुभूह्वया ॥ १०.४९
पाटली तु रसे तिक्ता कटूष्णा कफवातजित् ।
शोफाध्मानवमिश्वासशमनी सन्निपातनुत् ॥ १०.५०
सितपाटलिका चान्या सितकुम्भी फलेरुहा ।
सिता मोघा कुबेराक्षी सिताह्वा काष्ठपाटला ।
पाटली धवला प्रोक्ता ज्ञेया वसुमिताह्वया ॥ १०.५१
सितपाटलिका तिक्ता गुरूष्णा वातदोषजित् ।
वमिहिक्काकफघ्नी च श्रमशोषापहारिका ॥ १०.५२
अशोकः शोकनाशः स्याद्विशोको वञ्जुलद्रुमः ।
मधुपुष्पोऽपशोकश्च कङ्केलिः केलिकस्तथा ॥ १०.५३
रक्तपल्लवकश्चित्रो विचित्रः कर्णपूरकः ।
सुभगः स्मराधिवासो दोषहारी प्रपल्लवः ॥ १०.५४
रागी तरुर्हेमपुष्पो रामावामङ्घ्रिघातकः ।
पिण्डीपुष्पो नटश्चैव पल्लवद्रुर्द्विविंशतिः ॥ १०.५५
अशोकः शिशिरो हृद्यः पित्तदाहश्रमापहः ।
गुल्मशूलोदराध्माननाशनः क्रिमिकारकः ॥ १०.५६
चम्पकः स्वर्णपुष्पश्च चाम्पेयः शीतलच्छदः ।
सुभगो भृङ्गमोही च शीतलो भ्रमरातिथिः ॥ १०.५७
सुरभिर्दीपपुष्पश्च स्थिरगन्धोऽतिगन्धकः ।
स्थिरपुष्पो हेमपुष्पः पीतपुष्पस्तथापरः ।
हेमाह्वः सुकुमारस्तु वनदीपोऽष्टभूह्वयः ॥ १०.५८
तत्कलिका गन्धफली बहुगन्धा गन्धमोदिनी त्रेधा ॥ १०.५९
चम्पकः कटुकस्तिक्तः शिशिरो दाहनाशनः ।
कुष्ठकण्डूव्रणहरो गुणाढ्यो राजचम्पकः ॥ १०.६०
क्षुद्रादिचम्पकस्त्वन्यः स ज्ञेयो नागचम्पकः ।
फणिचम्पकनागाह्वश्चम्पको वनजः शराः ॥ १०.६१
वनचम्पकः कटूष्णो वातकफध्वंसनो वर्ण्यः ।
चक्षुष्यो व्रणरोपी वह्निस्तम्भं करोति योगगुणात् ॥ १०.६२
बकुलस्तु सीधुगन्धः स्त्रीमुखमधुदोहलश्च मधुपुष्पः ।
सुरभिर्भ्रमरानन्दः स्थिरकुसुमः केसरश्च शारदिकः ॥ १०.६३
करकः सीधुसंज्ञस्तु विशारदो गूढपुष्पको धन्वी ।
मदनो मद्यामोदश्चिरपुष्पश्चेति सप्तदशसंज्ञः ॥ १०.६४
बकुलः शीतलो हृद्यो विषदोषविनाशनः ।
मधुरश्च कषायश्च मदाढ्यो हर्यदायकः ॥ १०.६५
बकुलकुसुमं च रुच्यं क्षीराढ्यं सुरभि शीतलं मधुरम् ।

स्निग्धकषायं कथितं मलसंग्रहकारकं चैव ॥ १०.६६
केतकी तीक्ष्णपुष्पा च विफला धूलिपुष्पिका ।
मेध्या कण्टदला चैव शिवद्विष्टा नृपप्रिया ॥ १०.६७
क्रकचा दीर्घपत्रा च स्थिरगन्धा तु पांशुला ।
गन्धपुष्पेन्दुकलिका दलपुष्पा त्रिपञ्चधा ॥ १०.६८
स्वर्णादिकेतकी त्वन्या ज्ञेया सा हेमकेतकी ।
कनकप्रसवा पुष्पी हैमी छिन्नरुहा तथा ।
विष्टरुहा स्वर्णपुष्पी कामखड्गदला च सा ॥ १०.६९
केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम् ।
हेमाभं मदनोन्मादवर्द्धनं सौख्यकारि च ॥ १०.७०
तस्याः स्तनोऽतिशिशिरः कटुः पित्तकफापहः ।
रसायनकरो बल्यो देहदार्ढ्यकरः परः ॥ १०.७१
सिन्दूरी वीरपुष्पश्च तृणपुष्पी करच्छदः ।
सिन्दूरपुष्पी शोणादिपुष्पी षडाह्वयः स्मृतः ॥ १०.७२
सिन्दूरी कटुका तिक्ता कषाया श्लेष्मवातजित् ।
शिरआर्तिशमनी भूतनाशा चण्डीप्रिया भवेत् ॥ १०.७३
जाती सुरभिगन्धा स्यात्सुमना तु सुरप्रिया ।
चेतकी सुकुमारा तु सन्ध्यापुष्पी मनोहरा ॥ १०.७४
राजपुत्री मनोज्ञा च मालती तैलभाविनी ।
जनेष्टा हृद्यगन्धा च नामान्यस्याश्चतुर्दश ।
मालती शीततिक्ता स्यात्कफघ्नी मुखपाकनुत् ।
कुड्मलं नेत्ररोगघ्नं व्रणविस्फोटकुष्ठनुत् ॥ १०.७५
मुद्गरो गन्धसारस्तु सप्तपत्रश्च कर्दमी ।
वृत्तपुष्पोऽतिगन्धश्च गन्धराजो विटप्रियः ।
गेयप्रियो जनेष्टश्च मृगेष्टो रुद्रसम्मितः ॥ १०.७६
मुद्गरो मधुरः शीतः सुरभिः सौख्यदायकः ।
मनोज्ञो मधुपानन्दकारी पित्तप्रकोपहृत् ॥ १०.७७
शतपत्री तु सुमना सुशीता शिववल्लभा ।
सौम्यगन्धा शतदला सुवृत्ता शतपत्रिका ॥ १०.७८
शतपत्री हिमा तिक्ता कषाया कुष्ठनाशनी ।
मुखस्फोटहरा रुच्या सुरभिः पित्तदाहनुत् ॥ १०.७९
मल्लिका भद्रवल्ली तु गौरी च वनचन्द्रिका ।
शीतभीरुः प्रिया सौम्या नारीष्टा गिरिजा सिता ।
मल्ली च दमयन्ती च चन्द्रिका मोदिनी मनुः ॥ १०.८०
मल्लिका कटुतिक्ता स्याच्चक्षुष्या मुखपाकनुत् ।
कुष्ठविस्फोटकण्डूतिविषव्रणहरा परा ॥ १०.८१
वल्लिका मोदिनी चान्या वटपत्रा कुमारिका ।
सुगन्धाढ्या वृत्तपुष्पा मुक्ताभा वृत्तमल्लिका ॥ १०.८२
नेत्ररोगापहन्त्री स्यात्कटूष्णा वृत्तमल्लिका ।
व्रणघ्नी गन्धबहला दारयत्यास्यजान् गदान् ॥ १०.८३
वार्षिका त्रिपुटा त्र्यस्रा सुरूपा सुलभा प्रिया ।
श्रीवल्ली षट्पदानन्दा मुक्तबन्धा नवाभिधा ॥ १०.८४
वार्षिका शिशिरा हृद्या सुगन्धिः पित्तनाशनी ।
कफवातविषस्फोटक्रिमिदोषामनाशनी ॥ १०.८५
सा दीर्घवर्त्तुलपुष्पविशेषादनेकनिर्देशा ।

मृगमदवासा त्वन्या कस्तूरीमल्लिका ज्ञेया ॥ १०.८६
प्रातर्विकस्वरैका सायोद्भिदुरापि मल्लिका कापि ।
वनमल्लिका नु सा स्यादास्फोता किन्तु समगुणोपेता ॥ १०.८७
वासन्ती प्रहसन्ती वसन्तजा माधवी महाजातिः ।
शीतसहा मधुबहला वसन्तदूती च वसुनाम्नी ॥ १०.८८
वासन्ती शिशिरा हृद्या सुरभिः श्रमहारिणी ।
धम्मिल्लामोदिनी मन्दमदनोन्माददायिनी ॥ १०.८९
नवमल्लिकातिमोदा ग्रैष्मी ग्रीष्मोद्भवा च सा ।
सप्तला सुकुमारा च सुरभी सूचिमल्लिका ।
सुगन्धा शिखरिणी स्यान्नेवाली चेन्दुभूह्वया ॥ १०.९०
नवमल्लिकातिशैत्या सुरभिः सर्वरोगहृत् ॥ १०.९१
सैवातिमुक्तकाख्या पुण्ड्रकनाम्नी च काचिदुक्तान्या ।
मदनी भ्रमरानन्दा कामकान्ता च पञ्चाख्या ॥ १०.९२
अतिमुक्तः कषायः स्याच्छिशिरः श्रमनाशनः ।
पित्तदाहज्वरोन्मादहिक्काच्छर्दिनिवारणः ॥ १०.९३
यूथिका गणिकाम्बष्ठा मागधी बालपुष्पिका ।
मोदनी बहुगन्धा च भृङ्गानन्दा गजाह्वया ॥ १०.९४
अन्या यूथी सुवर्णाह्वा सुगन्धा हेमयूथिका ।
युवतीष्टा व्यक्तगन्धा शिखण्डी नागपुष्पिका ॥ १०.९५
हरिणी पीतयूथी च पोतिका कनकप्रभा ।
मनोहरा च गन्धाढ्या प्रोक्ता त्रयोदशाह्वया ॥ १०.९६
यूथिकायुगलं स्वादु शिशिरं शर्करार्तिनुत् ।
पित्तदाहतृषाहारि नानात्वग्दोषनाशनम् ॥ १०.९७
सितपीतनीलमेचकनाम्न्यः कुसुमेन यूथिकाः कथिताः ।
तिक्तहिमपित्तकफामयज्वरघ्न्यो व्रणादिदोषहराः ॥ १०.९८
सर्वासां यूथिकानां तु रसवीर्यादिसाम्यता ।
सुरूपं तु सुगन्धाढ्यं स्वर्णयूथ्या विशेषतः ॥ १०.९९
कुब्जको भद्रतरुणो वृत्तपुष्पोऽतिकेसरः ।
महासहः कण्टकाढ्यः खर्वोऽलिकुलसङ्कुलः ॥ १०.१००
कुब्जकः सुरभिः शीतो रक्तपित्तकफापहः ।
पुष्पं तु शीतलं वर्ण्यं दाहघ्नं वातपित्तजित् ॥ १०.१०१
मुचकुन्दो बहुपत्रः सुदलो हरिवल्लभः सुपुष्पश्च ।
अर्घ्यार्हो लक्ष्मणको रक्तप्रसवश्च वसुनामा ॥ १०.१०२
मुचकुन्दः कटुतिक्तः कफकासविनाशनश्च कण्ठदोषहरः ।
त्वग्दोषशोफशमनो व्रणपामाविनाशनश्चैव ॥ १०.१०३
करुणी ग्रीष्मपुष्पी स्याद्रक्तपुष्पी च वारुणी ।
राजप्रिया राजपुष्पी सूक्ष्मा च ब्रह्मचारिणी ॥ १०.१०४
करुणी कटुतिक्तोष्णा कफमारुतनाशिनी ।
आध्मानविषविच्छर्दिजत्रूर्ध्वश्वासहारिणी ॥ १०.१०५
माधवी चन्द्रवल्ली च सुगन्धा भ्रमरोत्सवा ।
भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणी ॥ १०.१०६
माधवी कटुका तिक्ता कषाया मदगन्धिका ।
पित्तकासव्रणान् हन्ति दाहशोषविनाशिनी ॥ १०.१०७
गणिकारी काञ्चनिका काञ्चनपुष्पी वसन्तदूती च ।
गन्धकुसुमातिमोदा वासन्ती मदमादिनी चैव ॥ १०.१०८

गणिकारी सुरभितरा त्रिदोषशमनी च दाहशोषहरा ।
कामक्रीडाडम्बरशम्बरहरचापलप्रसरा ॥ १०.१०९
कुन्दस्तु मकरन्दश्च महामोदो मनोहरः ।
मुक्तापुष्पः सदापुष्पस्तारपुष्पोऽट्टहासकः ॥ १०.११०
दमनो वनहासश्च मनोज्ञो रुद्रसम्मितः ॥ १०.१११
कुन्दोऽतिमधुरः शीतः कषायः कैश्यभावनः ।
कफपित्तहरश्चैव सरो दीपनपाचनः ॥ १०.११२
बकः पाशुपतः शैवः शिवपिण्डश्च सुव्रतः ।
वसुकश्च शिवाङ्कश्च शिवेष्टः क्रमपूरकः ।
शिवमल्ली शिवाह्लादः शाम्भवो रविसम्मितः ॥ १०.११३
बकोऽतिशिशिरस्तिक्तो मधुरो मधुगन्धकः ।
पित्तदाहकफश्वासश्रमहारी च दीपनः ॥ १०.११४
केविका कविका केवा भृङ्गारिर्नृपवल्लभा ।
भृङ्गमारी महागन्धा राजकन्यालिमोहिनी ॥ १०.११५
केविका मधुरा शीता दाहपित्तश्रमापहा ।
वातश्लेष्मरुजां हन्त्री पित्तच्छर्दिविनाशिनी ॥ १०.११६
बन्धूको बन्धुजीवः स्यादोष्ठपुष्पोऽर्कवल्लभः ।
मध्यन्दिनो रक्तपुष्पो रागपुष्पो हरिप्रियः ॥ १०.११७
असितसितपीतलोहितपुष्पविशेषाच्चतुर्विधो बन्धूकः ।
ज्वरहारी विविधग्रहपिशाचशमनः प्रसादनः सवितुः स्यात् ॥ १०.११८
त्रिसन्धिः सान्ध्यकुसुमा सन्धिवल्ली सदाफला ।
त्रिसन्ध्यकुसुमा कान्ता सुकुमारा च सन्धिजा ॥ १०.११९
त्रिसन्धिस्त्रिविधा ज्ञेया रक्ता चान्या सितासिता ।
कफकासहरा रुच्या त्वग्दोषशमनी परा ॥ १०.१२०
जपाख्या ओड्रकाख्या च रक्तपुष्पी जवा च सा ।
अर्कप्रिया रक्तपुष्पी प्रातिका हरिवल्लभा ॥ १०.१२१
जपा तु कटुरुष्णा स्यादिन्द्रलुप्तकनाशकृत् ।
विच्छर्दिजन्तुजननी सूर्याराधनसाधनी ॥ १०.१२२
भ्रमरारिर्भृङ्गमारी भृङ्गारिर्मासपुष्पिका ।
कुष्ठारिर्भ्रमरी चैव ज्ञेया यष्टिलता मुनिः ॥ १०.१२३
तिक्ता भ्रमरमारी स्याद्वातश्लेष्मज्वरापहा ।
शोफकण्डूतिकुष्ठघ्नी व्रणदोषास्थिदोषनुत् ॥ १०.१२४
तरुणी सहा कुमारी गन्धाढ्या चारुकेसरा भृङ्गेष्टा ।
रामतरुणी तु सुदला बहुपत्रा भृङ्गवल्लभा च दशाह्वा ॥ १०.१२५
तरुणी शिशिरा स्निग्धा पित्तदाहज्वरापहा ।
मधुरा मुखपाकघ्नी तृष्णाविच्छर्दिवारिणी ॥ १०.१२६
महती तु राजतरुणी महासहा वर्ण्यपुष्पकोऽम्लानः ।
अमिलातकः सुपुष्पः सुवर्णपुष्पश्च सप्ताह्वः ॥ १०.१२७
विज्ञेया राजतरुणी कषाया कफकारिणी ।
चक्षुष्या हर्षदा हृद्या सुरभिः सुरवल्लभा ॥ १०.१२८
अथ रक्ताम्लानः स्याद्रक्तसहाख्यः स चापरिम्लानः ।
रक्तामलान्तकोऽपि च रक्तप्रसवश्च कुरवकश्चैव ॥ १०.१२९
रामालिङ्गनकामो रागप्रसवो मधूत्सवः प्रसवः ।
सुभगो भ्रमरानन्दः स्यादित्ययं पक्षचन्द्रमितः ॥ १०.१३०
उष्णः कटुः कुरवको वातामयशोफनाशनो ज्वरनुत् ।

आध्मानशूलकासश्वासार्तिप्रशमनो वर्ण्यः ॥ १०.१३१
पीतः स किङ्किरातः पीताम्लानः कुरण्टकः कनकः ।
पीतकुरवः सुपीतः स पीतकुसुमश्च सप्तसंज्ञकः स्यात् ॥ १०.१३२
किङ्किरातः कषायोष्णस्तिक्तश्च कफवातजित् ।
दीपनः शोफकण्डूतिरक्तत्वग्दोषनाशनः ॥ १०.१३३
नीलपुष्पा तु सा दासी नीलाम्लानस्तु छादनः ।
बाला चार्त्तगला चैव नीलपुष्पा च षड्विधा ॥ १०.१३४
आर्त्तगला कटुस्तिक्ता कफमारुतशूलनुत् ।
कण्डूकुष्ठव्रणान् हन्ति शोफत्वग्दोषनाशनी ॥ १०.१३५
कण्टकरण्टो झिण्टी सा वन्यसहचरी तु सा पीता ।
शोणी कुरवकनाम्नी कण्टकिनी शोणझिण्टिका चैव ॥ १०.१३६
सान्या तु नीलझिण्टी नीलकुरण्टश्च नीलकुसुमा च ।
बाणो बाणा दासी कण्टार्त्तगला च सप्तसंज्ञा स्यात् ॥ १०.१३७
झिण्टिकाः कटुकास्तिक्ता दन्तामयशान्तिदाश्च शूलघ्नाः ।
वातकफशोफकासत्वग्दोषविनाशकारिण्यः ॥ १०.१३८
उष्ट्रकाण्डी रक्तपुष्पी ज्ञेया करभकाण्डिका ।
रक्ता लोहितपुष्पी च वर्णपुष्पी षडाह्वया ॥ १०.१३९
उष्ट्रकाण्डी तु तिक्तोष्णा रुच्या हृद्रोगहारिणी ।
तद्बीजं मधुरं शीतं वृष्यं सन्तर्पणं स्मृतम् ॥ १०.१४०
तगरं कुटिलं वक्रं विनम्रं कुञ्चितं नतम् ।
शठं च नहुषाख्यं च दद्रुहस्तं च बर्हणम् ॥ १०.१४१
पिण्डीतगरकं चैव पार्थिवं राजहर्षणम् ।
कालानुसारकं क्षत्रं दीनं जिह्मं मुनीन्दुधा ॥ १०.१४२
तगरं शीतलं तिक्तं दृष्टिदोषविनाशनम् ।
विषार्तिशमनं पथ्यं भूतोन्मादभयापहम् ॥ १०.१४३
अथ दमनकस्तु दमनो दान्तो गन्धोत्कटो मुनिर्जटिलः ।
दण्डी च पाण्डुरागो ब्रह्मजटा पुण्डरीकश्च ॥ १०.१४४
तापसपत्रः पत्री पवित्रको देवशेखरश्चैव ।
कुलपत्रश्च विनीतस्तपस्विपत्रश्च सप्तधात्रीकः ॥ १०.१४५
दमनः शीतलतिक्तः कषायकटुकश्च कुष्ठदोषहरः ।
द्वन्द्वत्रिदोषशमनो विषविस्फोटविकारहरणः स्यात् ॥ १०.१४६
अन्यश्च वन्यदमनो वनादिनामा च दमनपर्यायः ।
वीर्यस्तम्भनकारी बलदायी चामदोषहारी च ॥ १०.१४७
तुलसी सुभगा तीव्रा पावनी विष्णुवल्लभा ।
सुरेज्या सुरसा ज्ञेया कायस्था सुरदुन्दुभी ॥ १०.१४८
सुरभिर्बहुपत्री च मञ्जरी सा हरिप्रिया ।
अपेतराक्षसी श्यामा गौरी त्रिदशमञ्जरी ।
भूतघ्नी पूतपत्री च ज्ञेया चैकोनविंशतिः ॥ १०.१४९
तुलसी कटुतिक्तोष्णा सुरभिः श्लेष्मवातजित् ।
जन्तुभूतक्रिमिहरा रुचिकृद्वातशान्तिकृत् ॥ १०.१५०
कृष्णा तु कृष्णतुलसी श्वेता लक्ष्मीः सिताह्वया ।
कासवातक्रिमिवमिभूतापहारिणी पूता ॥ १०.१५१
मरुवः खरपत्रस्तु गन्धपत्रः फणिञ्झकः ।
बहुवीर्यः शीतलकः सुराह्वश्च समीरणः ॥ १०.१५२
जम्बीरः प्रस्थकुसुमो ज्ञेयो मरुवकस्तथा ।

आजन्मसुरभिपत्रो मरीचश्च त्रयोदश ॥ १०.१५३
द्विधा मरुवकः प्रोक्तः श्वेतश्चैव सितेतरः ।
श्वेतो भेषजकार्ये स्यादपरः शिवपूजने ॥ १०.१५४
मरुवः कटुतिक्तोष्णः कृमिकुष्ठविनाशनः ।
विड्बन्धाध्मानशूलघ्नो मान्द्यत्वग्दोषनाशनः ॥ १०.१५५
अर्जकः क्षुद्रतुलसी क्षुद्रपर्णो मुखार्जकः ।
उग्रगन्धश्च जम्बीरः कुठेरश्च कठिञ्जरः ॥ १०.१५६
सितार्जकस्तु वैकुण्ठो वटपत्रः कुठेरकः ।
जम्बीरो गन्धबहुलः सुमुखः कटुपत्रकः ॥ १०.१५७
कृष्णार्जकः कालमालो मालूकः कृष्णमालुकः ।
स्यात्कृष्णमल्लिका प्रोक्ता गरघ्नो वनबर्बरः ॥ १०.१५८
त्रयोऽर्जकाः कटूष्णाः स्युः कफवातामयापहाः ।
नेत्रामयहरा रुच्याः सुखप्रसवकारकाः ॥ १०.१५९
वनबर्बरिकान्या तु सुगन्धिः सुप्रसन्नकः ।
दोषोत्क्लेशी विषघ्नश्च सुमुखः सूक्ष्मपत्रकः ।
निद्रालुः शोफहारी च सुवक्त्रश्च दशाह्वयः ॥ १०.१६०
वनबर्बरिका चोष्णा सुगन्धा कटुका च सा ।
पिशाचवान्तिभूतघ्नी घ्राणसन्तर्पणी परा ॥ १०.१६१
गङ्गापत्री तु पत्री स्यात्सुगन्धा गन्धपत्रिका ।
गङ्गापत्री कटूष्णा च वातजिद्व्रणरोपणी ॥ १०.१६२
पाची मरकतपत्री हरितलता हरितपत्रिका पत्री ।
सुरभिर्मल्लारिष्टा गारुत्मतपत्रिका चैव ॥ १०.१६३
पाची कटुतिक्तोष्णा सकषाया वातदोषहन्त्री च ।
ग्रहभूतविकारकारी त्वग्दोषप्रशमनी व्रणेषु हिता ॥ १०.१६४
बालकं वारिपर्यायैरुक्तं ह्रीवेरकं तथा ।
केश्यं वज्रमुदीच्यं च पिङ्गं च ललनाप्रियम् ।
बालं च कुन्तलोशीरं कचामोदं शशीन्दुधा ॥ १०.१६५
बालकं शीतलं तिक्तं पित्तवान्तितृषापहम् ।
ज्वरकुष्ठातिसारघ्नं केश्यं श्वित्रव्रणापनुत् ॥ १०.१६६
बर्बरः सुमुखश्चैव गरघ्नः कृष्णबर्बरः ।
सुकन्दनो गन्धपत्रः पूतगन्धः सुरार्हकः ॥ १०.१६७
बर्बरः कटुकोष्णश्च सुगन्धिर्वान्तिनाशनः ।
विसर्पविषविध्वंसी त्वग्दोषशमनस्तथा ॥ १०.१६८
सुरपर्णं देवपर्णं वीरपर्णं सुगन्धिकम् ।
मञ्चिपत्रं सूक्ष्मपत्रं देवार्हं गन्धपत्रकम् ॥ १०.१६९
कटूष्णं सुरपर्णं च क्रिमिश्वासबलासजित् ।
दीपनं कफवातघ्नं वर्ण्यं बालहितं तथा ॥ १०.१७०
आरामशीतला नन्दा शीतला सा सुनन्दिनी ।
रामा चैव महानन्दा गन्धाढ्यारामशीतला ॥ १०.१७१
आरामशीतला तिक्ता शीतला पित्तहारिणी ।
दाहशोषप्रशमनी विस्फोटव्रणरोपणी ॥ १०.१७२
पाथोजं कमलं नभं च नलिनाम्भोजाम्बुजन्माम्बुजं श्रीपद्माम्बुरुहाब्जपद्मजलजान्यम्भोरुहं सारसम् ।
पङ्केजं सरसीरुहं च कुटपं पाथोरुहं पुष्करं वार्जं तामरसं कुशेशयकजे कञ्जारविन्दे तथा ॥ १०.१७३
शतपत्रं बिसकुसुमं सहस्रपत्रं महोत्पलं वारिरुहम् ।
सरसिजसलिलजपङ्केरुहराजीवानि वेदवह्निमितानि ॥ १०.१७४

कमलं शीतलं स्वादु रक्तपित्तश्रमार्तिनुत् ।
सुगन्धि भ्रान्तिसंतापशान्तिदं तर्पणं परम् ॥ १०.१७५
पुण्डरीकं श्वेतपत्रं सिताब्जं श्वेतवारिजम् ।
हरिनेत्रं शरत्पद्मं शारदं शम्भुवल्लभम् ॥ १०.१७६
पुण्डरीकं हिमं तिक्तं मधुरं पित्तनाशनम् ।
दाहास्रश्रमदोषघ्नं पिपासादोषनाशनम् ॥ १०.१७७
कोकनदमरुणकमलं रक्ताम्भोजं च शोणपद्मं च ।
रक्तोत्पलमरविन्दं रविप्रियं रक्तवारिजं वसवः ॥ १०.१७८
कोकनदं कटुतिक्तं मधुरं शिशिरं च रक्तदोषहरम् ।
पित्तकफवातशमनं सन्तर्पणकारणं वृष्यम् ॥ १०.१७९
उत्पलं नीलकमलं नीलाब्जं नीलपङ्कजम् ।
नीलपद्मं च बाणाह्वं नीलादिकमलाभिधम् ॥ १०.१८०
नीलाब्जं शीतलं स्वादु सुगन्धि पित्तनाशकृत् ।
रुच्यं रसायने श्रेष्ठं केश्यं च देहदार्ढ्यदम् ॥ १०.१८१
ईषत्श्वेतं पद्मं नलिनं च तदुक्तमीषदारक्तम् ।
उत्पलमीषन्नीलं त्रिविधमितीदं भवेत्कमलम् ॥ १०.१८२
उत्पलादिरयं दाहरक्तपित्तप्रसादनः ।
पिपासादाहहृद्रोगच्छर्दिमूर्छाहरो गणः ॥ १०.१८३
पद्मिनी नलिनी प्रोक्ता कूटपिन्यब्जिनी तथा ।
इत्थं तत्पद्मपर्यायनाम्नी ज्ञेया प्रयोगतः ॥ १०.१८४
पद्मिनी मधुरा तिक्ता कषाया शिशिरा परा ।
पित्तकृमिशोषवान्तिभ्रान्तिसंतापशान्तिकृत् ॥ १०.१८५
पद्मबीजं तु पद्माक्षं गालोड्यं कन्दली च सा ।
भेडा क्रौञ्चादनी क्रौञ्चा श्यामा स्यात्पद्मकर्कटी ॥ १०.१८६
पद्मबीजं कटु स्वादु पित्तच्छर्दिहरं परम् ।
दाहास्रदोषशमनं पाचनं रुचिकारकम् ॥ १०.१८७
मृणालं पद्मनालं च मृणाली च मृणालिनी ।
बिसं च पद्मतन्तुश्च बिसिनी नलिनीरुहम् ॥ १०.१८८
मृणालं शिशिरं तिक्तं कषायं पित्तदाहजित् ।
मूत्रकृच्छ्रविकारघ्नं रक्तवान्तिहरं परम् ॥ १०.१८९
पद्मकन्दस्तु शालूकं पद्ममूलं कटाह्वयम् ।
शालीनं च जलालूकं स्यादित्येवं षडाह्वयम् ॥ १०.१९०
शालूकं कटु विष्टम्भि रूक्षं रुच्यं कफापहम् ।
कषायं कासपित्तघ्नं तृष्णादाहनिवारणम् ॥ १०.१९१
किञ्जल्कं मकरन्दं च केसरं पद्मकेसरम् ।
किञ्जं पीतं परागं च तुङ्गं चाम्पेयकं नव ॥ १०.१९२
किञ्जल्कं मधुरं रूक्षं कटु चास्यव्रणापहम् ।
पित्तघ्नं शिशिरं रुच्यं तृष्णादाहनिवारणम् ॥ १०.१९३
अनूष्णं चोत्पलं चैव रात्रिपुष्पं जलाह्वयम् ।
हिमाब्जं शीतजलजं निशाफुल्लं च सप्तधा ॥ १०.१९४
उत्पलं शिशिरं स्वादु पित्तरक्तार्तिदोषनुत् ।
दाहश्रमवमिभ्रान्तिक्रिमिज्वरहरं परम् ॥ १०.१९५
धवलोत्पलं तु कुमुदं कह्लारं कैरवं च शीतलकम् ।
शशिकान्तमिन्दुकमलं चन्द्राब्जं चन्द्रिकाम्बुजं च नव ॥ १०.१९६
कुमुदं शीतलं स्वादु पाके तिक्तं कफापहम् ।

रक्तदोषहरं दाहश्रमपित्तप्रशान्तिकृत् ॥ १०.१९७
नीलोत्पलमुत्पलकं कुवलयमिन्दीवरं च कन्दोत्थम् ।
सौगन्धिकं सुगन्धं कुड्मलकं चासितोत्पलं नवधा ॥ १०.१९८
नीलोत्पलमतिस्वादु शीतं सुरभि सौख्यकृत् ।
पाके तु तिक्तमत्यन्तं रक्तपित्तापहारकम् ॥ १०.१९९
उत्पलिनी कैरविणी कुमुद्वती कुमुदिनी च चन्द्रेष्टा ।
कुवलयिनीन्दीवरिणी नीलोत्पलिनी च विज्ञेया ॥ १०.२००
उत्पलिनी हिमतिक्ता रक्तामयहारिणी च पित्तघ्नी ।
तापकफकासतृष्णाश्रमवमिशमनी च विज्ञेया ॥ १०.२०१
पुष्पद्रवः पुष्पसारः पुष्पस्वेदश्च पुष्पजः ।
पुष्पनिर्यासकश्चैव पुष्पाम्बुजः षडाह्वयः ॥ १०.२०२
पुष्पद्रवः सुरभिशीतकषायगौल्यो दाहश्रमातिवमिमोहमुखामयघ्नः ।
तृष्णार्तिपित्तकफदोषहरः सरश्च सन्तर्पणश्चिरमरोचकहारकश्च ॥ १०.२०३
जाती भाति मृदुर्मनोज्ञमधुरामोदा मुहूर्तद्वयं द्वैगुण्येन च मल्लिका मदकरी गन्धाधिका यूथिका ।
एकाहं नवमालिका मदकरं चाह्नां त्रयं चम्पकं तीव्रामोदमथाष्टवासरमितामोदान्विता केतकी ॥ १०.२०४
इत्थं नानाप्रथितसुमनःपत्रपद्माभिधानसंस्थानोक्तिप्रगुणिततया तद्गुणाख्याप्रवीणम् ।
वाचोयुक्तिस्थिरपरिमलं वर्गमेनं पठित्वा नित्यामोदैर्मुखसरसिजं वासयत्वाशु वैद्यः ॥ १०.२०५
स्थैर्ये शैलशिलोपमान्यपि शनैरासाद्य तद्भावनां भेद्यत्वं यमिनां मनांस्यपि ययुः पुष्पाशुगस्याशुगैः ।
तेषां भूषयतां सुरादिकशिरः पत्रप्रसूनात्मनां वर्गोऽयं वसतिर्मता सुमनसामुत्तंसवर्गाख्यया ॥ १०.२०६
लोकान् स्पर्शनयोगतः प्रसृमराण्यामोदयन्त्यञ्जसा प्रोत्फुल्लानि च यद्यशांसि विशदान्युत्तंसयन्ते दिशः ।
तस्यायं दशमः कृतौ स्थितिमगाद्वर्गो नृसिंहेशितुः सूरीन्दोः करवीरकादिरभिधासम्भारचूडामणौ ॥ १०.२०७

राजनिघण्टु, आम्रादिवर्गः
आम्राः पञ्चविधाः प्रोक्ता जम्बूश्चैव चतुर्विधा ।
पनसः कदली चाब्धिः नारिकेलद्वयं तथा ॥ ११.१
खर्जूरी पञ्चधा चैव चारो भल्लातरायणी ।
दाडिमं तिन्दुकौ चाथो अक्षोटः पीलुको द्विधा ॥ ११.२
पारेवते मधूकं तु द्विधा भव्यारुके क्रमात् ।
द्राक्षा त्रिधाथ कर्मारः परुषः पिप्पलो वटः ॥ ११.३
वटी चाश्वत्थिका प्लक्षस्तथा चोदुम्बरस्त्रिधा ।
तत्त्वचा बदरं चाब्धि बीजपूरं त्रिधा मतम् ॥ ११.४
आमलक्यौ द्विधा चैव चिञ्चा चिञ्चारसस्तथा ।
आम्रातकोऽथ नारङ्गो निम्बूर्जम्बीरकद्वयम् ॥ ११.५
कपित्थस्तुम्बरश्चाथ रुद्राक्षो बिल्वशल्लकी ।
कतकः कर्कटश्चैव द्विधा श्लेष्मातकस्तथा ॥ ११.६
मुष्ककः करमर्दश्च तथा तेजःफलस्तथा ।
विकण्टकः शिवा सप्ताप्यक्षः पूगोऽष्टधा स्मृतः ॥ ११.७
सप्तधा नागवल्ली स्याच्चूर्णं चैवाष्टधा स्मृतम् ।
उक्ता आम्रादिके वर्गे शून्यचन्द्रेन्दुसङ्ख्यया ॥ ११.८
आम्रः कामशरश्चूतो रसालः कामवल्लभः ।
कामाङ्गः सहकारश्च कीरेष्टो माधवद्रुमः ॥ ११.९
भृङ्गाभीष्टः सीधुरसो मधूली कोकिलोत्सवः ।
वसन्तदूतोऽम्लफलो मदाढ्यो मन्मथालयः ॥ ११.१०
मध्वावासः सुमदनः पिकरागो नृपप्रियः ।
प्रियाम्बुः कोकिलावासः स प्रोक्तस्त्रिकराह्वयः ॥ ११.११
आम्रः कषायाम्लरसः सुगन्धिः कण्ठामयघ्नोऽग्निकरश्च बालः ।
पित्तप्रकोपानिलरक्तदोषप्रदः पटुत्वादिरुचिप्रदश्च ॥ ११.१२
बालं पित्तानिलकफकरं तच्च बद्धास्थि तादृक्पक्वं दोषत्रितयशमनं स्वादु पुष्टिं गुरुं च ।
दत्ते धातुप्रचयमधिकं तर्पणं कान्तिकारि ख्यातं तृष्णाश्रमशमकृतौ चूतजातं फलं स्यात् ॥ ११.१३
कोशाम्रश्च घनस्कन्धो वनाम्रो जन्तुपादपः ।
क्षुद्राम्रश्चेति रक्ताम्रो लाक्षावृक्षः सुरक्तकः ॥ ११.१४
कोशाम्रमम्लमनिलापहरं कफार्तिपित्तप्रदं गुरु विदाहविशोफकारि ।
पक्वं भवेन्मधुरमीषदपारमम्लं पट्वादियुक्तरुचिदीपनपुष्टिबल्यम् ॥ ११.१५
राजाम्रोऽन्यो राजफलः स्मराम्रः कोकिलोत्सवः ।
मधुरः कोकिलानन्दः कामेष्टो नृपवल्लभः ॥ ११.१६
अन्यो महाराजचूतो महाराजाम्रकस्तथा ।
स्थूलाम्रो मन्मथावासः कङ्को नीलकपित्थकः ॥ ११.१७
कामायुधः कामफलो राजपुत्रो नृपात्मजः ।
महाराजफलः कामो महाचूतस्त्रयोदश ॥ ११.१८
तस्यापि श्रेष्ठतोऽन्याम्रो रसालो बद्धपूर्वकः ।
ज्ञेयश्चक्रलताम्रश्च मध्वाम्रः सितजाम्रकः ।
वनेज्यो मन्मथानन्दो मदनेच्छाफलो मुनिः ॥ ११.१९
राजाम्राः कोमलाः सर्वे कट्वम्लाः पित्तदाहदाः ।
सुपक्वाः स्वादुमाधुर्याः पुष्टिवीर्यबलप्रदाः ॥ ११.२०
राजाम्रेषु त्रिषु प्रोक्तं साम्यमेव रसाधिकम् ।
गुणाधिकं तु विज्ञेयं पर्यायादुत्तरोत्तरम् ॥ ११.२१
बालं राजफलं कफास्रपवनश्वासार्तिपित्तप्रदं मध्यं तादृशमेव दोषबहुलं भूयः कषायाम्लकम् ।

पक्वं चेन्मधुरं त्रिदोषशमनं तृष्णाविदाहश्रमश्वासारोचकमोचकं गुरु हिमं वृष्यातिचूताह्वयम् ॥ ११.२२
आम्रत्वचा कषाया च मूलं सौगन्धि तादृशम् ।
रुच्यं संग्राहि शिशिरं पुष्पं तु रुचिदीपनम् ॥ ११.२३
जम्बूस्तु सुरभिपत्रा नीलफला श्यामला महास्कन्धा ।
राजार्हा राजफला शुकप्रिया मेघमोदिनी नवाह्वा ॥ ११.२४
जम्बूः कषायमधुरा श्रमपित्तदाहकण्ठार्तिशोषशमनी क्रिमिदोषहन्त्री ।
श्वासातिसारकफकासविनाशनी च विष्टम्भिनी भवति रोचनपाचनी च ॥ ११.२५
महाजम्बू राजजम्बूः स्वर्णमाता महाफला ।
शुकप्रिया कोकिलेष्टा महानीला बृहत्फला ॥ ११.२६
महाजम्बूरुष्णा समधुरकषाया श्रमहरा निरस्यत्यास्यस्थं झटिति जडिमानं स्वरकरी ।
विधत्ते विष्टम्भं शमयति च शोषं वितनुते श्रमातीसारार्त्तिश्वसितकफकासप्रशमनम् ॥ ११.२७
काकजम्बूः काकफला नादेयी काकवल्लभा ।
भृङ्गेष्टा काकनीला च ध्वाङ्क्षजम्बूर्धनप्रिया ॥ ११.२८
काकजम्बूः कषायाम्ला पाके तु मधुरा गुरुः ।
दाहश्रमातिसारघ्नी वीर्यपुष्टिबलप्रदा ॥ ११.२९
अन्या च भूमिजम्बूर्ह्रस्वफला भृङ्गवल्लभा ह्रस्वा ।
भूजम्बूर्भ्रमरेष्टा पिकभक्षा काष्ठजम्बूश्च ॥ ११.३०
भूमिजम्बूः कषाया च मधुरा श्लेष्मपित्तनुत् ।
हृद्या संग्राहिहृत्कण्ठदोषघ्नी वीर्यपुष्टिदा ॥ ११.३१
पनसस्तु महासर्जः फलिनः फलवृक्षकः ।
स्थूलः कण्टफलश्चैव स्यान्मूलफलदः स्मृतः ।
अपुष्पफलदः पूतफलो ह्यङ्कमितस्तथा ॥ ११.३२
पनसं मधुरं सुपिच्छिलं गुरु हृद्यं बलवीर्यवृद्धिदम् ।
श्रमदाहविशोषनाशनं रुचिकृद्ग्राहि च दुर्जरं परम् ॥ ११.३३
ईषत्कषायं मधुरं तद्बीजं वातलं गुरु ।
तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनम् ॥ ११.३४
बालं तु नीरसं हृद्यं मध्यपक्वं तु दीपनम् ।
रुचिदं लवणाद्युक्तं पनसस्य फलं स्मृतम् ॥ ११.३५
कदली सुफला रम्भा सुकुमारा सकृत्फला ।
मोचा गुच्छफला हस्तिविषाणी गुच्छदन्तिका ॥ ११.३६
काष्ठीरसा च निःसारा राजेष्टा बालकप्रिया ।
ऊरुस्तम्भा भानुफला वनलक्ष्मीश्च षोडश ॥ ११.३७
बालं फलं मधुरमल्पतया कषायं पित्तापहं शिशिररुच्यमथापि नालम् ।
पुष्पं तदप्यनुगुणं क्रिमिहारि कन्दं पर्णं च शूलशमकं कदलीभवं स्यात् ॥ ११.३८
रम्भापक्वफलं कषायमधुरं बल्यं च शीतं तथा पित्तं चास्रविमर्दनं गुरुतरं पथ्यं न मन्दानले ।
सद्यः शुक्रविवृद्धिदं क्लमहरं तृष्णापहं कान्तिदं दीप्ताग्नौ सुखदं कफामयकरं सन्तर्पणं दुर्जरम् ॥ ११.३९
काष्ठकदली सुकाष्ठा वनकदली काष्ठिका शिलारम्भा ।
दारुकदली फलाढ्या वनमोचा चाश्मकदली च ॥ ११.४०
स्यात्काष्ठकदली रुच्या रक्तपित्तहरा हिमा ।
गुरुर्मन्दाग्निजननी दुर्जरा मधुरा परा ॥ ११.४१
गिरिकदली गिरिरम्भा पर्वतमोचाप्यरण्यकदली च ।
बहुबीजा वनरम्भा गिरिजा गजवल्लभाभिहिता ॥ ११.४२
गिरिकदली मधुरहिमा बलवीर्यविवृद्धिदायिनी रुच्या ।
तृट्पित्तदाहशोषप्रशमनकर्त्री च दुर्जरा च गुरुः ॥ ११.४३
अन्या सुवर्णकदली सुवर्णरम्भा च कनकरम्भा च ।

पीता सुवर्णमोचा चम्पकरम्भा सुरम्भिका सुभगा ॥ ११.४४
हेमफला स्वर्णफला कनकस्तम्भा च पीतरम्भा च ।
गौरा च गौररम्भा काञ्चनकदली सुरप्रिया षड्भूः ॥ ११.४५
सुवर्णमोचा मधुरा हिमा च स्वल्पाशने दीपनकारिणी च ।
तृष्णापहा दाहविमोचनी च कफावहा वृष्यकरी गुरुश्च ॥ ११.४६
नारिकेलो रसफलः सुतुङ्गः कूर्चशेखरः ।
दृढनीलो नीलतरुर्मङ्गल्योच्चतरुस्तथा ॥ ११.४७
तृणराजः स्कन्धतरुर्दाक्षिणात्यो दुरारुहः ।
लाङ्गली त्र्यम्बकफलस्तथा दृढफलस्थितिः ॥ ११.४८
नारिकेलो गुरुः स्निग्धः शीतः पित्तविनाशनः ।
अर्द्धपक्वस्तृषाशोषशमनो दुर्जरः परः ॥ ११.४९
नारिकेलसलिलं लघु बल्यं शीतलं च मधुरं गुरु पाके पित्तपीनसतृषाश्रमदाहशान्ति शोषशमनं सुखदायि ।
पक्वमेतदपि किंचिदिहोक्तं पित्तकारि रुचिदं मधुरं च दीपनं बलकरं गुरु वृष्यं वीर्यवर्धनमिदं तु वदन्ति ॥ ११.५०
खुबरं नारिकेलस्य स्निग्धं गुरु च दुर्जरम् ।
दाहविष्टम्भदं रुच्यं बलवीर्यविवर्धनम् ॥ ११.५१
मधुनारिकेलकोऽन्यो माध्वीकफलश्च मधुफलोऽसितजफलः ।
माक्षिकफलो मृदुफलो बहुकूर्चो ह्रस्वफलश्च वसुगणिताह्वः ॥ ११.५२
मधुरं मधुनारिकेलमुक्तं शिशिरं दाहतृषार्तिपित्तहारि ।
बलपुष्टिकरं च कान्तिमग्र्यं कुरुते वीर्यविवर्धनं च रुच्यम् ॥ ११.५३
माध्वीकं नारिकेलं फलमतिमधुरं दुर्जरं जन्तुकारि स्निग्धं वातातिसारश्रमशमनमथ ध्वंसनं वह्निदीप्तेः ।
आमश्लेष्मप्रकोपं जनयति कुरुते चारुकान्तिं बलं च स्थैर्यं देहस्य धत्ते घनमदनकलावर्धनं पित्तनाशम् ॥ ११.५४
खर्जूरी तु खरस्कन्धा दुष्प्रधर्षा दुरारुहा ।
निःश्रेणी च कषाया च यवनेष्टा हरिप्रिया ॥ ११.५५
खर्जूरी तु कषाया च पक्वा गौल्यकषायका ।
पित्तघ्नी कफदा चैव क्रिमिकृद्वृष्यबृंहणी ॥ ११.५६
मधुखर्जूरी त्वन्या मधुकर्कटिका च कोलकर्कटिका ।
कण्टकिनी मधुफलिका माध्वी मधुरा च मधुरखर्जूरी ॥ ११.५७
मधुखर्जूरी मधुरा वृष्या संतापपित्तशान्तिकरी ।
शिशिरा च जन्तुकरी बहुवीर्यविवर्धनं तनुते ॥ ११.५८
भूखर्जूरी भुक्ता वसुधाखर्जूरिका च भूमिखर्जूरी ।
भूखर्जूरी मधुरा शिशिरा च विदाहपित्तहरा ॥ ११.५९
दीप्या च पिण्डखर्जूरी स्थलपिण्डा मधुस्रवा ।
फलपुष्पा स्वादुपिण्डा हयभक्ष्या स्वराभिधा ॥ ११.६०
तथान्या राजखर्जूरी राजपिण्डा नृपप्रिया ।
मुनिखर्जूरिका वन्या राजेष्टा रिपुसम्मिता ॥ ११.६१
पिण्डखर्जूरिकायुग्मं गौल्यं स्वादे हिमं गुरु ।
पित्तदाहार्त्तिश्वासघ्नं श्रमहृद्वीर्यवृद्धिदम् ॥ ११.६२
दाहघ्नी मधुरास्रपित्तशमनी तृष्णार्तिदोषापहा शीता श्वासकफश्रमोदयहरा सन्तर्पणी पुष्टिदा ।
वह्नेर्मान्द्यकरी गुरुर्विषहरा हृद्या च दत्ते बलं स्निग्धा वीर्यविवर्धनी च कथिता पिण्डाख्यखर्जूरिका ॥ ११.६३
चारः खद्रुः खरस्कन्धो ललनश्चारकस्तथा ।
बहुवल्कः प्रियालश्च नवद्रुस्तापसप्रियः ।
स्नेहबीजश्चोपवटो भक्षबीजः करेन्दुधा ॥ ११.६४
चारस्य च फलं पक्वं वृष्यं गौल्याम्लकं गुरु ।
तद्बीजं मधुरं वृष्यं पित्तदाहार्तिनाशनम् ॥ ११.६५
भल्लातकोऽग्निर्दहनस्तपनोऽरुष्करोऽनलः ।

क्रिमिघ्नस्तैलबीजश्च वातारिः स्फोटबीजकः ॥ ११.६६
पृथग्बीजो धनुर्बीजो भल्लातो बीजपादपः ।
वह्निर्वरतरुश्चेति विज्ञेयः षोडशाह्वयः ॥ ११.६७
भल्लातकः कटुस्तिक्तः कषायोष्णः क्रिमीञ्जयेत् ।
कफवातोदरानाहमेहदुर्नामनाशनः ॥ ११.६८
भल्लातस्य फलं कषायमधुरं कोष्णं कफार्तिश्रमश्वासानाहविबन्धशूलजठराध्मानक्रिमिध्वंसनम् ।
तन्मज्जा च विशोषदाहशमनी पित्तापहा तर्पणी वातारोचकहारिदीप्तिजननी पित्तापहा त्वञ्जसा ॥ ११.६९
राजादनो राजफलः क्षीरवृक्षो नृपद्रुमः ।
निम्बबीजो मधुफलः कपीष्टो माधवोद्भवः ॥ ११.७०
क्षीरी गुच्छफलः प्रोक्तः शुकेष्टो राजवल्लभः ।
श्रीफलोऽथ दृढस्कन्धः क्षीरशुक्लस्त्रिपञ्चधा ॥ ११.७१
राजादनी तु मधुरा पित्तहृद्गुरुतर्पणी ।
वृष्या स्थौल्यकरी हृद्या सुस्निग्धा मेहनाशकृत् ॥ ११.७२
दाडिमो दाडिमीसारः कुट्टिमः फलषाडवः ।
करको रक्तबीजश्च सुफलो दन्तबीजकः ॥ ११.७३
मधुबीजः कुचफलो रोचनः शुकवल्लभः ।
मणिबीजस्तथा वल्कफलो वृत्तफलश्च सः ।
सुनीलो नीलपत्रश्च ज्ञेयः सप्तदशाह्वयः ॥ ११.७४
दाडिमं मधुरमम्लकषायं कासवातकफपित्तविनाशि ।
ग्राहि दीपनकरं च लघूष्णं शीतलं श्रमहरं रुचिदायि ॥ ११.७५
दाडिमं द्विविधमीरितमार्यैरम्लमेकमपरं मधुरं च ।
तत्र वातकफहारि किलाम्लं तापहारि मधुरं लघु पथ्यम् ॥ ११.७६
तिन्दुको नीलसारश्च कालस्कन्धोऽतिमुक्तकः ।
स्फूर्जको रामणश्चैव स्फूर्जनः स्यन्दनाह्वयः ॥ ११.७७
तिन्दुकस्तु कषायः स्यात्संग्राही वातकृत्परः ।
पक्वस्तु मधुरः स्निग्धो दुर्जरः श्लेष्मलो गुरुः ॥ ११.७८
तिन्दुकोऽन्यः काकपीलुः काकाण्डः काकतिन्दुकः ।
काकस्फूर्जश्च काकेन्दुः काकाह्वः काकबीजकः ॥ ११.७९
काकतिन्दुः कषायोऽम्लो गुरुर्वातविकारकृत् ।
पक्वस्तु मधुरः किंचित्कफकृत्पित्तवान्तिहृत् ॥ ११.८०
अक्षोटः पार्वतीयश्च फलस्नेहो गुडाशयः ।
कीरेष्टः कन्दरालश्च मधुमज्जा बृहच्छदः ॥ ११.८१
अक्षोटो मधुरो बल्यः स्निग्धोष्णो वातपित्तजित् ।
रक्तदोषप्रशमनः शीतलः कफकोपनः ॥ ११.८२
पीतुः शीतः सहस्रांशी धानी गुडफलस्तथा ।
विरेचनफलः शाखी श्यामः करभवल्लभः ॥ ११.८३
अङ्काह्वः कटुकः पीलुः कषायो मधुराम्लकः ।
सरः स्वादुश्च गुल्मार्शःशमनो दीपनः परः ॥ ११.८४
अन्यश्चैव बृहत्पीलुर्महापीलुर्महाफलः ।
राजपीलुर्महावृक्षो मधुपीलुः षडाह्वयः ॥ ११.८५
मधुरस्तु महापीलुर्वृष्यो विषविनाशनः ।
पित्तप्रशमनो रुच्य आमघ्नो दीपनीयकः ॥ ११.८६
पारेवतं तु रैवतमारेवतकं च किंच रैवतकम् ।
मधुफलममृतफलाख्यं पारेवतकं च सप्ताह्वम् ॥ ११.८७
पारेवतं तु मधुरं क्रिमिवातहारि वृष्यं तृषाज्वरविदाहहरं च हृद्यम् ।

मूर्छाभ्रमश्रमविशोषविनाशकारि स्निग्धं च रुच्यमुदितं बहुवीर्यदायि ॥ ११.८८
महापारेवतं चान्यत्स्वर्णपारेवतं तथा ।
साम्राणिजं खारिकं च रक्तरैवतकं च तत् ।
बृहत्पारेवतं प्रोक्तं द्वीपजं द्वीपखर्जूरी ॥ ११.८९
महापारेवतं गौल्यं बलकृत्पुष्टिवर्धनम् ।
वृष्यं मूर्छाज्वरघ्नं च पूर्वोक्तादधिकं गुणैः ॥ ११.९०
मधूको मधुवृक्षः स्यात्मधुष्ठीलो मधुस्रवः ।
गुडपुष्पो लोध्रपुष्पो वानप्रस्थश्च माधवः ॥ ११.९१
मधुकं मधुरं शीतं पित्तदाहश्रमापहम् ।
वातलं जन्तुदोषघ्नं वीर्यपुष्टिविवर्धनम् ॥ ११.९२
अन्यो जलमधूको मङ्गल्यो दीर्घपत्रको मधुपुष्पः ।
क्षौद्रप्रियः पतङ्गः कीरेष्टो गैरिकाक्षश्च ॥ ११.९३
ज्ञेयो जलमधूकस्तु मधुरो व्रणनाशनः ।
वृष्यो वान्तिहरः शीतो बलकारी रसायनः ॥ ११.९४
मधूकपुष्पं मधुरं च वृष्यं हृद्यं हिमं पित्तविदाहहारि ।
फलं च वातामयपित्तनाशि ज्ञेयं मधूकद्वयमेवमेतत् ॥ ११.९५
भव्यं भवं भविष्यं च भावनं वक्त्रशोधनम् ।
तथा पिच्छलबीजं च तच्च लोमफलं मतम् ॥ ११.९६
भव्यमम्लं कटूष्णं च बालं वातकफापहम् ।
पक्वं तु मधुराम्लं च रुचिकृत्सामशूलहृत् ॥ ११.९७
आरुकं वीरसेनं च वीरं वीरारुकं तथा ।
तत्र विद्याच्चतुर्जातीः पत्रपुष्पादिभेदतः ॥ ११.९८
आरुकाणि च सर्वाणि मधुराणि हिमानि च ।
अर्शःप्रमेहगुल्मास्रदोषविध्वंसनानि च ॥ ११.९९
द्राक्षा चारुफला कृष्णा प्रियाला तापसप्रिया ।
गुच्छफला रसाला च ज्ञेयामृतफला च सा ॥ ११.१००
द्राक्षातिमधुराम्ला च शीता पित्तार्तिदाहजित् ।
मूत्रदोषहरा रुच्या वृष्या संतर्पणी परा ॥ ११.१०१
अन्या कपिलद्राक्षा मृद्वीका गोस्तनी च कपिलफला ।
अमृतरसा दीर्घफला मधुवल्ली मधुफला मधूली च ॥ ११.१०२
हरिता च हारहूरा सुफला मृद्वी हिमोत्तरापथिका ।
हैमवती शतवीर्या काश्मीरी गजराजमहिगणिता ॥ ११.१०३
गोस्तनी मधुरा शीता हृद्या च मदहर्षणी ।
दाहमूर्छाज्वरश्वासतृषाहृल्लासनाशिनी ॥ ११.१०४
अन्या सा काकलीद्राक्षा जम्बुका च फलोत्तमा ।
लघुद्राक्षा च निर्बीजा सुवृत्ता रुचिकारिणी ।
शिशिरा श्वासहृल्लासनाशिनी जनवल्लभा ॥ ११.१०५
द्राक्षाबालफलं कटूष्णविशदं पित्तास्रदोषप्रदं मध्यं चाम्लरसं रसान्तरगते रुच्यातिवह्निप्रदम् ।
पक्वं चेन्मधुरं तथाम्लसहितं तृष्णास्रपित्तापहं पक्वं शुष्कतमं श्रमार्तिशमनं सन्तर्पणं पुष्टिदम् ॥ ११.१०६
शीता पित्तास्रदोषं दमयति मधुरा स्निग्धपाकातिरुच्या चक्षुष्या श्वासकासश्रमवमिशमनी शोफतृष्णाज्वरघ्नी ।
दाहाध्मानभ्रमादीनपनयति परा तर्पणी पक्वशुष्का द्राक्षा सुक्षीणवीर्यानपि मदनकलाकेलिदक्षान् विधत्ते ॥ ११.१०७
कर्मारः कर्मरकः पीतफलः कर्मरश्च मुद्गरकः ।
मुद्गरफलश्च धाराफलकस्तु कर्मारकश्चैव ॥ ११.१०८
कर्मारकोऽम्ल उष्णश्च वातहृत्पित्तकारकः ।
पक्वस्तु मधुराम्लः स्याद्बलपुष्टिरुचिप्रदः ॥ ११.१०९

परूषकं तीलपर्णं गिरिपीलु परावरम् ।
नीलमण्डलमल्पास्थि परुषं च परुस्तथा ॥ ११.११०
परूषमम्लं कटुकं कफार्तिजिद्वातापहं तत्फलमेव पित्तदम् ।
सोष्णं च पक्वं मधुरं रुचिप्रदं पित्तापहं शोफहरं च पीतम् ॥ ११.१११
अश्वत्थश्चाच्युतावासश्चलपत्रः पवित्रकः ।
शुभदो बोधिवृक्षश्च याज्ञिको गजभक्षकः ॥ ११.११२
श्रीमान् क्षीरद्रुमो विप्रो मङ्गल्यः श्यामलश्च सः ।
पिप्पलो गुह्यपुष्पश्च सेव्यः सत्यः शुचिद्रुमः ।
चैत्यद्रुमो धर्मवृक्षो ज्ञेयो विंशतिसंज्ञकः ॥ ११.११३
पिप्पलः सुमधुरस्तु कषायः शीतलश्च कफपित्तविनाशी ।
रक्तदाहशमनः स हि सद्यो योनिदोषहरणः किल पक्वः ॥ ११.११४
अश्वत्थवृक्षस्य फलानि पक्वान्यतीवहृद्यानि च शीतलानि ।
कुर्वन्ति पित्तास्रविषार्तिदाहविच्छर्दिशोषारुचिदोषनाशम् ॥ ११.११५
स्यादथ वटो जटालो न्यग्रोधो रोहिणोऽवरोही च ।
विटपी रक्तफलश्च स्कन्धरुहो मण्डली महाच्छायः ॥ ११.११६
शृङ्गी यक्षावासो यक्षतरुः पादरोहिणो नीलः ।
क्षीरी शिफारुहः स्याद्बहुपादः स तु वनस्पतिर्नवभूः ॥ ११.११७
वटः कषायो मधुरः शिशिरः कफपित्तजित् ।
ज्वरदाहतृषामोहव्रणशोफापहारकः ॥ ११.११८
नदीवटो यज्ञवृक्षः सिद्धार्थो वटको वटी ।
अमरा सङ्गिनी चैव क्षीरकाष्ठा च कीर्तिता ॥ ११.११९
वटी कषायमधुरा शिशिरा पित्तहारिणी ।
दाहतृष्णाश्रमश्वासविच्छर्दिशमनी परा ॥ ११.१२०
अश्वत्थी लघुपत्री स्यात्पवित्रा ह्रस्वपत्रिका ।
पिप्पलिका वनस्था च क्षुद्रा चाश्वत्थसंनिभा ॥ ११.१२१
अश्वत्थिका तु मधुरा कषाया चास्रपित्तजित् ।
विषदाहप्रशमनी गुर्विण्या हितकारिणी ॥ ११.१२२
प्लक्षः कपीतनः क्षीरी सुपार्श्वोऽथ कमण्डलुः ।
शृङ्गी वरोहशाखी च गर्दभाण्डः कपीतकः ।
दृढप्ररोहः प्लवकः प्लवङ्गश्च महाबलः ॥ ११.१२३
प्लक्षश्चैवापरो ह्रस्वः सुशीतः शीतवीर्यकः ।
पुण्ड्रो महावरोहश्च ह्रस्वपर्णस्तु पिम्परिः ।
भिदुरो मङ्गलच्छायो ज्ञेयो द्वाविंशधाभिधः ॥ ११.१२४
प्लक्षः कटुकषायश्च शिशिरो रक्तदोषजित् ।
मूर्छाभ्रमप्रलापघ्नो ह्रस्वप्लक्षो विशेषतः ॥ ११.१२५
उदुम्बरः क्षीरवृक्षो हेमदुग्धः सदाफलः ।
कालस्कन्धो यज्ञयोग्यो यज्ञीयः सुप्रतिष्ठितः ॥ ११.१२६
शीतवल्को जन्तुफलः पुष्पशून्यः पवित्रकः ।
सौम्यः शीतफलश्चेति मनुसंज्ञः समीरितः ॥ ११.१२७
उदुम्बरं कषायं स्यात्पक्वं तु मधुरं हिमम् ।
कृमिकृत्पित्तरक्तघ्नं मूर्छादाहतृषापहम् ॥ ११.१२८
औदुम्बरं फलमतीव हिमं सुपक्वं पित्तापहं च मधुरं श्रमशोफहारि ।
आमं कषायमतिदीपनरोचनं च मांसस्य वृद्धिकरमस्रविकारकारि ॥ ११.१२९
नद्युदुम्बरिका चान्या लघुपत्रफला तथा ।
प्रोक्ता लघुहेमदुग्धा लघुपूर्वसदाफला ॥ ११.१३०

लघ्वाद्युम्बराह्वा स्याद्बाणाह्वा च प्रकीर्तिता ।
रसवीर्यविपाकेषु किंचिन्न्यूना च पूर्वतः ॥ ११.१३१
कृष्णोदुम्बरिका चान्या खरपत्री च राजिका ।
उदुम्बरी च कठिना कुष्ठघ्नी फल्गुवाटिका ॥ ११.१३२
अजाक्षी फल्गुनी चैव मलपूश्चित्रभेषजा ।
काकोदुम्बरिका चैव ध्वाङ्क्षनाम्नी त्रयोदश ॥ ११.१३३
काकोदुम्बरिका शीता पक्वा गौल्याम्लिका कटुः ।
त्वग्दोषपित्तरक्तघ्नी तद्वल्कं चातिसरजित् ॥ ११.१३४
उदुम्बरत्वचा शीता कषाया व्रणनाशिनी ।
गुर्विणीगर्भसंरक्षे हिता स्तन्यप्रदायिनी ॥ ११.१३५
बदरो बदरी कोली कर्कन्धूः कोलफेनिलौ ।
सौवीरको गुडफलो बालेष्टः फलशैशिरः ॥ ११.१३६
दृढबीजो वृत्तफलः कण्टकी वक्रकण्टकः ।
सुबीजः सुफलः स्वच्छः सुरसः स्मृतिसम्मितः ॥ ११.१३७
बदरं मधुरं कषायमम्लं परिपक्वं मधुराम्लमुष्णमेतत् ।
कफकृत्पचनातिसाररक्तश्रमशोषार्तिविनाशनं च रुच्यम् ॥ ११.१३८
बदरस्य पत्रलेपो ज्वरदाहविनाशनः ।
त्वचा विस्फोटशमनी बीजं नेत्रामयापहम् ॥ ११.१३९
राजबदरो नृपेष्टो नृपबदरो राजवल्लभश्चैव ।
पृथुकोलस्तनुबीजो मधुरफलो राजकोलश्च ॥ ११.१४०
राजबदरः सुमधुरः शिशिरो दाहार्तिपित्तवातहरः ।
वृष्यश्च वीर्यवृद्धिं कुरुते शोषश्रमं हरति ॥ ११.१४१
भूबदरी क्षितिबदरी वल्लीबदरी च बदरिवल्ली च ।
बहुफलिका लघुबदरी बदरफली सूक्ष्मबदरी च ॥ ११.१४२
भूबदरी मधुराम्ला कफवातविकारहारिणी पथ्या ।
दीपनपाचनकर्त्री किंचित्पित्तास्रकारिणी रुच्या ॥ ११.१४३
सूक्ष्मफलो लघुबदरो बहुकण्टः सूक्ष्मपत्रको दुःस्पर्शः ।
मधुरः शम्बराहारः शिखिप्रियश्चैव निर्दिष्टः ॥ ११.१४४
लघुबदरं मधुराम्लं पक्वं कफवातनाशनं रुच्यम् ।
स्निग्धं तु जन्तुकारकमीषत्पित्तार्तिदाहशोषघ्नम् ॥ ११.१४५
बीजपूरो बीजपूर्णं पूर्णबीजः सुकेसरः ।
बीजकः केशराम्लश्च मातुलुङ्गः सुपूरकः ॥ ११.१४६
रुचको बीजफलको जन्तुघ्नो दन्तुरत्वचः ।
पूरको रोचनफलो द्विदेवमुनिसम्मितः ॥ ११.१४७
बीजपूरफलमम्लकटूष्णं श्वासकासशमनं पचनं च ।
कण्ठशोधनपरं लघु हृद्यं दीपनं च रुचिकृज्जरणं च ॥ ११.१४८
बालं पित्तमरुत्कफास्रकरणं मध्यं च तादृग्विधं पक्वं वर्णकरं च हृद्यमथ तत्पुष्णाति पुष्टिं बलम् ।
शूलाजीर्णविबन्धमारुतकफश्वासार्तिमन्दाग्निजित्कासारोचकशोफशान्तिदमिदं स्यान्मातुलुङ्गं सदा ॥ ११.१४९
त्वक्तिक्ता दुर्जरा स्यात्कृमिकफपवनध्वंसिनी स्निग्धमुष्णं मध्यं शूलार्तिपित्तप्रशमनमखिलारोचकघ्नं च गौल्यम् ।
वातार्तिघ्नं कटूष्णं जठरगदहरं केसरं दीप्यमम्लं बीजं तिक्तं कफार्शःश्वयथुशमकरं बीजपूरस्य पथ्यम् ॥ ११.१५०
वनबीजपूरकोऽन्यो वनजो वनपूरकश्च वनबीजः ।
अत्यम्ला गन्धाढ्या वनोद्भवा देवदूती च ॥ ११.१५१
पीता च देवदासी देवेष्टा मातुलुङ्गिका चैव ।
पवनी महाफला च स्यादियमिति वेदभूमिमिता ॥ ११.१५२
अम्लः कटूष्णो वनबीजपूरो रुचिप्रदो वातविनाशनश्च ।

स्यादम्लदोषकृमिनाशकारी कफापहः श्वासनिषूदनश्च ॥ ११.१५३
मधुरबीजपूरो मधुपर्णी मधुरकर्कटी मधुवल्ली ।
मधुकर्कटी मधुरफला महाफला वर्धमाना च ॥ ११.१५४
मधुकर्कटी मधुरा शिशिरा दाहनाशनी ।
त्रिदोषशमनी रुच्या वृष्या च गुरुदुर्जरा ॥ ११.१५५
आमलकी वयःस्था च श्रीफला धात्रिका तथा ।
अमृता च शिवा शान्ता शीतामृतफला तथा ॥ ११.१५६
जातीफला च धात्रेयी ज्ञेया धात्रीफला तथा ।
वृष्या वृत्तफला चैव रोचनी शरभूह्वया ॥ ११.१५७
आमलकं कषायाम्लं मधुरं शिशिरं लघु ।
दाहपित्तवमीमेहशोफघ्नं च रसायनम् ॥ ११.१५८
कटु मधुरकषायं किंचिदम्लं कफघ्नं रुचिकरमतिशीतं हन्ति पित्तास्रतापम् ।
श्रमवमनविबन्धाध्मानविष्टम्भदोषप्रशमनममृताभं चामलक्याः फलं स्यात् ॥ ११.१५९
अन्यच्चामलकं प्रोक्तं काष्ठधात्रीफलं तथा ।
क्षुद्रामलकसंप्रोक्तं क्षुद्रजातीफलं च तत् ॥ ११.१६०
काष्ठधात्रीफलं स्वादे कषायं कटुकं तथा ।
शीतं पित्तास्रदोषघ्नं पूर्वोक्तमधिकं गुणैः ॥ ११.१६१
चिञ्चा तु चुक्रिका चुक्रा साम्लिका शाकचुक्रिका ।
अम्ली सुतिन्तिडी चाम्ला चुक्रिका च नवाभिधा ॥ ११.१६२
चिञ्चात्यम्ला भवेदामा पक्वा तु मधुराम्लिका ।
वातघ्नी पित्तदाहास्रकफदोषप्रकोपणी ॥ ११.१६३
अम्लिकायाः फलं त्वाममत्यम्लं लघु पित्तकृत् ।
पक्वं तु मधुराम्लं स्याद्भेदि विष्टम्भवातजित् ॥ ११.१६४
पक्वचिञ्चाफलरसो मधुराम्लो रुचिप्रदः ।
शोफपाककरो लेपाद्व्रणदोषविनाशनः ॥ ११.१६५
चिञ्चापत्रं च शोफघ्नं रक्तदोषव्यथापहम् ।
तस्याः शुष्कत्वचाक्षारं शूलमन्दाग्निनाशनम् ॥ ११.१६६
अम्लसारस्तु शाकाम्लं चुक्राम्लं चाम्लचुक्रिका ।
चिञ्चाम्लमम्लचूडश्च चिञ्चारसोऽपि सप्तधा ॥ ११.१६७
अम्लसारस्त्वतीवाम्लो वातघ्नः कफदाहकृत् ।
साम्येन शर्करामिश्रो दाहपित्तकफार्त्तिनुत् ॥ ११.१६८
आम्रातकः पीतनकः कपिचूतोऽम्लवाटकः ।
शृङ्गी कपिरसाढ्यश्च तनुक्षीरः कपिप्रियः ॥ ११.१६९
आम्रातकं कषायाम्लमामहृत्कण्ठहर्षणम् ।
पक्वं तु मधुराम्लाढ्यं स्निग्धं पित्तकफापहम् ॥ ११.१७०
नारङ्गः स्यान्नागरङ्गः सुरङ्गस्त्वग्गन्धश्चैरावतो वक्त्रवासः ।
योगीरङ्गो नागरो योगरङ्गः गन्धाढ्योऽयं गन्धपत्रो रवीष्टः ॥ ११.१७१
नारङ्गं मधुरं चाम्लं गुरूष्णं चैव रोचनम् ।
वातामक्रिमिशूलघ्नं श्रमहृद्बलरुच्यदम् ॥ ११.१७२
निम्बूकः स्यादम्लजम्बीरकाख्यो वह्निर्दीप्यो वह्निबीजोऽम्लसारः ।
दन्ताघातः शोधनो जन्तुमारी निम्बूश्च स्याद्रोचनो रुद्रसंज्ञः ॥ ११.१७३
निम्बूफलं प्रथितमम्लरसं कटूष्णं गुल्मामवातहरमग्निविवृद्धिकारि ।
चक्षुष्यमेतदथ कासकफार्त्तिकण्ठविच्छर्दिहारि परिपक्वमतीव रुच्यम् ॥ ११.१७४
जम्बीरो दन्तशठो जम्भो जम्भीरजम्भलौ चैव ।
रोचनको मुखशोधी जाड्यारिर्जन्तुजिन्नवधा ॥ ११.१७५

जम्बीरस्य फलं रसेऽम्लमधुरं वातापहं पित्तकृत्पथ्यं पाचनरोचनं बलकरं वह्नेर्विवृद्धिप्रदम् ।
पक्वं चेन्मधुरं कफार्त्तिशमनं पित्तास्रदोषापनुत्वर्ण्यं वीर्यविवर्द्धनं च रुचिकृत्पुष्टिप्रदं तर्पणम् ॥ ११.१७६
अन्यो मधुजम्बीरो मधुजम्भो मधुरजम्भलश्चैव ।
शङ्खद्रावी शर्करकः पित्तद्रावी च षट्संज्ञः ॥ ११.१७७
मधुरो मधुजम्बीरः शिशिरः कफपित्तनुत् ।
शोषघ्नस्तर्पणो वृष्यः श्रमघ्नः पुष्टिकारकः ॥ ११.१७८
मालूरस्तु कपित्थो मङ्गल्यो नीलमल्लिका च दधि ।
ग्राहिफलश्चिरपाकी ग्रन्थिफलः कुचफलो दधिफलश्च ॥ ११.१७९
गन्धफलश्च कपीष्टो वृत्तफलः करभवल्लभश्चैव ।
दन्तशठः कठिनफलः करण्डफलकश्च सप्तदशसंज्ञः ॥ ११.१८०
कपित्थो मधुराम्लश्च कषायस्तिक्तशीतलः ।
वृष्यः पित्तानिलं हन्ति संग्राही व्रणनाशनः ॥ ११.१८१
आमं कपित्थमम्लोष्णां कफघ्नं ग्राहि वातलम् ।
दोषत्रयहरं पक्वं मधुराम्लरसं गुरु ॥ ११.१८२
आमं कण्ठरुजं कपित्थमधिकं जिह्वाजडत्वावहं तद्दोषत्रयवर्धनं विषहरं संग्राहकं रोचकम् ।
पक्वं श्वासवमिश्रमक्लमहरं हिक्कापनोदक्षमं सर्वं ग्राहि रुचिप्रदं च कथितं सेव्यं ततः सर्वदा ॥ ११.१८३
तुम्बरुः सौरभः सौरो वनजः सानुजो द्विजः ।
तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ।
स्फुटफलः सुगन्धिश्च स प्रोक्तो द्वादशाह्वयः ॥ ११.१८४
तुम्बरुर्मधुरस्तिक्तः कटूष्णः कफवातनुत् ।
शूलगुल्मोदराध्मानकृमिघ्नो वह्निदीपनः ॥ ११.१८५
रुद्राक्षश्च शिवाक्षश्च शर्वाक्षो भूतनाशनः ।
पावनो नीलकण्ठाक्षो हराक्षश्च शिवप्रियः ॥ ११.१८६
रुद्राक्षमम्लमुष्णं च वातघ्नं कफनाशनम् ।
शिरआर्तिशमनं रुच्यं भूतग्रहविनाशनम् ॥ ११.१८७
बिल्वः शल्यो हृद्यगन्धः शलाटुः शाण्डिल्यः स्याच्छ्रीफलः कर्कटाह्वः ।
शैलूषः स्याच्छैवपत्रः शिवेष्टः पत्रश्रेष्ठो गन्धपत्रस्त्रिपत्त्रः ॥ ११.१८८
लक्ष्मीफलो गन्धफलो दुरारुहस्त्रिशाकपत्त्रस्त्रिशिखः शिवद्रुमः ।
सदाफलः सत्फलदः सुभूतिकः समीरसारः शिखिनेत्रसंज्ञितः ॥ ११.१८९
बिल्वस्तु मधुरो हृद्यः कषायः पित्तजित्गुरुः ।
कफज्वरातिसारघ्नो रुचिकृद्दीपनः परः ॥ ११.१९०
बिल्वमूलं त्रिदोषघ्नं मधुरं लघु वातनुत् ।
फलं तु कोमलं स्निग्धं गुरु संग्राहि दीपनम् ॥ ११.१९१
तदेव पक्वं विज्ञेयं मधुरं सरसं गुरु ।
कटुतिक्तकषायोष्णं संग्राहि च त्रिदोषजित् ॥ ११.१९२
सल्लकः सल्लकी सल्ली सुगन्धा सुरभिस्रवा ।
सुरभिर्गजभक्ष्या च सुवहा गजवल्लभा ॥ ११.१९३
गन्धमूला मुखामोदा सुश्रीका जलविक्रमा ।
हृद्या कुण्टरिका चैव प्रोक्ता त्र्यस्रफला च सा ।
छिन्नरुहा गन्धफला ज्ञेया चाष्टादशाह्वया ॥ ११.१९४
सल्लकी तिक्तमधुरा कषाया ग्राहिणी परा ।
कुष्ठास्रकफवातार्शोव्रणदोषार्तिनाशिनी ॥ ११.१९५
कतकोऽम्बुप्रसादश्च कतस्तिक्तफलस्तथा ।
रुच्यस्तु छेदनीयश्च ज्ञेयो गुडफलः स्मृतः ।
प्रोक्तः कतफलस्तिक्तमरीचश्च नवाह्वयः ॥ ११.१९६

कतकः कटुतिक्तोष्णश्चक्षुष्यः कृमिदोषनुत् ।
रुचिकृच्छूलदोषघ्नो बीजमम्बुप्रसादनम् ॥ ११.१९७
कर्कटः कार्कटः कर्कः क्षुद्रधात्री च स स्मृतः ।
क्षुद्रामलकसंज्ञश्च प्रोक्तः कर्कफलश्च षट् ॥ ११.१९८
कार्कटं तु फलं रुच्यं कषायं दीपनं परम् ।
कफपित्तहरं ग्राहि चक्षुष्यं लघु शीतलम् ॥ ११.१९९
श्लेष्मातको बहुवारः पिच्छलो द्विजकुत्सितः ।
शेलुः शीतफलः शीतः शाकटः कर्बुदारकः ।
भूतद्रुमो गन्धपुष्पः ख्यात एकादशाह्वयः ॥ ११.२००
श्लेष्मातकः कटुहिमो मधुरः कषायः स्वादुश्च पाचनकरः क्रिमिशूलहारी ।
आमास्रदोषमलरोधबहुव्रणार्तिविस्फोटशान्तिकरणः कफकारकश्च ॥ ११.२०१
भूकर्बुदारकश्चान्यः क्षुद्रश्लेष्मातकस्तथा ।
भूशेलुर्लघुशेलुश्च पिच्छलो लघुपूर्वकः ।
लघुशीतः सूक्ष्मफलो लघुभूतद्रुमश्च सः ॥ ११.२०२
भूकर्बुदारो मधुरः क्रिमिदोषविनाशनः ।
वातप्रकोपणः किंचित्सशीतः स्वर्णमारकः ॥ ११.२०३
मुष्कको मोचको मुष्को मोक्षको मुञ्चकस्तथा ।
गौलिको मेहनश्चैव क्षारवृक्षश्च पाटलिः ॥ ११.२०४
विषापहो जटालश्च वनवासी सुतीक्ष्णकः ।
श्वेतः कृष्णश्च स द्वेधा स्यात्त्रयोदशसंज्ञकः ॥ ११.२०५
मुष्ककः कटुकोऽम्लश्च रोचनः पाचनः परः ।
प्लीहगुल्मोदरार्तिघ्नो द्विविधा तुल्यगुणान्वितः ॥ ११.२०६
करमर्दः सुषेणश्च कराम्लः करमर्दकः ।
अविग्नः पाणिमर्दश्च कृष्णपाकफलो मुनिः ॥ ११.२०७
करमर्दः सतिक्ताम्लो बालो दीपनदाहकः ।
पक्वस्त्रिदोषशमनोऽरुचिघ्नो विषनाशनः ॥ ११.२०८
तेजःफलो बहुफलस्तथोक्तः शाल्मलीफलः ।
फलस्तीक्ष्णादिसंयुक्तः फलान्तस्तवकादिकः ।
स्तेयीफलो गन्धफलः कण्टवृक्षः प्रकीर्तितः ॥ ११.२०९
तेजःफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनः परः ।
वातश्लेष्मारुचिघ्नश्च बालरक्षाकरः परः ॥ ११.२१०
विकण्टको मृदुफलो ग्रन्थिलः स्वादुकण्टकः ।
गोकण्टकः काकनाशो व्याघ्रपादो घनद्रुमः ॥ ११.२११
गर्जाफलो घनफलो मेघस्तनितोद्भवश्च मुदिरफलः ।
प्रावृष्यो हास्यफलः स्तनितफलः पञ्चदशसंज्ञः ॥ ११.२१२
विकण्टकः कषायः स्यात्कटू रूक्षो रुचिप्रदः ।
दीपनः कफहारी च वस्त्ररङ्गविधायकः ॥ ११.२१३
हरीतकी हेमवती जयाभया शिवाव्यथा चेतनिका च रोहिणी ।
पथ्या प्रपथ्यापि पूतनामृता जीवप्रिया जीवनिका भिषग्वरा ॥ ११.२१४
जीवन्ती प्राणदा जीव्या कायस्था श्रेयसी च सा ।
देवी दिव्या च विजया वह्निनेत्रमिताभिधा ॥ ११.२१५
हरीतकी पञ्चरसा च रेचनी कोष्ठामयघ्नी लवणेन वर्जिता ।
रसायनी नेत्ररुजापहारिणी त्वगामयघ्नी किल योगवाहिनी ॥ ११.२१६
बीजास्थितिक्ता मधुरा तदन्तस्त्वग्भागतः सा कटुरुष्णवीर्या ।
मांसांशतश्चाम्लकषाययुक्ता हरीतकी पञ्चरसा स्मृतेयम् ॥ ११.२१७

हरीतक्यमृतोत्पन्ना सप्तभेदैरुदीरिता ।
तस्या नामानि वर्णाश्च वक्ष्याम्यथ यथाक्रमम् ॥ ११.२१८
विजया रोहिणी चैव पूतना चामृताभया ।
जीवन्ती चेतकी चेति नाम्ना सप्तविधा मता ॥ ११.२१९
अलाबुनाभिर्विजया सुवृत्ता रोहिणी मता ।
स्वल्पत्वक्पूतना ज्ञेया स्थूलमांसामृता स्मृता ॥ ११.२२०
पञ्चास्रा चाभया ज्ञेया जीवन्ती स्वर्णवर्णभाक् ।
त्र्यस्रां तु चेतकीं विद्यादित्यासां रूपलक्षणम् ॥ ११.२२१
विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना सिन्धौ स्यादथ रोहिणी तु विजया जाता प्रतिष्ठानके ।
चम्पायाममृताभया च जनिता देशे सुराष्ट्राह्वये जीवन्तीति हरीतकी निगदिता सप्तप्रभेदा बुधैः ॥ ११.२२२
सर्वप्रयोगे विजया च रोहिणी क्षतेषु लेपेषु तु पूतनोदिता ।
विरेचने स्यादमृता गुणाधिका जीवन्तिका स्यादिह जीर्णरोगजित् ॥ ११.२२३
स्याच्चेतकी सर्वरुजापहारिका नेत्रामयघ्नीमभयां वदन्ति ।
इत्थं यथायोगमियं प्रयोजिता ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥ ११.२२४
चेतकी च धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्विरिच्यते वेगात्तत्प्रभावान्न संशयः ॥ ११.२२५
सप्तानामपि जातीनां प्रधानं विजया स्मृता ।
सुखप्रयोगसुलभा सर्वव्याधिषु शस्यते ॥ ११.२२६
क्षिप्ताप्सु निमज्जति या सा ज्ञेया गुणवती भिषग्वर्यैः ।
यस्या यस्या भूयो निमज्जनं सा गुणाढ्या स्यात् ॥ ११.२२७
हरते प्रसभं व्याधीन् भूयस्तरति यद्वपुः ।
हरीतकी तु सा प्रोक्ता तत्र कीर्दीप्तिवाचकः ॥ ११.२२८
हरीतकी तु तृष्णायां हनुस्तम्भे गलग्रहे ।
शोषे नवज्वरे जीर्णे गुर्विण्यां नैव शस्यते ॥ ११.२२९
विभीतकस्तैलफलो भूतावासः कलिद्रुमः ।
संवर्तकस्तु वासन्तः कल्किवृक्षो वहेडकः ॥ ११.२३०
हार्यः कर्षफलः कल्किर्धर्मघ्नोऽक्षोऽनिलघ्नकः ।
बहुवीर्यश्च कासघ्नः स प्रोक्तः षोडशाह्वयः ॥ ११.२३१
विभीतकः कटुस्तिक्तः कषायोष्णः कफापहः ।
चक्षुष्यः पलितघ्नश्च विपाके मधुरो लघुः ॥ ११.२३२
पूगस्तु पूगवृक्षश्च क्रमुको दीर्घपादपः ।
वल्कतरुर्दृढवल्कश्चिक्कणश्च मुनिर्मतः ॥ ११.२३३
पूगवृक्षस्य निर्यासो हिमः संमोहनो गुरुः ।
विपाके सोष्णकक्षारः साम्लो वातघ्नपित्तलः ॥ ११.२३४
पूगं तु चिक्कणी चिक्का चिक्कणं श्लक्ष्णकं तथा ।
उद्वेगं क्रमुकफलं ज्ञेयं पूगफलं वसु ॥ ११.२३५
सेरी च मधुरा रुच्या कषायाम्ला कटुस्तथा ।
पथ्या च कफवातघ्नी सारिका मुखदोषनुत् ॥ ११.२३६
तैल्वनं मधुरं रुच्यं कण्ठशुद्धिकरं लघु ।
त्रिदोषशमनं दीप्यं रसालं पाचनं समम् ॥ ११.२३७
गौल्यं गुहागरं श्लक्ष्णं कषायं कटु पाचनम् ।
विष्टम्भजठराध्मानहरणं द्रावकं लघु ॥ ११.२३८
घोण्टा कटुकषायोष्णा कठिना रुचिकारिणी ।
मलविष्टम्भशमनी पित्तहृद्दीपनी च सा ॥ ११.२३९
पूगीफलं चेउलसंज्ञकं यत्तत्कोङ्कणेषु प्रथितं सुगन्धि ।

श्लेष्मापहं दीपनपाचनं च बलप्रदं पुष्टिकरं रसाढ्यम् ॥ ११.२४०
यत्कोङ्कणे वल्लिगुलाभिधानकं ग्रामोद्भवं पूगफलं त्रिदोषनुत् ।
आमापहं रोचनरुच्यपाचनं विष्टम्भतुन्दामयहारि दीपनम् ॥ ११.२४१
चन्द्रापुरोद्भवं पूगं कफघ्नं मलशोधनम् ।
कटु स्वादु कषायं च रुच्यं दीपनपाचनम् ।
आन्ध्रदेशोद्भवं पूगं कषायं मधुरं रसे ।
वातजिद्वक्त्रजाड्यघ्नमीषदम्लं कफापहम् ॥ ११.२४२
पूगं सम्मोहकृत्सर्वं कषायं स्वादु रेचनम् ।
त्रिदोषशमनं रुच्यं वक्त्रक्लेदमलापहम् ॥ ११.२४३
आमं पूगं कषायं मुखमलशमनं कण्ठशुद्धिं विधत्ते रक्तामश्लेष्मपित्तप्रशमनमुदराध्मानहारं सरं च ।
शुष्कं कण्ठामयघ्नं रुचिकरमुदितं पाचनं रेचनं स्यात्तत्पर्णेनायुतं चेत्झटिति वितनुते पाण्डुवातं च शोषम् ॥ ११.२४४
अथ भवति नागवल्ली ताम्बूली फणिलता च सप्तशिरा ।
पर्णलता फणिवल्ली भुजगलता भक्ष्यपत्री च ॥ ११.२४५
नागवल्ली कटुस्तीक्ष्णा तिक्ता पीनसवातजित् ।
कफकासहरा रुच्या दाहकृद्दीपनी परा ॥ ११.२४६
सा श्रीवाट्यम्लादिवाटादिनानाग्रामस्तोमस्थानभेदाद्विभिन्ना ।
एकाप्येषा देशमृत्स्नाविशेषान्नानाकारं याति काये गुणे च ॥ ११.२४७
श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा ।
रसाढ्या सुरसा रुच्या विपाके शिशिरा स्मृता ॥ ११.२४८
स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णा मुखपाककर्त्री ।
विदाहपित्तास्रविकोपनी च विष्टम्भदा वातनिबर्हणी च ॥ ११.२४९
सतसा मधुरा तीक्ष्णा कटुरुष्णा च पाचनी ।
गुल्मोदराध्मानहरा रुचिकृद्दीपनी परा ॥ ११.२५०
गुहागरे सप्तशिरा प्रसिद्धा सापर्णजूर्णातिरसातिरुच्या ।
सुगन्धि तीक्ष्णा मधुरातिहृद्या सन्दीपनी पुंस्त्वकरातिबल्या ॥ ११.२५१
नाम्नान्याम्लसरा सुतीक्ष्णमधुरा रुच्या हिमा दाहनुत्पित्तोद्रेकहरा सुदीपनकरी बल्या मुखामोदिनी ।
स्त्रीसौभाग्यविवर्धनी मदकरी राज्ञां सदा वल्लभा गुल्माध्मानविबन्धजिच्च कथिता सा मालवे तु स्थिता ॥ ११.२५२
अन्ध्रे पटुलिका नाम कषायोष्णा कटुस्तथा ।
मलापकर्षा कण्ठस्य पित्तकृद्वातनाशनी ॥ ११.२५३
हवेसणीया कटुस्तीक्ष्णा हृद्या दीर्घदला च सा ।
कफवातहरा रुच्या कटुर्दीपनपाचनी ॥ ११.२५४
सद्यस्त्रोटितभक्षितं मुखरुजाजाड्यावहं दोषकृत्दाहारोचकरक्तदायि मलकृद्विष्टम्भि वान्तिप्रदम् ।
यद्भूयो जलपानपोषितरसं तच्चेच्चिरात्त्रोटितं ताम्बूलीदलमुत्तमं च रुचिकृद्वर्ण्यं त्रिदोषार्तिनुत् ॥ ११.२५५
कृष्णं पर्णं तिक्तमुष्णं कषायं धत्ते दाहं वक्त्रजाद्यं मलं च ।
शुभ्रं पर्णं श्लेष्मवातामयघ्नं पथ्यं रुच्यं दीपनं पाचनं च ॥ ११.२५६
शिरा पर्णस्य शैथिल्यं कुर्यात्तस्यास्रहृद्रसः ।
शीर्णं त्वग्दोषदं तस्य भक्षिते च शितं सदा ॥ ११.२५७
अनिधाय मुखे पर्णं पूगं खादात यो नरः ।
मतिभ्रंशो दरिद्रः स्यादन्ते स्मरति नो हरिम् ॥ ११.२५८
पर्णाधिक्ये दीपनी रङ्गदात्री पूगाधिक्ये रूक्षदा कृच्छ्रदात्री ।
साराधिक्ये खादिरे शोषदात्री चूर्णाधिक्ये पित्तकृत्पूतिगन्धा ॥ ११.२५९
चूर्णं चार्जुनवृक्षजं कफहरं गुल्मघ्नमर्काह्वयं शोफघ्नं कुटजं करञ्जजनितं वातापहं रुच्यदम् ।
पित्तघ्नं जलजं बलाग्निरुचिदं शैलाह्वयं पित्तदं स्फाटिक्यं दृढदन्तपङ्क्तिजननं शुक्त्यादिजं रूक्षदम् ॥ ११.२६०
इत्थं नानाफलतरुलतानामतत्तद्गुणादिव्यक्ताख्यानप्रगुणरचनाचारुसौरभ्यसारम् ।
वर्गं वक्त्राम्बुरुहवलभीलास्यलीलारसालं विद्यावैद्यः खलु सफलयेदेतमाम्नायभूम्ना ॥ ११.२६१

यान्युपभुञ्जानानां स भवति संसारपादपः सफलः ।
तेषामेष फलानां वर्गः फलवर्ग इति कथितः ॥ ११.२६२
यस्याजस्रविकस्वरामलयशःप्राग्भारपुष्पोद्गमः साश्चर्यं विबुधेप्सितानि फलति श्रीमान् करः स्वर्द्रुमः ।

श्रीखण्डं शबरं पीतं पत्राङ्गं रक्तचन्दनम् ।
बर्बरं हरिगन्धं च चन्दनं सप्तधा स्मृतम् ॥ १२.१
देवदारु द्विधा प्रोक्तं चीडा सप्तच्छदस्तथा ।
सरलः कुङ्कुमे कङ्गुः कस्तूरी रोचना तथा ॥ १२.२
कर्पूरौ स्याज्जवादिस्तु नन्दी च जातिपत्रिका ।
जातीफलं च कक्कोलं लवङ्गं स्वादुरुच्यते ॥ १२.३
अगर्व्यश्च त्रिधा मांसी तुरुष्को गुग्गुलुस्त्रिधा ।
रालः कुन्दुरुकः कुष्ठं सारिवा तु द्विधा नखौ ॥ १२.४
स्पृक्का स्थौणेयकं चैव मुरा शैलेयचोरकः ।
पद्मप्रपौण्डरीके च लामज्जं रोहिणी द्विधा ।
श्रीवेष्टोशीरनलिका मुनिबाणमिताह्वयाः ॥ १२.५
श्रीखण्डं चन्दनं प्रोक्तं महार्हं श्वेतचन्दनम् ।
गोशीर्षं तिलपर्णं च मङ्गल्यं मलयोद्भवम् ॥ १२.६
गन्धराजं सुगन्धं च सर्पावासं च शीतलम् ।
गन्धाढ्यं गन्धसारं च भद्रश्रीर्भोगिवल्लभम् ।
शीतगन्धो मलयजं पावनं चाङ्कभूह्वयम् ॥ १२.७
श्रीखण्डं कटुतिक्तशीतलगुणं स्वादे कषायं कियत्पित्तभ्रान्तिवमिज्वरक्रिमितृषासंतापशान्तिप्रदम् ।
वृष्यं वक्त्ररुजापहं प्रतनुते कान्तिं तनोर्देहिनां लिप्तं सुप्तमनोजसिन्धुरमदारम्भादिसंरम्भदम् ॥ १२.८
श्रेष्ठं कोटरकर्परोपकलितं सुग्रन्थि सद्गौरवं छेदे रक्तमयं तथा च विमलं पीतं च यद्घर्षणे ।
स्वादे तिक्तकटुः सुगन्धबहुलं शीतं यदल्पं गुणे क्षीणं चार्धगुणान्वितं तु कथितं तच्चन्दनं मध्यमम् ॥ १२.९
चन्दनं द्विविधं प्रोक्तं बेट्टसुक्वडिसंज्ञकम् ।
बेट्टं तु सार्द्रविच्छेदं स्वयं शुष्कं तु सुक्वडि ॥ १२.१०
मलयाद्रिसमीपस्थाः पर्वता बेट्टसंज्ञकाः ।
तज्जातं चन्दनं यत्तु बेट्टवाच्यं क्वचिन्मते ॥ १२.११
बेट्टचन्दनमतीव शीतलं दाहपित्तशमनं ज्वरापहम् ।
छर्दिमोहतृषिकुष्ठतैमिरोत्कासरक्तशमनं च तिक्तकम् ॥ १२.१२
सुक्वडिचन्दनं तिक्तं कृच्छ्रपित्तास्रदाहनुत् ।
शैत्यसुगन्धदं चार्द्रं शुष्कं लेपे तदन्यथा ॥ १२.१३
नातिपीतं कैरातं शबरं चन्दनं सुगन्धम् ।
वन्यं च गन्धकाष्ठं किरातकान्तं च शैलगन्धं च ॥ १२.१४
कैरातमुष्णं कटुशीतलं च श्लेष्मानिलघ्नं श्रमपित्तहारि ।
विस्फोटपामादिकनाशनं च तृषापहं तापविमोहनाशि ॥ १२.१५
पीतगन्धं तु कालीयं पीतकं माधवप्रियम् ।
कालीयकं पीतकाष्ठं बर्बरं पीतचन्दनम् ॥ १२.१६
पीतं च शीतलं तिक्तं कुष्ठश्लेष्मानिलापहम् ।
कण्डूविचर्चिकादद्रुकृमिहृत्कान्तिदं परम् ॥ १२.१७
पत्तङ्गं चैव पत्राङ्गं रक्तकाष्ठं सुरङ्गदम् ।
पत्राढ्यं पट्टरागं च भार्यावृक्षश्च रक्तकः ॥ १२.१८
लोहितं रङ्गकाष्ठं च रागकाष्ठं कुचन्दनम् ।
पट्टरञ्जनकं चैव सुरङ्गं च चतुर्दश ॥ १२.१९
पत्राङ्गं कटुकं रूक्षमम्लं शीतं तु गौल्यकम् ।
वातपित्तज्वरघ्नं च विस्फोटोन्मादभूतहृत् ॥ १२.२०
रक्तचन्दनमिदं च लोहितं शोणितं च हरिचन्दनं हिमम् ।
रक्तसारमथ ताम्रसारकं क्षुद्रचन्दनमथार्कचन्दनम् ॥ १२.२१

रक्तचन्दनमतीव शीतलं तिक्तमीक्षणगदास्रदोषनुत् ।
भूतपित्तकफकाससज्वरभ्रान्तिजन्तुवमिजित्तृषापहम् ॥ १२.२२
बर्बरोत्थं बर्बरकं श्वेतबर्बरकं तथा ।
शीतं सुगन्धि पित्तारि सुरभि चेति सप्तधा ॥ १२.२३
बर्बरं शीतलं तिक्तं कफमारुतपित्तजित् ।
कुष्ठकण्डूव्रणान् हन्ति विशेषाद्रक्तदोषजित् ॥ १२.२४
हरिचन्दनं सुरार्हं हरिगन्धमिन्द्रचन्दनं दिव्यम् ।
दिविजं च महागन्धं नन्दनजं लोहितं च नवसंज्ञम् ॥ १२.२५
हरिचन्दनं तु दिव्यं तिक्तहिमं तदिह दुर्लभं मनुजैः ।
पित्ताटोपविलोपि चन्दनवच्छ्रमशोषमान्द्यतापहरम् ॥ १२.२६
चन्दनानि समानानि रसतो वीर्यतस्तथा ।
भिद्यन्ते किंतु गन्धेन तत्राद्यं गुणवत्तरम् ॥ १२.२७
देवदारु सुरदारु दारुकं स्निग्धदारुरमरादिदारु च ।
भद्रदारु शिवदारु शाम्भवं भूतहारि भवदारु रुद्रवत् ॥ १२.२८
स्निग्धदारु स्मृतं तिक्तं स्निग्धोष्णं श्लेष्मवातजित् ।
आमदोषविबन्धार्शःप्रमेहज्वरनाशनम् ॥ १२.२९
देवकाष्ठं पूतिकाष्ठं भद्रकाष्ठं सुकाष्ठकम् ।
अस्निग्धदारुकं चैव काष्ठदारु षडाह्वयम् ॥ १२.३०
देवकाष्ठं तु तिक्तोष्णं रूक्षं श्लेष्मानिलापहम् ।
भूतदोषापहं धत्ते लिप्तमङ्गेषु कालिकम् ॥ १२.३१
देवदारु द्विधा ज्ञेयं तत्राद्यं स्निग्धदारुकम् ।
द्वितीयं काष्ठदारु स्याद्द्वयोर्नामान्यभेदतः ॥ १२.३२
चीडा च दारुगन्धा गन्धवधूर्गन्धमादनी तरुणी ।
तारा च भूतमारी मङ्गल्या तु कपाटिनी ग्रहभीतिजित् ।
चीडा कटूष्णा कासघ्नी कफजिद्दीपनी परा ।
अत्यन्तसेविता सा तु पित्तदोषभ्रमापहा ॥ १२.३३
सप्तपर्णः पत्रवर्णः शुक्तिपर्णः सुपर्णकः ।
सप्तच्छदो गुच्छपुष्पोऽयुग्मपर्णो मुनिच्छदः ॥ १२.३४
बृहत्त्वग्बहुपर्णश्च तथा शाल्मलिपत्रकः ।
मदगन्धो गन्धिपर्णो विज्ञेयो वह्निभूमितः ॥ १२.३५
सप्तपर्णस्तु तिक्तोष्णस्त्रिदोषघ्नश्च दीपनः ।
मदगन्धो निरुन्द्धेऽयं व्रणरक्तामयक्रिमीन् ॥ १२.३६
सरलस्तु पूतिकाष्ठं तुम्बी पीतद्रुरुत्थितो दीपतरुः ।
स स्निग्धदारुसंज्ञः स्निग्धो मारीचपत्रको नवधा ॥ १२.३७
सरलः कटुतिक्तोष्णः कफवातविनाशनः ।
त्वग्दोषशोफकण्डूतिव्रणघ्नः कोष्ठशुद्धिदः ॥ १२.३८
ज्ञेयं कुङ्कुममग्निसेखरमसृक्काश्मीरजं पीतकं काश्मीरं रुधिरं वरं च पिशुनं रक्तं शठं शोणितम् ।
वाह्लीकं घुसृणं वरेण्यमरुणं कालेयकं जागुडं कान्तं वह्निशिखं च केसरवरं गौरं कराक्षीरितम् ॥ १२.३९
कुङ्कुमं सुरभि तिक्तकटूष्णं कासवातकफकण्ठरुजाघ्नम् ।
मूर्धशूलविषदोषनाशनं रोचनं च तनुकान्तिकारकम् ॥ १२.४०
तृणकुङ्कुमं तृणास्रं गन्धितृणं शोणितं च तृणपुष्पम् ।
गन्धाधिकं तृणोत्थं तृणगौरं लोहितं च नवसंज्ञम् ॥ १२.४१
तृणकुङ्कुमं कटूष्णं कफमारुतशोफनुत् ।
कण्डूतिपामाकुष्ठामदोषघ्नं भास्करं परम् ॥ १२.४२
प्रियङ्गुः फलिनी श्यामा प्रियवल्ली फलप्रिया ।

गौरी गोवन्दनी वृत्ता कारम्भा कङ्गु कङ्गुनी ॥ १२.४३
भङ्गुरा गौरवल्ली च सुभगा पर्णभेदिनी ।
शुभा पीता च मङ्गल्या श्रेयसी चाङ्कभूमिता ॥ १२.४४
प्रियङ्गुः शीतला तिक्ता दाहपित्तास्रदोषजित् ।
वान्तिभ्रान्तिज्वरहरा वक्त्रजाड्यविनाशनी ॥ १२.४५
कस्तूरी मृगनाभिस्तु मदनी गन्धचेलिका ।
वेधमुख्या च मार्जारी सुभगा बहुगन्धदा ॥ १२.४६
सहस्रवेधी श्यामा स्यात्कामानन्दा मृगाण्डजा ।
कुरङ्गनाभी ललिता मदो मृगमदस्तथा ।
श्यामली काममोदी च विज्ञेयाष्टादशाह्वया ॥ १२.४७
कस्तूरी सुरभिस्तिक्ता चक्षुष्या मुखरोगजित् ।
किलासकफदौर्गन्ध्यवातालक्ष्मीमलापहा ॥ १२.४८
कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात् ।
नेपालेऽपि च काश्मीरे कामरूपे च जायते ॥ १२.४९
साप्येका खरिका ततश्च तिलका ज्ञेया कुलित्थापरा पिण्डान्यापि च नायिकेति च परा या पञ्चभेदाभिधा ।
सा शुद्धा मृगनाभितः क्रमवशादेषा क्षितीशोचिता पक्षत्यादिदिनत्रयेषु जनिता कस्तूरिका स्तूयते ॥ १२.५०
चूर्णाकृतिस्तु खरिका तिलका तिलाभा कौलत्थबीजसदृशी च कुलित्थका च ।
स्थूला ततः कियदियं किल पिण्डिकाख्या तस्याश्च किंचिदधिका यदि नायिका सा ॥ १२.५१
स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते लाघवं तोलने च ।
याप्सु न्यस्ता नैव वैवर्ण्यमीयात्कस्तूरी सा राजभोग्याप्रशस्ता ॥ १२.५२
या गन्धं केतकीनामपहरति मदं सिन्धुराणां च वर्णे स्वादे तिक्ता कटुर्वा लघुरथ तुलिता मर्दिता चिक्कणा स्यात् ।
दाहं या नैति वह्नौ शिमिशिमिति चिरं चर्मगन्धा हुताशे सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते राजभोग्या ॥ १२.५३
बाले जरति च हरिणे क्षीणे रोगिणि च मन्दगन्धयुता ।
कामातुरे च तरुणे कस्तूरी बहुलपरिमला भवति ॥ १२.५४
या स्निग्धा धूमगन्धा वहति विनिहिता पीततां पाथसोऽन्तर्निःशेषं या निविष्टा भवति हुतवहे भस्मसादेव सद्यः ।
या च न्यस्ता तुलायां कलयति गुरुतां मर्दिता रूक्षतां च ज्ञेया कस्तूरिकेयं खलु कृतमतिभिः कृत्रिमा नैव सेव्या ॥ १२.५५
शुद्धो वा मलिनोऽस्तु वा मृगमदः किं जातमेतावता कोऽप्यस्यानवधिश्चमत्कृतिनिधिः सौरभ्यमेको गुणः ।
येनासौ स्मरमण्डनैकवसतिर्भाले कपोले गले दोर्मूले कुचमण्डले च कुरुते सङ्गं कुरङ्गीदृशाम् ॥ १२.५६
गोरोचना रुचिः शोभा रुचिरा शोभना शुभा ।
गौरी च रोचना पिङ्गा मङ्गल्या पिङ्गला शिवा ॥ १२.५७
पीता च गौतमी गव्या वन्दनीया च काञ्चनी ।
मेध्या मनोरमा श्यामा रामा भूमिकराह्वया ॥ १२.५८
गोरोचना च शिशिरा विषदोषहन्त्री रुच्या च पाचनकरी क्रिमिकुष्ठहन्त्री ।
भूतग्रहोपशमनं कुरुते च पथ्या शृङ्गारमङ्गलकरी जनमोहिनी च ॥ १२.५९
कर्पूरो घनसारकः सितकरः शीतः शशाङ्कः शिला शीतांशुर्हिमवालुका हिमकरः शीतप्रभः शाम्भवः ।
शुभ्रांशुः स्फटिकाभ्रसारमिहिकाताराभ्रचन्द्रेन्दवश्चन्द्रालोकतुषारगौरकुमुदान्येकादशाह्वा द्विशः ॥ १२.६०
पोतासो भीमसेनस्तदनु सितकरः शंकरावाससंज्ञः प्रांशुः पिञ्जोऽब्दसारस्तदनु हिमयुता वालुका जूटिका च ।
पश्चादस्यास्तुषारस्तदुपरि सहिमः शीतलः पक्विकान्या कर्पूरस्येति भेदा गुणरसमहसां वैद्यदृश्येन दृश्याः ॥ १२.६१
कर्पूरो नूतनस्तिक्तः स्निग्धश्चोष्णोऽस्रदाहदः ।
चिरस्थो दाहदोषघ्नः स धौतः शुभकृत्परः ॥ १२.६२
शिरो मध्यं तलं चेति कर्पूरस्त्रिविधः स्मृतः ।
शिरः स्तम्भाग्रसंजातं मध्यं पर्णतले तलम् ॥ १२.६३
भास्वद्विशदपुलकं शिरोजातं तु मध्यमम् ।
सामान्यपुलकं स्वच्छं तले चूर्णं तु गौरकम् ॥ १२.६४
स्तम्भगर्भस्थितं श्रेष्ठं स्तम्भबाह्ये च मध्यमम् ।

स्वच्छमीषथरिद्राभं शुभ्रं तन्मध्यमं स्मृतं सुदृढं शुभ्ररूक्षं च पुलकं बाह्यजं वदेत् ॥ १२.६५
स्वच्छं भृङ्गारपत्रं लघुतरविशदं तोलने तिक्तकं चेत्स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदसौरभ्यदायि ।
निःस्नेहं दार्ढ्यपत्रं शुभतरमिति चेत्राजयोग्यं प्रशस्तं कर्पूरं चान्यथा चेद्बहुतरमशने स्फोटदायि व्रणाय ॥ १२.६६
चीनकश्चीनकर्पूरः कृत्रिमो धवलः पटुः ।
मेघसारस्तुषारश्च द्वीपकर्पूरजः स्मृतः ॥ १२.६७
चीनकः कटुतिक्तोष्ण ईषच्छीतः कफापहः ।
कण्ठदोषहरी मेध्यः पाचनः क्रिमिनाशनः ॥ १२.६८
जवादि गन्धराजं स्यात्कृत्रिमं मृगचर्मजम् ।
समूहगन्धं गन्धाढ्यं स्निग्धं साम्राणिकर्दमम् ।
सुगन्धं तैलनिर्यासं कुटामोदं दशाभिधम् ॥ १२.६९
सौगन्धिकं जवादि स्यात्स्निग्धं चोष्णं सुखावहम् ।
वाते हितं च राज्ञां च मोहनाह्लादकारणम् ॥ १२.७०
जवादि नीलं सस्निग्धमीषत्पीतं सुगन्धदम् ।
आतपे बहुलामोदं राज्ञां योग्यं न चान्यथा ॥ १२.७१
तूणीकस्तूणिकस्तूणी पीतकः कच्छपस्तथा ।
नन्दी कुरकः कान्तो नन्दीवृक्षो नवाह्वयः ॥ १२.७२
वृक्षः कटुस्तिक्तः शीतस्तिक्तास्रदाहजित् ।
शिरोऽर्तिश्वेतकुष्ठघ्नः सुगन्धिः पुष्टिवीर्यदः ॥ १२.७३
जातीपत्त्री जातिकोशः सुमनःपत्त्रिकापि सा ।
मालतीपत्त्रिका पञ्चनाम्नी सौमनसायिनी ॥ १२.७४
जातीपत्री कटुस्तिक्ता सुरभिः कफनाशनी ।
वक्त्रवैशद्यजननी जाड्यदोषनिकृन्तनी ॥ १२.७५
जातीफलं जातिशस्यं शालूकं मालतीफलम् ।
मज्जासारं जातिसारं पुटं च सुमनःफलम् ॥ १२.७६
जातीफलं कषायोष्णं कटु कण्ठामयार्तिजित् ।
वातातिसारमेहघ्नं लघु वृष्यं च दीपनम् ॥ १२.७७
कक्कोलकं कृतफलं कोलकं कटुकं फलम् ।
विद्वेष्यं स्थूलमरिचं कर्कोलं माधवोचितम् ।
कङ्कोलं कट्फलं प्रोक्तं मारीचं रुद्रसंमितम् ॥ १२.७८
कक्कोलं कटु तिक्तोष्णं वक्त्रजाड्यहरं परम् ।
दीपनं पाचनं रुच्यं कफवातनिकृन्तनम् ॥ १२.७९
लवंगकलिका दिव्यं लवंगं शेखरं लवम् ।
श्रीपुष्पं देवकुसुमं रुचिरं वारिसम्भवम् ॥ १२.८०
तीक्ष्णपुष्पं तु भृङ्गारं गीर्वाणकुसुमं तथा ।
पुष्पकं चन्दनादि स्यात्ज्ञेयं त्रयोदशाह्वयम् ॥ १२.८१
लवंगं शीतलं तिक्तं चक्षुष्यं भक्तरोचनम् ।
वातपित्तकफघ्नं च तीक्ष्णं मूर्धरुजापहम् ॥ १२.८२
लवंगं सोष्णकं तीक्ष्णं विपाके मधुरं हिमम् ।
वातपित्तकफामघ्नं क्षयकासास्रदोषनुत् ॥ १२.८३
स्वादुस्त्वगरुसारः स्यात्सुधूम्यो गन्धधूमजः ।
स्वादुः कटुकषायोष्णः सधूमामोदवातजित् ॥ १२.८४
कृष्णागरु स्यादगरु शृङ्गारं विश्वरूपकम् ।
शीर्षं कालागरु केश्यं वसुकं कृष्णकाष्ठकम् ।
धूपार्हं वल्लरं गन्धराजकं द्वादशाह्वयम् ॥ १२.८५
कृष्णागरु कटूष्णं च तिक्तं लेपे च शीतलम् ।

पाने पित्तहरं किंचित्त्रिदोषघ्नमुदाहृतम् ॥ १२.८६
अन्यागरु पीतकं च लोहं वर्णप्रसादनम् ।
अनार्यकमसारं च कृमिजग्धं च काष्ठकम् ॥ १२.८७
काष्ठागरु कटूष्णं च लेपे रूक्षं कफापहम् ॥ १२.८८
दाहागरु दहनागरु दाहककाष्ठं च वह्निकाष्ठं च ।
धूपागरु तैलागरु पुरं च पुरमथनवल्लभं चैव ॥ १२.८९
दाहागरु कटुकोष्णं केशानां वर्धनं च वर्ण्यं च ।
अपनयति केशदोषानातनुते संततं च सौगन्ध्यम् ॥ १२.९०
मङ्गल्या मल्लिका गन्धमङ्गलागरुवाचका ।
मङ्गल्या गुरुशिशिरा गन्धाढ्या योगवाहिका ॥ १२.९१
मांसी तु जटिला पेशी क्रव्यादी पिशिता मिशी ।
केशिनी च जटा हिंस्रा जटामांसी च मांसिनी ॥ १२.९२
जटाला नलदा मेषी तामसी चक्रवर्तिनी ।
माता भूतजटा चैव जननी च जटावती ।
मृगभक्षापि चेत्येता एकविंशतिधाभिधाः ॥ १२.९३
सुरभिस्तु जटामांसी कषाया कटुशीतला ।
कफहृद्भूतदाहघ्नी पित्तघ्नी मोदकान्तिकृत् ॥ १२.९४
द्वितीया गन्धमांसी च केशी भूतजटा स्मृता ।
पिशाची पूतना चैव भूतकेशी च लोमशा ।
जटाला लघुमांसी च ख्याता चाङ्कमिताह्वया ॥ १२.९५
गन्धमांसी तिक्तशीता कफकण्ठामयापहा ।
रक्तपित्तहरा वर्ण्या विषभूतज्वरापहा ॥ १२.९६
आकाशमांसी सूक्ष्मान्या निरालम्बा खसम्भवा ।
सेवाली सूक्ष्मपत्त्री च गौरी पर्वतवासिनी ॥ १२.९७
अभ्रमांसी हिमा शोफव्रणनाडीरुजापहा ।
लूतागर्दभजालादिहारिणी वर्णकारिणी ॥ १२.९८
तुरुष्को यावनो धूम्रो धूम्रवर्णः सुगन्धिकः ।
सिह्लकः सिह्लसारश्च पीतसारः कपिस्तथा ॥ १२.९९
पिण्याकः कपिजः कल्कः पिण्डितः पिण्डतैलकः ।
करेवरः कृत्रिमको लेपनो मुनिभूह्वयः ॥ १२.१००
तुरुष्कः सुरभिस्तिक्तः कटुस्निग्धश्च कुष्ठजित् ।
कफपित्ताश्मरीमूत्राघातभूतज्वरार्तिजित् ॥ १२.१०१
गुग्गुलुर्यवनद्विष्टो भवाभीष्टो निशाटकः ।
जटालः कालनिर्यासः पूरो भूतहरः शिवः ॥ १२.१०२
कौशिकः शाम्भवो दुर्गो यातुघ्नो महिषाक्षकः ।
देवेष्टो मरुदेश्योऽपि रक्षोहा रूक्षगन्धकः ।
दिव्यस्तु महिषाक्षश्च नामान्येतानि विंशतिः ॥ १२.१०३
गुग्गुलुः कटुतिक्तोष्णः कफमारुतकासजित् ।
क्रिमिवातोदरप्लीहशोफार्शोघ्नो रसायनः ॥ १२.१०४
गन्धराजः स्वर्णकणः सुवर्णः कणगुग्गुलुः ।
कनको वंशपोतश्च सुरसश्च पलंकषः ॥ १२.१०५
कणगुग्गुलुः कटूष्णः सुरभिर्वातनाशनः ।
शूलगुल्मोदराध्मानकफघ्नश्च रसायनः ॥ १२.१०६
गुग्गुलुश्च तृतीयोऽन्यो भूमिजो दैत्यमेदजः ।
दुर्गाह्लाद इडाजात आशादिरिपुसम्भवः ।

मज्जाजो मदजश्चैव महिषासुरसम्भवः ॥ १२.१०७
गुग्गुलुर्भूमिजस्तिक्तः कटूष्णः कफवातजित् ।
उमाप्रियश्च भूतघ्नो मेध्यः सौरभ्यदः सदा ॥ १२.१०८
रालः सर्जरसश्चैव शालः कनकलोद्भवः ।
ललनः शालनिर्यासो देवेष्टः शीतलस्तथा ॥ १२.१०९
बहुरूपः शालरसः सर्जनिर्यासकस्तथा ।
सुरभिः सुरधूपश्च यक्षधूपोऽग्निवल्लभः ।
कालः कललजः प्रोक्तो नाम्ना सप्तदशाङ्कितः ॥ १२.११०
रालस्तु शिशिरः स्निग्धः कषायस्तिक्तसंग्रहः ।
वातपित्तहरः स्फोटकण्डूतिव्रणनाशनः ।
कुन्दुरुकः सौराष्ट्रः शिखरी कुन्दुरुककुन्दुकस्तीक्ष्णः ।
गोपुरको बहुगन्धः पालिन्दो भीषणश्च दशसंज्ञः ॥ १२.१११
कुन्दुरुर्मधुरस्तिक्तः कफपित्तार्तिदाहनुत् ।
पाने लेपे च शिशिरः प्रदरामयशान्तिकृत् ॥ १२.११२
कुष्ठं रुजागदो व्याधिरामयं पारिभद्रकम् ।
रामं वानीरजं वाप्यं ज्ञेयं त्वग्दोषमुत्पलम् ।
कुत्सं च पाटवं चैव पद्मकं मनुसंज्ञकम् ॥ १२.११३
कुष्ठं कटूष्णं तिक्तं स्यात्कफमारुतकुष्ठजित् ।
विसर्पविषकण्डूतिखर्जूदद्रुघ्नकान्तिकृत् ॥ १२.११४
सारिवा शारदा गोपा गोपवल्ली प्रतानिका ।
गोपकन्या लतास्फोता नवाह्वा काष्ठसारिवा ॥ १२.११५
सारिवान्या कृष्णमूली कृष्णा चन्दनसारिवा ।
भद्रा चन्दनगोपा तु चन्दना कृष्णवल्ल्यपि ॥ १२.११६
सारिवे द्वे तु मधुरे कफवातास्रनाशने ।
कुष्ठकण्डूज्वरहरे मेहदुर्गन्धिनाशने ॥ १२.११७
नखः कररुहः शिल्पी शुक्तिः शङ्खः खुरः शफः ।
वलः कोशी च करजो हनुर्नागहनुस्तथा ॥ १२.११८
पाणिजो बदरीपत्रो धूप्यः पण्यविलासिनी ।
संधिनालः पाणिरुहः स्यादष्टादशसंज्ञकः ॥ १२.११९
नखः स्यादुष्णकटुको विषं हन्ति प्रयोजितः ।
कुष्ठकण्डूव्रणघ्नश्च भूतविद्रावणः परः ॥ १२.१२०
नखोऽन्यः स्याद्बलनखः कूटस्थश्चक्रनायकः ।
चक्री चक्रनखस्त्र्यस्रः कालो व्याघ्रनखः स्मृतः ॥ १२.१२१
द्वीपिनखो व्यालनखः खपुटो व्यालपाणिजः ।
व्यालायुधो व्यालबलो व्यालखड्गश्च षोडश ॥ १२.१२२
व्यालनखस्तु तिक्तोष्णः कषायः कफवातजित् ।
कुष्ठकण्डूव्रणघ्नश्च वर्ण्यः सौगन्ध्यदः परः ॥ १२.१२३
स्पृक्का च देवी पिशुना वधूश्च कोटिर्मनुर्ब्राह्मणिका सुगन्धा ।
समुद्रकान्ता कुटिला तथा च मालालिका भूतलिका च लघ्वी ॥ १२.१२४
निर्माल्या सुकुमारा च मालाली देवपुत्रिका ।
पञ्चगुप्तिरसृक्प्रोक्ता नखपुष्पी च विंशतिः ॥ १२.१२५
स्पृक्का कटुकषाया च तिक्ता श्लेष्मार्तिकासजित् ।
श्लेष्ममेहाश्मरीकृच्छ्रनाशनी च सुगन्धदा ॥ १२.१२६
स्थौणेयकं बर्हिशिखं शुकच्छदं मयूरचूडं शुकपुच्छकं तथा ।
विकीर्णरोमापि च कीरवर्णकं विकर्णसंज्ञं हरितं नवाह्वयम् ॥ १२.१२७

स्थौणेयं कफवातघ्नं सुगन्धि कटुतिक्तकम् ।
पित्तप्रकोपशमनं बलपुष्टिविवर्धनम् ॥ १२.१२८
मुरा गन्धवती दैत्या गन्धाढ्या गन्धमादनी ।
सुरभिर्भूरिगन्धा च कुटी गन्धकुटी तथा ॥ १२.१२९
मुरा तिक्ता कटुः शीता कषाया कफपित्तहृत् ।
श्वासासृग्विषदाहार्तिभ्रममूर्छातृषापहा ॥ १२.१३०
शैलेयं शिलजं वृद्धं शिलापुष्पं शिलोद्भवम् ।
स्थविरं पलितं जीर्णं तथा कालानुसार्यकम् ॥ १२.१३१
शिलोत्थं च शिलादद्रुः शैलजं गिरिपुष्पकम् ।
शिलाप्रसूनं सुभगं शैलकं षोडशाह्वयम् ॥ १२.१३२
शैलेयं शिशिरं तिक्तं सुगन्धि कफपित्तजित् ।
दाहतृष्णावमिश्वासव्रणदोषविनाशनम् ॥ १२.१३३
चोरकः शङ्कितश्चण्डा दुष्पत्त्रः क्षेमको रिपुः ।
चपलः कितवो धूर्तः पटुर्नीचो निशाचरः ॥ १२.१३४
गणहासः कोपनकश्चौरकः फलचोरकः ।
दुष्कुलो ग्रन्थिलश्चैव सुग्रन्थिः पर्णचोरकः ।
ग्रन्थिपर्णो ग्रन्थिदलो ग्रन्थिपत्त्रस्त्रिनेत्रधा ॥ १२.१३५
चोरकस्तीव्रगन्धोष्णस्तिक्तो वातकफापहः ।
नासामुखरुजाजीर्णक्रिमिदोषविनाशनः ॥ १२.१३६
पद्मकं पीतकं पीतं मालयं शीतलं हिमम् ।
शुभ्रं केदारजं रक्तं पाटलापुष्पसंनिभम् ।
पद्मकाष्ठं पद्मवृक्षं प्रोक्तं स्याद्द्वादशाह्वयम् ॥ १२.१३७
पद्मकं शीतलं तिक्तं रक्तपित्तविनाशनम् ।
मोहदाहज्वरभ्रान्तिकुष्ठविस्फोटशान्तिकृत् ॥ १२.१३८
प्रपौण्डरीकं चक्षुष्यं पुण्डर्यं पुण्डरीयकम् ।
पौण्डर्यं च सुपुष्पं च सानुजं चानुजं स्मृतम् ॥ १२.१३९
प्रपौण्डरीकं चक्षुष्यं मधुरं तिक्तशीतलम् ।
पित्तरक्तव्रणान् हन्ति ज्वरदाहतृषापहम् ॥ १२.१४०
लामज्जकं सुनालं स्यादमृणालं लवं लघु ।
इष्टकापथकं शीघ्रं दीर्घमूलं जलाश्रयम् ॥ १२.१४१
लामज्जकं हिमं तिक्तं मधुरं वातपित्तजित् ।
तृड्दाहश्रममूर्छार्तिरक्तपित्तज्वरापहम् ॥ १२.१४२
मांसरोहिण्यतिरुहा वृत्ता चर्मकषा च सा ।
विकसा मांसरोही च ज्ञेया मांसरुहा मुनिः ॥ १२.१४३
अन्या मांसी सदामांसी मांसरोहा रसायनी ।
सुलोमा लोमकरणी रोहिणी मांसरोहिका ॥ १२.१४४
विकसा कटुका तिक्ता तथोष्णा स्वरसादनुत् ।
रसायनप्रयोगाच्च सर्वरोगहरा मता ।
कषाया ग्राहिणी वर्ण्या रक्तपित्तप्रसादनी ॥ १२.१४५
रोहिणीयुगलं शीतं कषायं क्रिमिनाशनम् ।
कण्ठशुद्धिकरं रुच्यं वातदोषनिषूदनम् ॥ १२.१४६
श्रीवेष्टो वृक्षधूपश्च चीडागन्धो रसाङ्गकः ।
श्रीवासः श्रीरसो वेष्टो लक्ष्मीवेष्टस्तु वेष्टकः ॥ १२.१४७
वेष्टसारो रसावेष्टः क्षीरशीर्षः सुधूपकः ।
धूपाङ्गस्तिलपर्णश्च सरलाङ्गोऽपि षोडश ॥ १२.१४८

श्रीवेष्टः कटुतिक्तश्च कषायः श्लेष्मपित्तजित् ।
योनिदोषरुजाजीर्णव्रणघ्नाध्मानदोषजित् ॥ १२.१४९
उशीरममृणालं स्याज्जलवासं हरिप्रियम् ।
मृणालमभयं वीरं वीरणं समगन्धिकम् ॥ १२.१५०
रणप्रियं वारितरं शिशिरं शितिमूलकम् ।
वेणीगमूलकं चैव जलामोदं सुगन्धिकम् ।
सुगन्धिमूलकं शुभ्रं बालकं ग्रहभूह्वयम् ॥ १२.१५१
उशीरं शीतलं तिक्तं दाहश्रमहरं परम् ।
पित्तज्वरार्तिशमनं जलसौगन्ध्यदायकम् ॥ १२.१५२
नलिका विद्रुमलतिका कपोतबाणा नली च निर्मथ्या ।
सुषिरा धमनी स्तुत्या रक्तदला नर्तकी नटी रुद्राः ॥ १२.१५३
नलिका तिक्तकटुका तीक्ष्णा च मधुरा हिमा ।
कृमिवातोदरार्त्यर्शःशूलघ्नी मलशोधनी ॥ १२.१५४
इत्थं गन्धद्रव्यकदम्बाह्वयवीर्यव्याख्यावाचोयुक्तिविविक्तोज्ज्वलसर्गम् ।
वर्गं वक्त्राम्भोरुहमोदार्हमधीयाथैनं मध्ये संसदसौ दीव्यतु वैद्यः ॥ १२.१५५
ये गन्धयन्ति सकलानि च भूतलानि लोकांश्च येऽपि सुखयन्ति च गन्धलुब्धान् ।
तेषामयं मलयजादिसुगन्धिनाम्नां भूर्गन्धवर्ग इति विश्रुतिमेति वर्गः ॥ १२.१५६
यस्योच्चैश्चरितानि शीतसुरभीण्यभ्यस्य सत्यात्मनो दुश्चारित्रजना निषङ्गजनितं द्राग्दौःस्थमास्थन् स्वकं तस्यायं कृतिनः कृतौ नरहरेः
श्रीचन्दनादिः स्थितिं वर्गो वाञ्छति नामनैगमशिखाभूषामणौ द्वादशः ॥ १२.१५७

त्रिस्वर्णरौप्यताम्राणि त्रपु सीसं द्विरीतिका ।
कांस्यायो वर्तकं कान्तं किट्टं मुण्डं च तीक्ष्णकम् ॥ १३.१
शिला सिन्दूरभूनागं हिङ्गुलं गैरिकं द्विधा ।
तुवरी हरितालं च गन्धकं च शिलाजतु ॥ १३.२
सिक्थकं च द्विकासीसं माक्षिकौ पञ्चधाञ्जनम् ।
कम्पिल्लतुत्थरसकं पारदश्चाभ्रकं चतुः ॥ १३.३
स्फटी च क्षुल्लकः शङ्खौ कपर्दः शुक्तिका द्विधा ।
खटिनी दुग्धपाषाणो मणिश्च कर्पूराद्यकः ॥ १३.४
सिकता च द्विकङ्गुष्ठं विमला च द्विधा मता ।
तथाखुप्रस्तरश्चैव शरवेदमिताह्वयाः ।
अथ रत्नं नवं वक्ष्ये पद्मरागादिकं क्रमात् ॥ १३.५
माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं स्यादथ पुष्परागः ।
वज्रं च नीलं च नव क्रमेण गोमेदवैडूर्ययुतानि तानि ॥ १३.६
स्फटिकश्च सूर्यकान्तो वैक्रान्तश्चन्द्रकान्तकः ।
राजावर्तः पेरोजं स्यादुभौ बाणाश्च संख्यया ॥ १३.७
स्वर्णं सुवर्णकनकोज्ज्वलकाञ्चनानि कल्याणहाटकहिरण्यमनोहराणि ।
गाङ्गेयगैरिकमहारजताग्निवीर्यरुक्माग्निहेमतपनीयकभास्कराणि ॥ १३.८
जाम्बूनदाष्टापदजातरूपपिञ्जानचामीकरकर्बुराणि ।
कार्तस्वरापिञ्जरभर्मभूरितेजांसि दीप्तानलपीतकानि ॥ १३.९
मङ्गल्यसौमेरवशातकुम्भशृङ्गारचन्द्राजरजाम्बवानि ।
आग्नेयनिष्काग्निशिखानि चेति नेत्राब्धिनिर्धारितनाम हेम ॥ १३.१०
स्वर्णं स्निग्धकषायतिक्तमधुरं दोषत्रयध्वंसनं शीतं स्वादु रसायनं च रुचिकृच्चक्षुष्यमायुष्प्रदम् ।
प्रज्ञावीर्यबलस्मृतिस्वरकरं कान्तिं विधत्ते तनोः संधत्ते दुरितक्षयं श्रियमिदं धत्ते नृणां धारणात् ॥ १३.११
दाहे च रक्तमथ यच्च सितं छिदायां काश्मीरकान्ति च विभाति निकाषपट्टे ।
स्निग्धं च गौरवमुपैति च यत्तुलायां जात्या तदेव कनकं मृदु रक्तपीतम् ॥ १३.१२
तच्चैकं रसवेधजं तदपरं जातं स्वयं भूमिजं किंचान्यद्बहुलोहसंकरभवं चेति त्रिधा काञ्चनम् ।
तत्राद्यं किल पीतरक्तमपरं रक्तं ततोऽन्यत्तथा मैरालं तदतिक्रमेण तदिदं स्यात्पूर्वपूर्वोत्तमम् ॥ १३.१३
रौप्यं शुभ्रं वसुश्रेष्ठं रुचिरं चन्द्रलोहकम् ।
श्वेतकं तु महाशुभ्रं रजतं तप्तरूपकम् ॥ १३.१४
चन्द्रभूतिः सितं तारं कलधौतेन्दुलोहकम् ।
कुप्यं धौतं तथा सौधं चन्द्रहासं मुनीन्दुकम् ॥ १३.१५
रौप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् ।
वातपित्तहरं रुच्यं वलीपलितनाशनम् ॥ १३.१६
दाहच्छेदनिकाषेषु सितं स्निग्धं च यद्गुरु ।
सुघर्षेऽपि च वर्णाढ्यमुत्तमं तदुदीरितम् ॥ १३.१७
ताम्रं म्लेच्छमुखं शुल्वं तपनेष्टमुदुम्बरम् ।
त्र्यम्बकं चारविन्दं च रविलोहं रविप्रियम् ।
रक्तं नेपालकं चैव रक्तधातुः करेन्दुधा ॥ १३.१८
ताम्रं सुपक्वं मधुरं कषायं तिक्तं विपाके कटु शीतलं च ।
कफापहं पित्तहरं विबन्धशूलघ्नपाण्डूदरगुल्मनाशि ॥ १३.१९
घनघातसहं स्निग्धं रक्तपत्त्रामलं मृदु ।
शुद्धाकरसमुत्पन्नं ताम्रं शुभमसंकरम् ॥ १३.२०
त्रपु त्रपुसमाण्डूकं वङ्गं च मधुरं हिमम् ।
कुरूप्यं पिच्चटं रङ्गं पूतिगन्धं दशाह्वयम् ॥ १३.२१

त्रपुसं कटुतिक्तहिमं कषायलवणं सरं च मेहघ्नम् ।
क्रिमिदाहपाण्डुशमनं कान्तिकरं तद्रसायनं चैव ॥ १३.२२
श्वेतं लघु मृदु स्वच्छं स्निग्धमुष्णापहं हिमम् ।
सूतपत्त्रकरं कान्तं त्रपु श्रेष्ठमुदाहृतम् ॥ १३.२३
सीसकं तु जडं सीसं यवनेष्टं भुजंगमम् ।
योगीष्टं नागपुरगं कुवङ्गं परिपिष्टकम् ॥ १३.२४
मृदु कृष्णायसं पद्मं तारशुद्धिकरं स्मृतम् ।
सिरावृत्तं च वङ्गं स्याच्चीनपिष्टं च षोडश ॥ १३.२५
सीसं तु वङ्गतुल्यं स्यात्रसवीर्यविपाकतः ।
उष्णं च कफवातघ्नमर्शोघ्नं गुरु लेखनम् ॥ १३.२६
स्वर्णे नीलं मृदु स्निग्धं निर्मलं च सुगौरत्वम् ।
रौप्यसंशोधनं क्षिप्रं सीसकं च तदुत्तमम् ॥ १३.२७
रीतिः क्षुद्रसुवर्णं सिंहलकं पिङ्गलं च पित्तलकम् ।
लौहितकमारकुट्टं पिङ्गललोहं च पीतकं नवधा ॥ १३.२८
राजरीतिः काकतुण्डी राजपुत्री महेश्वरी ।
ब्राह्मणी ब्रह्मरीतिश्च कपिला पिङ्गलापि च ॥ १३.२९
रीतिकायुगलं तिक्तं शीतलं लवणं रसे ।
शोधनं पाण्डुवातघ्नं क्रिमिप्लीहार्तिपित्तजित् ॥ १३.३०
शुद्धा स्निग्धा मृदुः शीता सुरङ्गा सूत्रपत्त्रिणी ।
हेमोपमा शुभा स्वच्छा जन्या रीतिः प्रकीर्तिता ॥ १३.३१
कांस्यं सौराष्ट्रिकं घोषं कंसीयं वह्निलोहकम् ।
दीप्तं लोहं घोरपुष्पं दीप्तकं सुमनाह्वयम् ॥ १३.३२
कांस्यं तु तिक्तमुष्णं चक्षुष्यं वातकफविकारघ्नम् ।
रूक्षं कषायरुच्यं लघु दीपनपाचनं पथ्यम् ॥ १३.३३
श्वेतं दीप्तं मृदु ज्योतिः शब्दाढ्यं स्निग्धनिर्मलम् ।
घनाग्निसहसूत्राङ्गं कांस्यमुत्तममीरितम् ॥ १३.३४
वर्तलोहं वर्ततीक्ष्णं वर्तकं लोहसंकरम् ।
नीलिका नीललोहं च लोहजं वट्टलोहकम् ॥ १३.३५
इदं लोहं कटूष्णं च तिक्तं च शिशिरं तथा ।
कफहृत्पित्तशमनं मधुरं दाहमेहनुत् ॥ १३.३६
अयस्कान्तं कान्तलोहं कान्तं स्याल्लोहकान्तिकम् ।
कान्तायसं कृष्णलोहं महालोहं च सप्तधा ॥ १३.३७
स्याद्भ्रामकं तदनु चुम्बकरोमकाख्यं स्याच्छेदकाख्यमिति तच्च चतुर्विधं स्यात् ।
कान्ताश्मलोहगुणवृद्धि यथाक्रमेण दार्ढ्याङ्गकान्तिकचकार्ष्ण्यविरोगदायि ॥ १३.३८
अयस्कान्तविशेषाः स्युर्भ्रामकाश्चुम्बकादयः ।
रसायनकराः सर्वे देहसिद्धिकराः पराः ॥ १३.३९
न सूतेन विना कान्तं न कान्तेन विना रसः ।
सूतकान्तसमायोगाद्रसायनमुदीरितम् ॥ १३.४०
लोहकिट्टं तु किट्टं स्याल्लोहचूर्णमयोमलम् ।
लोहजं कृष्णचूर्णं च कार्ष्ण्यं लोहमलं तथा ॥ १३.४१
लोहकिट्टं तु मधुरं कटूष्णं क्रिमिवातनुत् ।
पक्तिशूलं मरुच्छूलं मेहगुल्मार्तिशोफनुत् ॥ १३.४२
मुण्डं मुण्डायसं लोहं दृषत्सारं शिलात्मजम् ।
अश्मजं कृषिलोहं च आरं कृष्णायसं नव ॥ १३.४३
तीक्ष्णं शस्त्रायसं शस्त्रं पिण्डं पिण्डायसं शठम् ।

आयसं निशितं तीव्रं लोहखड्गं च मुण्डजम् ।
अयश्चित्रायसं प्रोक्तं चीनजं वेदभूमितम् ॥ १३.४४
लोहं रूक्षोष्णतिक्तं स्याद्वातपित्तकफापहम् ।
प्रमेहपाण्डुरशूलघ्नं तीक्ष्णं मुण्डाधिकं स्मृतम् ॥ १३.४५
स्वर्णं सम्यगशोधितं श्रमकरं स्वेदावहं दुःसहं रौप्यं जाठरजाड्यमान्द्यजननं ताम्रं वमिभ्रान्तिदम् ।
नागं च त्रपु चाङ्गदोषदमयो गुल्मादिदोषप्रदं तीक्ष्णं शूलकरं च कान्तमुदितं कार्ष्ण्यामयस्फोटदम् ॥ १३.४६
विशुद्धिहीनौ यदि मुण्डतीक्ष्णौ क्षुधापहौ गौरवगुल्मदायकौ ।
कांस्यायसं क्लेदकतापकारकं रीत्यौ च सम्मोहनशोषदायिके ॥ १३.४७
मनःशिला स्यात्कुनटी मनोज्ञा शिला मनोह्वापि च नागजिह्वा ।
नेपालिका स्यान्मनसश्च गुप्ता कल्याणिका रोगशिला दशाह्वा ॥ १३.४८
मनःशिला कटुः स्निग्धा लेखनी विषनाशनी ।
भूतावेशभयोन्मादहारिणी वश्यकारिणी ॥ १३.४९
सिन्दूरं नागरेणुः स्याद्रक्तं सीमन्तकं तथा ।
नागजं नागगर्भं च शोणं वीररजः स्मृतम् ॥ १३.५०
गणेशभूषणं संध्यारागं शृङ्गारकं स्मृतम् ।
सौभाग्यमरुणं चैव मङ्गल्यं मनुसंमितम् ॥ १३.५१
सिन्दूरं कटुकं तिक्तमुष्णं व्रणविरोपणम् ।
कुष्ठास्रविषकण्डूतिवीसर्पशमनं परम् ॥ १३.५२
सुरङ्गोऽग्निसहः सूक्ष्मः स्निग्धः स्वच्छो गुरुर्मृदुः ।
सुवर्णकरजः शुद्धः सिन्दूरो मङ्गलप्रदः ॥ १३.५३
भूनागः क्षितिनागश्च भूजन्तू रक्तजन्तुकः ।
क्षितिजः क्षितिजन्तुश्च भूमिजो रक्ततुण्डकः ॥ १३.५४
भूनागो वज्रमारः स्यान्नानाविज्ञानकारकः ।
रसस्य जारणे तूक्तं तत्सत्त्वं तु रसायनम् ॥ १३.५५
हिङ्गुलं बर्बरं रक्तं सुरङ्गं सुगरं स्मृतम् ।
रञ्जनं दरदं म्लेच्छं चित्राङ्गं चूर्णपारदम् ॥ १३.५६
अन्यच्च मारकं चैव मणिरागं रसोद्भवम् ।
रञ्जकं रसगर्भं च बाणभूसंख्यसंमितम् ॥ १३.५७
हिङ्गुलं मधुरं तिक्तमुष्णवातकफापहम् ।
त्रिदोषद्वंद्वदोषोत्थं ज्वरं हरति सेवितम् ॥ १३.५८
गैरिकं रक्तधातुः स्याद्गिरिधातुर्गवेधुकम् ।
धातुः सुरङ्गधातुश्च गिरिजं गिरिमृद्भवम् ॥ १३.५९
सुवर्णगैरिकं चान्यत्स्वर्णधातुः सुरक्तकम् ।
संध्याभ्रं बभ्रुधातुश्च शिलाधातुः षडाह्वयम् ॥ १३.६०
गैरिकं मधुरं शीतं कषायं व्रणरोपणम् ।
विस्फोटार्शोऽग्निदाहघ्नं वरं स्वर्णादिकं शुभम् ॥ १३.६१
तुवरी मृच्च सौराष्ट्री मृत्स्ना सङ्गा सुराष्ट्रजा ।
भूघ्नी मृतालकं कासी मृत्तिका सुरमृत्तिका ।
स्तुत्या काङ्क्षी सुजाता च ज्ञेया चैव चतुर्दश ॥ १३.६२
तुवरी तिक्तकटुका कषायाम्ला च लेखनी ।
चक्षुष्या ग्रहणीछर्दिपित्तसंतापहारिणी ॥ १३.६३
हरितालं गोदन्तं पीतं नटमण्डनं च गौरं च ।
चित्राङ्गं पिञ्जरकं भवेदालं तालकं च तालं च ॥ १३.६४
कनकरसं काञ्चनकं बिडालकं चैव चित्रगन्धं च ।
पिङ्गं च पिङ्गसारं गौरीललितं च सप्तदशसंज्ञम् ॥ १३.६५

हरितालं कटूष्णं च स्निग्धं त्वग्दोषनाशनम् ।
भूतभ्रान्तिप्रशमनं विषवातरुजार्तिजित् ॥ १३.६६
गन्धको गन्धपाषाणो गन्धाश्मा गन्धमोदनः ।
पूतिगन्धोऽतिगन्धश्च वटः सौगन्धिकस्तथा ॥ १३.६७
सुगन्धो दिव्यगन्धश्च गन्धश्च रसगन्धकः ।
कुष्ठारिः क्रूरगन्धश्च कीटघ्नः शरभूमितः ॥ १३.६८
गन्धकः कटुरुष्णश्च तीव्रगन्धोऽतिवह्निकृत् ।
विषघ्नः कुष्ठकण्डूतिखर्जूत्वग्दोषनाशनः ॥ १३.६९
श्वेतो रक्तश्च पीतश्च नीलश्चेति चतुर्विधः ।
गन्धको वर्णतो ज्ञेयो भिन्नो भिन्नगुणाश्रयः ॥ १३.७०
श्वेतः कुष्ठापहारी स्याद्रक्तो लोहप्रयोगकृत् ।
पीतो रसप्रयोगार्हो नीलो वर्णान्तरोचितः ॥ १३.७१
शिलाजतु स्यादश्मोत्थं शैलं गिरिजमश्मजम् ।
अश्मलाक्षाश्मजतुकं जत्वश्मकमिति स्मृतम् ॥ १३.७२
शिलाजतु भवेत्तिक्तं कटूष्णं च रसायनम् ।
मेहोन्मादाश्मरीशोफकुष्ठापस्मारनाशनम् ॥ १३.७३
सिक्थकं मधुकं सिक्थं मधुजं मधुसम्भवम् ।
मदनकं मधूच्छिष्टं मदनं मक्षिकामलम् ॥ १३.७४
क्षौद्रेयं पीतरागं च स्निग्धं माक्षिकजं तथा ।
क्षौद्रजं मधुशेषं च द्रावकं मक्षिकाश्रयम् ।
मधूषितं च सम्प्रोक्तं मधूत्थं चोनविंशति ॥ १३.७५
सिक्थकं कपिलं स्वादु कुष्ठवातार्तिजिन्मृदु ।
कटु स्निग्धं च लेपेन स्फुटिताङ्गविरोपणम् ॥ १३.७६
कासीसं धातुकासीसं केसरं हंसलोमशम् ।
शोधनं पांशुकासीसं शुभ्रं सप्ताह्वयं मतम् ॥ १३.७७
कासीसं तु कषायं स्यात्शिशिरं विषकुष्ठजित् ।
खर्जूक्रिमिहरं चैव चक्षुष्यं कान्तिवर्धनम् ॥ १३.७८
द्वितीयं पुष्पकासीसं वत्सकं च मलीमसम् ।
ह्रस्वं नेत्रौषधं योज्यं विशदं नीलमृत्तिका ॥ १३.७९
पुष्पकासीसं तिक्तं शीतं नेत्रामयापहम् ।
लेपेनात्यामकुष्ठादिनानात्वग्दोषनाशनम् ॥ १३.८०
माक्षिकं चैव माक्षीकं पीतकं धातुमाक्षिकम् ।
तापीजं ताप्यकं ताप्यमापीतं पीतमाक्षिकम् ॥ १३.८१
आवर्तं मधुधातुः स्यात्क्षौद्रधातुस्तथापरः ।
प्रोक्तं माक्षिकधातुश्च वेदभूर्हेममाक्षिकम् ॥ १३.८२
माक्षिकं मधुरं तिक्तमम्लं कटु कफापहम् ।
भ्रमहृल्लासमूर्छार्तिश्वासकासविषापहम् ॥ १३.८३
माक्षिकं द्विविधं प्रोक्तं हेमाह्वं तारमाक्षिकम् ।
भिन्नवर्णविशेषत्वात्रसवीर्यादिकं पृथक् ॥ १३.८४
तारवादादिके तारमाक्षिकं च प्रशस्यते ।
देहे हेमादिकं शस्तं रोगहृद्बलपुष्टिदम् ॥ १३.८५
अञ्जनं यामुनं कृष्णं नादेयं मेचकं तथा ।
स्रोतोजं दृक्प्रदं नीलं सौवीरं च सुवीरजम् ॥ १३.८६
तथा नीलाञ्जनं चैव चक्षुष्यं वारिसम्भवम् ।
कपोतकं च कापोतं सम्प्रोक्तं शरभूमितम् ॥ १३.८७

शीतं नीलाञ्जनं प्रोक्तं कटु तिक्तं कषायकम् ।
चक्षुष्यं कफवातघ्नं विषघ्नं च रसायनम् ॥ १३.८८
कुलत्था दृक्प्रसादा च चक्षुष्याथ कुलत्थिका ।
कुलाली लोचनहिता कुम्भकारी मलापहा ॥ १३.८९
कुलत्थिका तु चक्षुष्या कषाया कटुका हिमा ।
विषविस्फोटकण्डूतिव्रणदोषनिबर्हिणी ॥ १३.९०
पुष्पाञ्जनं पुष्पकेतुः कौसुम्भं कुसुमाञ्जनम् ।
रीतिकं रीतिकुसुमं रीतिपुष्पं च पौष्पकम् ॥ १३.९१
पुष्पाञ्जनं हिमं प्रोक्तं पित्तहिक्काप्रदाहनुत् ।
नाशयेद्विषकासार्तिं सर्वनेत्रामयापहम् ॥ १३.९२
रसाञ्जनं रसोद्भूतं रसगर्भं रसाग्रजम् ।
कृतकं बालभैषज्यं दार्वीक्वाथोद्भवं तथा ॥ १३.९३
रसजातं तार्क्ष्यशैलं ज्ञेयं वर्याञ्जनं तथा ।
रसनाभं चाग्निसारं द्वादशाह्वं च कीर्तितम् ॥ १३.९४
रीत्यां तु ध्मायमानायां तत्किट्टं तु रसाञ्जनम् ।
तदभावे तु कर्तव्यं दार्वीक्वाथसमुद्भवम् ॥ १३.९५
स्रोतोञ्जनं वारिभवं तथान्यं स्रोतोद्भवं स्रोतनदीभवं च ।
सौवीरसारं च कपोतसारं वल्मीकशीर्षं मुनिसंमिताह्वम् ॥ १३.९६
स्रोतोञ्जनं शीतकटु कषायं क्रिमिनाशनम् ।
रसाञ्जनं रसे योग्यं स्तन्यवृद्धिकरं परम् ॥ १३.९७
वल्मीकशिखराकारं भिन्ननीलाञ्जनप्रभम् ।
घृष्टे च गैरिकावर्णं श्रेष्ठं स्रोतोञ्जनं च तत् ॥ १३.९८
कम्पिल्लकोऽथ रक्ताङ्गो रेचनो रेचकस्तथा ।
रञ्जको लोहिताङ्गश्च कम्पिल्लो रक्तचूर्णकः ॥ १३.९९
कम्पिल्लको विरेची स्यात्कटूष्णो व्रणनाशनः ।
कफकासार्तिहारी च जन्तुक्रिमिहरो लघुः ॥ १३.१००
तुत्थं नीलाश्मजं नीलं हरिताश्मं च तुत्थकम् ।
मयूरग्रीवकं चैव ताम्रगर्भामृतोद्भवम् ।
मयूरतुत्थं सम्प्रोक्तं शिखिकण्ठं दशाह्वयम् ॥ १३.१०१
तुत्थं कटु कषायोष्णं श्वित्रनेत्रामयापहम् ।
विषदोषेषु सर्वेषु प्रशस्तं वान्तिकारकम् ॥ १३.१०२
द्वितीयं खर्परीतुत्थं खर्परी रसकं तथा ।
चक्षुष्यममृतोत्पन्नं तुत्थखर्परिका तु षट् ॥ १३.१०३
खर्परी कटुका तिक्ता चक्षुष्या च रसायनी ।
त्वग्दोषशमनी रुच्या दीप्या पुष्टिविवर्धनी ॥ १३.१०४
पारदो रसराजश्च रसनाथो महारसः ।
रसश्चैव महतेजा रसलोहो रसोत्तमः ॥ १३.१०५
सूतराट्चपलो जैत्रः शिवबीजं शिवस्तथा ।
अमृतं च रसेन्द्रः स्याल्लोकेशो धूर्तरः प्रभुः ॥ १३.१०६
रुद्रजो हरतेजश्च रसधातुरचिन्त्यजः ।
खेचरश्चामरः प्रोक्तो देहदो मृत्युनाशनः ॥ १३.१०७
स्कन्दः स्कन्दांशकः सूतो देवो दिव्यरसस्तथा ।
प्रोक्तो रसायनश्रेष्ठो यशोदस्त्रित्रिधाह्वयः ॥ १३.१०८
पारदः सकलरोगनाशनः षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एष कीर्तितो देहलोहपरसिद्धिदायकः ॥ १३.१०९

मूर्छितो हरते व्याधीन् बद्धः खेचरसिद्धिदः ।
सर्वसिद्धिकरो नीलो निरुद्धो देहसिद्धिदः ॥ १३.११०
विविधव्याधिभयोदयमरणजरासंकटेऽपि मर्त्यानाम् ।
पारं ददाति यस्मात्तस्मादयमेव पारदः कथितः ॥ १३.१११
अभ्रकमभ्रं भृङ्गं व्योमाम्बरमन्तरिक्षमाकाशम् ।
बहुपत्रं खमनन्तं गौरीजं गौरिजेयमिति रवयः ॥ १३.११२
श्वेतं पीतं लोहितं नीलमभ्रं चातुर्विध्यं याति भिन्नक्रियार्हम् ।
श्वेतं तारे काञ्चने पीतरक्ते नीलं व्याधावग्र्यमग्र्यं गुणाढ्यम् ॥ १३.११३
नीलाभ्रं दर्दुरो नागः पिनाको वज्र इत्यपि ।
चतुर्विधं भवेत्तस्य परीक्षा कथ्यते क्रमात् ॥ १३.११४
यद्वह्नौ निहितं तनोति नितरां भेकारवं दर्दुरो नागः फूत्कुरुते धनुःस्वनमुपादत्ते पिनाकः किल ।
वज्रं नैव विकारमेति तदिमान्यासेवमानः क्रमात्गुल्मी च व्रणवांश्च कुत्सितगदी नीरुक्च संजायते ॥ १३.११५
मनोजभावभावितौ यदा शिवौ परस्परम् ।
तदा किलाभ्रपारदौ गुहोद्भवौ बभूवतुः ॥ १३.११६
स्फटी च स्फटिकी प्रोक्ता श्वेता शुभ्रा च रङ्गदा ।
रङ्गदृढा दृढरङ्गा रङ्गाङ्गा वसुसंमिता ॥ १३.११७
स्फटी च कटुका स्निग्धा कषाया प्रदरापहा ।
मेहकृच्छ्रवमीशोषदोषघ्नी दृढरङ्गदा ॥ १३.११८
क्षुल्लकः क्षुद्रशङ्खः स्यात्शम्बूको नखशङ्खकः ।
क्षुल्लकः कटुकस्तिक्तः शूलहारी च दीपनः ॥ १३.११९
शङ्खो ह्यर्णोभवः कम्बुर्जलजः पावनध्वनिः ।
कुटिलोऽन्तर्महानादः कम्बूः पूतः सुनादकः ॥ १३.१२०
सुस्वरो दीर्घनादश्च बहुनादो हरिप्रियः ।
एवं षोडशधा ज्ञेयो धवलो मङ्गलप्रदः ॥ १३.१२१
शङ्खः कटुरसः शीतः पुष्टिवीर्यबलप्रदः ।
गुल्मशूलहरः श्वासनाशनो विषदोषनुत् ॥ १३.१२२
क्रिमिशङ्खः क्रिमिजलजः क्रिमिवारिरुहश्च जन्तुकम्बुश्च ।
कथितो रसवीर्याद्यैः कृतधीभिः शङ्खसदृशोऽयम् ॥ १३.१२३
कपर्दको वराटश्च कपर्दिश्च वराटिका ।
चराचरश्चरो वर्यो बालक्रीडरनकश्च सः ॥ १३.१२४
कपर्दः कटुतिक्तोष्णः कर्णशूलव्रणापहः ।
गुल्मशूलामयघ्नश्च नेत्रदोषनिकृन्तनः ॥ १३.१२५
शुक्तिर्मुक्ताप्रसूश्चैव महाशुक्तिश्च शुक्तिका ।
मुक्तास्फोटस्तौतिकं तु मौक्तिकप्रसवा च सा ।
ज्ञेया मौक्तिकशुक्तिश्च मुक्तामाताङ्कधा स्मृता ॥ १३.१२६
मुक्ताशुक्तिः कटुः स्निग्धा श्वासहृद्रोगहारिणी ।
शूलप्रशमनी रुच्या मधुरा दीपनी परा ॥ १३.१२७
जलशुक्तिर्वारिशुक्तिः क्रिमिसूः क्षुद्रशुक्तिका ।
शम्बूका जलशुक्तिश्च पुटिका तोयशुक्तिका ॥ १३.१२८
जलशुक्तिः कटुः स्निग्धा दीपनी गुल्मशूलनुत् ।
विषदोषहरा रुच्या पाचनी बलदायिनी ॥ १३.१२९
खटिनी खटिका चैव खटी धवलमृत्तिका ।
सितधातुः श्वेतधातुः पाण्डुमृत्पाण्डुमृत्तिका ॥ १३.१३०
खटिनी मधुरा तिक्ता शीतला पित्तदाहनुत् ।
व्रणदोषकफास्रघ्नी नेत्ररोगनिकृन्तनी ॥ १३.१३१

दुग्धाश्मा दुग्धपाषाणः क्षीरी गोमेदसंनिभः ।
वज्राभो दीप्तिकः सौधो दुग्धी क्षीरयवोऽपि च ॥ १३.१३२
दुग्धपाषाणको रुच्य ईषदुष्णो ज्वरापहः ।
पित्तहृद्रोगशूलघ्नः कासाध्मानविनाशनः ॥ १३.१३३
कर्पूरनामभिश्चादावन्ते च मणिवाचकः ।
कर्पूरमणिनामायं युक्त्या वातादिदोषनुत् ॥ १३.१३४
सिकता वालुका सिक्ता शीतला सूक्ष्मशर्करा ।
प्रवाहोत्था महाश्लक्ष्णा सूक्ष्मा पानीयचूर्णका ॥ १३.१३५
वालुका मधुरा शीता संतापश्रमनाशिनी ।
सेकप्रयोगतश्चैव शाखाशैत्यानिलापहा ॥ १३.१३६
कङ्कुष्ठं कालकुष्ठं च विरङ्गं रङ्गदायकम् ।
रेचकं पुलकं चैव शोधकं कालपालकम् ॥ १३.१३७
कङ्कुष्ठं च द्विधा प्रोक्तं तारहेमाभ्रकं तथा ।
कटुकं कफवातघ्नं रेचकं व्रणशूलहृत् ॥ १३.१३८
विमलं निर्मलं स्वच्छममलं स्वच्छधातुकम् ।
बाणसंख्याभिधं प्रोक्तं तारहेम द्विधा मतम् ॥ १३.१३९
विमलं कटुतिक्तोष्णं त्वग्दोषव्रणनाशनम् ।
रसवीर्यादिके तुल्यं वेधे स्याद्भिन्नवीर्यकम् ॥ १३.१४०
मूषकस्याभिधा पूर्वं पाषाणस्याभिधा ततः ।
आखुपाषाणनामायं लोहसंकरकारकः ॥ १३.१४१
धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् ।
ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥ १३.१४२
द्रव्यं किंचन लक्ष्मीभोग्यं वसुवस्तुसम्पदो वृद्धिः ।
श्रीर्व्यवहार्यं द्रविणं धनमर्थो राः स्वापतेयं च ॥ १३.१४३
रत्नं वसुमणिरुपलो दृषद्द्रविणदीप्तवीर्याणि ।
रौहिणकमब्धिसारं खानिकमाकरजमित्यभिन्नार्थाः ॥ १३.१४४
माणिक्यं शोणरत्नं च रत्नराड्रविरत्नकम् ।
शृङ्गारि रङ्गमाणिक्यं तरलो रत्ननायकः ॥ १३.१४५
रागदृक्पद्मरागश्च रत्नं शोणोपलस्तथा ।
सौगन्धिकं लोहितकं कुरुविन्दं शरेन्दुकम् ॥ १३.१४६
माणिक्यं मधुरं स्निग्धं वातपित्तप्रणाशनम् ।
रत्नप्रयोगप्रज्ञानां रसायनकरं परम् ॥ १३.१४७
स्निग्धं गुरुगात्रयुतं दीप्तं स्वच्छं सुरङ्गं च ।
इति जात्यादिमाणिक्यं कल्याणं धारणात्कुरुते ॥ १३.१४८
द्विच्छायमभ्रपिहितं कर्कशशर्करिलं भिन्नधूम्रं च ।
रागविकलं विरूपं लघु माणिक्यं न धारयेद्धीमान् ॥ १३.१४९
तद्रक्तं यदि पद्मरागमथ तत्पीतातिरक्तं द्विधा जानीयात्कुरुविन्दकं यदरुणं स्यादेषु सौगन्धिकम् ।
तन्नीलं यदि नीलगन्धिकमिति ज्ञेयं चतुर्धा बुधैर्माणिक्यं कषघर्षणेऽप्यविकलं रागेण जात्यं जगुः ॥ १३.१५०
मुक्ता सौम्या मौक्तिकं मौक्तिकेयं तारं तारा भौतिकं तारका च ।
अम्भःसारं शीतलं नीरजं च नक्षत्रं स्यादिन्द्ररत्नं वलक्षम् ॥ १३.१५१
मुक्ताफलं बिन्दुफलं च मुक्तिका शौक्तेयकं शुक्लमणिः शशिप्रियम् ।
स्वच्छं हिमं हैमवतं सुधांशुभं सुधांशुरत्नं शरनेत्रसंमितम् ॥ १३.१५२
मौक्तिकं च मधुरं सुशीतलं दृष्टिरोगशमनं विषापहम् ।
राजयक्ष्ममुखरोगनाशनं क्षीणवीर्यबलपुष्टिवर्धनम् ॥ १३.१५३
नक्षत्राभं वृत्तमत्यन्तमुक्तं स्निग्धं स्थूलं निर्मलं निर्व्रणं च ।

न्यस्तं धत्ते गौरवं यत्तुलायां तन्निर्मूल्यं मौक्तिकं सौख्यदायि ॥ १३.१५४
यद्विच्छायं मौक्तिकं व्यङ्गकायं शुक्तिस्पर्शं रक्ततां चापि धत्ते ।
मत्स्याक्ष्याभं रूक्षमुत्ताननिम्नं नैतद्धार्यं धीमता दोषदायि ॥ १३.१५५
मातंगोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृत्शुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा ।
छायाः पाटलनीलपीतधवलास्तत्रापि सामान्यतः सप्तानां बहुशो न लब्धिरितरच्छौक्तेयकं तूल्वणम् ॥ १३.१५६
लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् ।
मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम् ॥ १३.१५७
प्रवालोऽङ्गारकमणिर्विद्रुमोऽम्भोधिपल्लवः ।
भौमरत्नं च रक्ताङ्गो रक्ताङ्कुरो लतामणिः ॥ १३.१५८
प्रवालो मधुरोऽम्लश्च कफपित्तादिदोषनुत् ।
वीर्यकान्तिकरः स्त्रीणां धृतो मङ्गलदायकः ॥ १३.१५९
शुद्धं दृढघनं वृतं स्निग्धगात्रं सुरङ्गकम् ।
समं गुरु सिराहीनं प्रवालं धारयेत्शुभम् ॥ १३.१६०
गौररङ्गं जलाक्रान्तं वक्रं सूक्ष्मं सकोटरम् ।
रूक्षं कृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत् ॥ १३.१६१
बालार्ककिरणरक्ता सागरसलिलोद्भवा प्रवाललता ।
या न त्यजति निजरुचिं निकषे घृष्टापि सा स्मृता जात्या ॥ १३.१६२
गारुत्मतं मरकतं रौहीणेयं हरिन्मणिः ।
सौपर्णं गरुडोद्गीर्णं बुधरत्नाश्मगर्भजम् ।
गरलारिर्वायवालं गारुडं रुद्रसंमितम् ॥ १३.१६३
मरकतं विषघ्नं च शीतलं मधुरं रसे ।
आमपित्तहरं रुच्यं पुष्टिदं भूतनाशनम् ॥ १३.१६४
स्वच्छं गुरु सुच्छायं स्निग्धं गात्रे च मार्दवसमेतम् ।
अव्यङ्गं बहुरङ्गं शृङ्गारि मरकतं शुभं बिभृयात् ॥ १३.१६५
शर्करिलकलिलरूक्षं मलिनं लघु हीनकान्ति कल्माषम् ।
त्रासयुतं विकृताङ्गं मरकतममरोऽपि नोपभुञ्जीत ॥ १३.१६६
यत्शैवालशिखण्डिशाद्वलहरित्काचैश्च चाषच्छदैः खद्योतेन च बालकीरवपुषा शैरीषपुष्पेण च ।
छायाभिः समतां दधाति तदिदं निर्दिष्टमष्टात्मकं जात्यं यत्तपनातपैश्च परितो गारुत्मतं रञ्जयेत् ॥ १३.१६७
पीतस्तु पुष्परागः पीतस्फटिकश्च पीतरक्तश्च ।
पीताश्मा गुरुरत्नं पीतमणिः पुष्परागश्च ॥ १३.१६८
पुष्परागोऽम्लशीतश्च वातजिद्दीपनः परः ।
आयुः श्रियं च प्रज्ञां च धारणात्कुरुते नृणाम् ॥ १३.१६९
सच्छायपीतगुरुगात्रसुरङ्गशुद्धं स्निग्धं च निर्मलमतीव सुवृत्तशीतम् ।
यः पुष्परागममलं कलयेदमुष्य पुष्णाति कीर्तिमतिशौर्यसुखायुरर्थान् ॥ १३.१७०
कृष्णबिन्द्वङ्कितं रूक्षं धवलं मलिनं लघु ।
विच्छायं शर्कराङ्गाभं पुष्परागं सदोषकम् ॥ १३.१७१
घृष्टं निकाषपट्टे यत्पुष्यति रागमधिकमात्मीयम् ।
तेन खलु पुष्परागो जात्यतयायं परीक्षकैरुक्तः ॥ १३.१७२
वज्रमिन्द्रायुधं हीरं भिदुरं कुलिशं पविः ।
अभेद्यमशिरं रत्नं दृढं भार्गवकं स्मृतम् ।
षट्कोणं बहुधारं च शतकोट्यब्धिभूमितम् ॥ १३.१७३
वज्रं च षड्रसोपेतं सर्वरोगापहारकम् ।
सर्वाघशमनं सौख्यं देहदार्ढ्यं रसायनम् ॥ १३.१७४
भस्माङ्गं काकपादं च रेखाक्रान्तं तु वर्तुलम् ।
अधारं मलिनं बिन्दुसंत्रासं स्फुटितं तथा ।

नीलाभं चिपिटं रूक्षं तद्वज्रं दोषदं त्यजेत् ॥ १३.१७५
श्वेतालोहितपीतकमेचकतया छायाश्चतस्रः क्रमात्विप्रादित्वमिहास्य यत्सुमनसः शंसन्ति सत्यं ततः ।
स्फीतां कीर्तिमनुत्तमां श्रियमिदं धत्ते यथास्वं धृतं मर्त्यानामयथायथं तु कुलिशं पथ्यं हि नान्यत्ततः ॥ १३.१७६
यत्पाषाणतले निकाषनिकरे नोद्घृष्यते निष्ठुरैर्यच्चोलूखललोहमुद्गरघनैर्लेखां न यात्याहतम् ।
यच्चान्यन्निजलीलयैव दलयेद्वज्रेण वा भिद्यते तज्जात्यं कुलिशं वदन्ति कुशलाः श्लाघ्यं महार्घ्यं च तत् ॥ १३.१७७
विप्रः सोऽपि रसायनेषु बलवानष्टाङ्गसिद्धिप्रदो राजन्यस्तु नृणां वलीपलितजित्मृत्युं जयेदञ्जसा ।
द्रव्याकर्षणसिद्धिदस्तु सुतरां वैश्वोऽथ शूद्रो भवेत्सर्वव्याधिहरस्तदेष कथितो वज्रस्य वर्ण्यो गुणः ॥ १३.१७८
नीलस्तु सौरिरत्नं स्यान्नीलाश्मा नीलरत्नकः ।
नीलोपलस्तृणग्राही महानीलः सुनीलकः ।
मसारमिन्द्रनीलं स्याद्गल्लर्कः पद्मरागजः ॥ १३.१७९
नीलः सतिक्तकोष्णश्च कफपित्तानिलापहः ।
यो दधाति शरीरे स्यात्सौरिर्मङ्गलदो भवेत् ॥ १३.१८०
न निम्नो निर्मलो गात्रमसृणो गुरुदीप्तिकः ।
तृणग्राही मृदुर्नीलो दुर्लभो लक्षणान्वितः ॥ १३.१८१
मृच्छर्कराश्मकलिलो विच्छायो मलिनो लघुः ।
रूक्षः स्फुटितगर्तश्च वर्ज्यो नीलः सदोषकः ॥ १३.१८२
सितशोणपीतकृष्णाश्छाया नीले क्रमादिमाः कथिताः ।
विप्रादिवर्णसिद्ध्यै धारणमस्यापि वज्रवत्फलवत् ॥ १३.१८३
आस्त्यानं चन्द्रिकास्यन्दं सुन्दरं क्षीरपूरितम् ।
यः पात्रं रञ्जयत्याशु स जात्यो नील उच्यते ॥ १३.१८४
गोमेदकस्तु गोमेदो राहुरत्नं तमोमणिः ।
स्वर्भानवः षडाह्वोऽयं पिङ्गस्फटिक इत्यपि ॥ १३.१८५
गोमेदकोऽम्ल उष्णश्च वातकोपविकारजित् ।
दीपनः पाचनश्चैव धृतोऽयं पापनाशनः ॥ १३.१८६
गोमूत्राभं यन्मृदु स्निग्धमुग्धं शुद्धच्छायं गौरवं यच्च धत्ते ।
हेमारक्तं श्रीमतां योग्यमेतत्गोमेदाख्यं रत्नमाख्यान्ति सन्तः ॥ १३.१८७
पात्रे यत्र न्यस्ते पयः प्रयात्येव गोजलोज्ज्वलताम् ।
घर्षेऽप्यहीनकान्तिं गोमेदं तं बुधा विदुर्जात्यम् ॥ १३.१८८
अरङ्गं श्वेतकृष्णाङ्गं रेखात्रासयुतं लघु ।
विच्छायं शर्करागारं गोमेदं विबुधस्त्यजेत् ॥ १३.१८९
वैडूर्यं केतुरत्नं च कैतवं बालवीयजम् ।
प्रावृष्यमभ्रलोहं च खशब्दाङ्कुरकस्तथा ।
वैडूर्यरत्नं सम्प्रोक्तं ज्ञेयं विदूरजं तथा ॥ १३.१९०
वैडूर्यमुष्णमम्लं च कफमारुतनाशनम् ।
गुल्मादिदोषशमनं भूषितं च शुभावहम् ॥ १३.१९१
एकं वेणुपलाशपेशलरुचा मायूरकण्ठत्विषा मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा छायया ।
यद्गात्रे गुरुतां दधाति नितरां स्निग्धं तु दोषोज्झितं वैडूर्यं विमलं वदन्ति सुधियः स्वच्छं च तच्छोभनम् ॥ १३.१९२
विच्छायं मृच्छिलागर्भं लघु रूक्षं च सक्षतम् ।
सत्रासं परुषं कृष्णं वैडूर्यं दूरतस्त्यजेत् ॥ १३.१९३
घृष्टं यदात्मना स्वच्छं स्वछायां निकषाश्मनि ।
स्फुटं प्रदर्शयेदेतद्वैडूर्यं जात्यमुच्यते ॥ १३.१९४
माणिक्यं पद्मबन्धोरतिविमलतमं मौक्तिकं शीतभानोर्माहेयस्य प्रवालं मरकतमतुलं कल्पयेदिन्दुसूनोः ।
देवेज्ये पुष्परागं कुलिशमपि कवेर्नीलमर्कात्मजस्य स्वर्भानोश्चापि गोमेदकमथ विदुरोद्भावितं किंतु केतोः ॥ १३.१९५
इत्थमेतानि रत्नानि तत्तदुद्देशतः क्रमात् ।
यो दद्याद्बिभृयाद्वापि तस्मिन् सानुग्रहा ग्रहाः ॥ १३.१९६

संत्यज्य वज्रमेकं सर्वत्रान्यत्र संघाते ।
लाघवमथ कोमलता साधारणदोष एव विज्ञेयः ॥ १३.१९७
लोहितकवज्रमौक्तिकमरकतनीला महोपलाः पञ्च ।
वैडूर्यपुष्परागप्रवालगोमेदकादयोऽर्वाञ्चः ॥ १३.१९८
गोमेदप्रवालवायव्यं देवेज्यमणीन्द्रतरणिकान्तादयाः ।
नानावर्णगुणाढ्या विज्ञेयाः स्फटिकजातयः प्राज्ञैः ॥ १३.१९९
स्फटिकः सितोपलः स्यादमलमणिर्निर्मलोपलः स्वच्छः ।
स्वच्छमणिरमलरत्नं निस्तुषरत्नं शिवप्रियं नवधा ॥ १३.२००
स्फटिकः समवीर्यश्च पित्तदाहार्तिदोषनुत् ।
तस्याक्षमाला जपतां दत्ते कोटिगुणं फलम् ॥ १३.२०१
यद्गङ्गातोयबिन्दुछविविमलतमं निस्तुषं नेत्रहृद्यं स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्तदाहास्रहारि ।
पाषाणैर्यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात्तज्जात्यं जात्वलभ्यं शुभमुपचिनुते शैवरत्नं विचित्रम् ॥ १३.२०२
अथ भवति सूर्यकान्तस्तपनमणिस्तपनश्च रविकान्तः ।
दीप्तोपलोऽग्निगर्भो ज्वलनाश्माऽर्कोपलश्च वसुनामा ॥ १३.२०३
सूर्यकान्तो भवेदुष्णो निर्मलश्च रसायनः ।
वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः ॥ १३.२०४
शुद्धः स्निग्धो निर्व्रणो निस्तुषोऽन्तर्यो निर्मृष्टो व्योम्नि नैर्मल्यमेति ।
यः सूर्यांशुस्पर्शनिष्ठ्यूतवह्निर्जात्यः सोऽयं जायते सूर्यकान्तः ॥ १३.२०५
वैक्रान्तं चैव विक्रान्तं नीचवज्रं कुवज्रकम् ।
गोनासः क्षुद्रकुलिशं चूर्णवज्रं च गोनसः ॥ १३.२०६
वज्राभावे च वैक्रान्तं रसवीर्यादिके समम् ।
क्षयकुष्ठविषघ्नं च पुष्टिदं सुरसायनम् ॥ १३.२०७
वज्राकारतयैव प्रसह्य हरणाय सर्वरोगाणाम् ।
यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥ १३.२०८
इन्द्रकान्तश्चन्द्रकान्तश्चन्द्राश्मा चन्द्रजोपलः ।
शीताश्मा चन्द्रिकाद्रावः शशिकान्तश्च सप्तधा ॥ १३.२०९
चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रतापहृत् ।
शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविनाशकृत् ॥ १३.२१०
स्निग्धं श्वेतं पीतमात्रासमेतं धत्ते चित्ते स्वच्छतां यन्मुनीनाम् ।
यच्च स्रावं याति चन्द्रांशुसङ्गाज्जात्यं रत्नं चन्द्रकान्ताख्यमेतत् ॥ १३.२११
राजावर्तो नृपावर्तो राजन्यावर्तकस्तथा ।
आवर्तमणिरावर्तः स्यादित्येषः शराह्वयः ॥ १३.२१२
राजावर्तः कटुः स्निग्धः शिशिरः पित्तनाशनः ।
सौभाग्यं कुरुते नृणां भूषणेषु प्रयोजितः ॥ १३.२१३
निर्गारमसितमसृणं नीलं गुरु निर्मलं बहुछायम् ।
शिखिकण्ठसमं सौम्यं राजावर्तं वदन्ति जात्यमणिम् ॥ १३.२१४
पेरोजं हरिताश्मं च भस्माङ्गं हरितं द्विधा ।
पेरोजं सुकषायं स्यान्मधुरं दीपनं परम् ॥ १३.२१५
स्थावरं जङ्गमं चैव संयोगाच्च यथा विषम् ।
तत्सर्वं नाशयेत्शीघ्रं शूलं भूतादिदोषजम् ॥ १३.२१६
सिद्धाः पारदमभ्रकं च विविधान् धातूंश्च लोहानि च प्राहुः किंच मणीनपीह सकलान् संस्कारतः सिद्धिदान् ।
यत्संस्कारविहीनमेषु हि भवेद्यच्चान्यथा संस्कृतं तन्मर्त्यं विषवन्निहन्ति तदिह ज्ञेया बुधैः संस्क्रियाः ॥ १३.२१७
यान् संस्कृतान् शुभगुणानथ चान्यथा चेद्दोषांश्च यानपि दिशन्ति रसादयोऽमी ।
याश्चेह सन्ति खलु संस्कृतयस्तदेतन्नात्राभ्यधायि बहुविस्तरभीतिभाग्भिः ॥ १३.२१८
इति लोहधातुरसरत्नतद्भिदादयभिधागुणप्रकटनस्फुटाक्षरम् ।

अवधार्य वर्गमिममाद्यवैद्यकप्रगुणप्रयोगकुशलो भवेद्बुधः ॥ १३.२१९
कुर्वन्ति ये निजगुणेन रसाध्वगेन नृणां जरन्त्यपि वपूंषि पुनर्नवानि ।
तेषामयं निवसतिः कनकादिकानां वर्गः प्रसिध्यति रसायनवर्गनाम्ना ॥ १३.२२०
नित्यं यस्य गुणाः किलान्तरलसत्कल्याणभूयस्तथा चित्ताकर्षणचञ्चवस्त्रिभुवनं भूम्ना परिकुर्वते ।
तेनात्रैष कृते नृसिंहकृतिना नामादिचूडामणौ संस्थामेति मितस्त्रयोदशतया वर्गः सुवर्णादिकः ॥ १३.२२१

राजनिघण्टु, पानीयादिवर्गः
पानीयजीवनवनामृतपुष्कराम्भःपाथोऽम्बुशम्बरपयःसलिलोदकानि ।
आपः कवारुणकबन्धजलानि नीरकीलालवारिकमलानि विषार्णसी च ॥ १४.१
भुवनं दहनारातिर्वास्तोयं सर्वतोमुखं क्षीरम् ।
घनरसनिम्नगमेघप्रसवरसाश्चेति वह्निमिताः ॥ १४.२
पानीयं मधुरं हिमं च रुचिदं तृष्णाविशोषापहं मोहभ्रान्तिमपाकरोति कुरुते भुक्तान्नपक्तिं पराम् ।
निद्रालस्यनिरासनं विषहरं श्रान्तातिसंतर्पणं नृणां धीबलवीर्यतुष्टिजननं नष्टाङ्गपुष्टिप्रदम् ॥ १४.३
दिव्योदकं खरारि स्यादाकाशसलिलं तथा ।
व्योमोदकं चान्तरिक्षजलं चेष्वभिधाह्वयम् ॥ १४.४
व्योमोदकं त्रिदोषघ्नं मधुरं पथ्यदं परम् ।
रुच्यं दीपनदं तृष्णाश्रममेहापहारकम् ॥ १४.५
सद्योवृष्ट्यम्बु भूमिस्थं कलुषं दोषदायकम् ।
चिरस्थितं लघु स्वच्छं पथ्यं स्वादु सुखावहम् ॥ १४.६
यादोनाथसमुद्रसिन्धुजलदाकूपारपाथोधयः पारावारपयोधिसागरसरिन्नाथाश्च वारां निधिः ।
अम्भोराशिसरस्वदम्बुधिनदीनाथाब्धिनित्यार्णवोदन्वद्वारिधिवार्धयः कधिरपांनाथोऽपि रत्नाकरः ॥ १४.७
सागरसलिलं विस्रं लवणं रक्तामयप्रदं चोष्णम् ।
वैवर्ण्यदोषजननं विशेषाद्दाहार्तिपित्तकरणं च ॥ १४.८
नदी धुनी निर्झरिणी तरंगिणी सरस्वती शैवलिनी समुद्रगा ।
कूलंकषा कूलवती च निम्नगा शैवालिनी सिन्धुरथापगापि च ॥ १४.९
ह्रदिनी समुद्रकान्ता सागरगा ह्रादिनी सरित्कर्षूः ।
स्रोतस्विनी सुनीरा रोधोवक्रा च वाहिनी तटिनी ॥ १४.१०
नादेयं सलिलं स्वच्छं लघु दीपनपाचनम् ।
रुच्यं तृष्णापहं पथ्यं मधुरं चेषदुष्णकम् ॥ १४.११
गङ्गा भानुसुता रेवा चन्द्रभागा सरस्वती ।
मधुमती विपाशाथ शोणो घर्घरकस्तथा ॥ १४.१२
वेत्रावती क्षौद्रवती पयोष्णी तापी वितस्ता सरयूश्च सिन्धुः ।
महाशतद्रुर्ह्यथ गौतमी स्यात्कृष्णा च तुङ्गा च कवेरिकन्या ॥ १४.१३
इत्येवमाद्याः सरितः समस्तास्तडागवापीह्रदकूपकाद्याः ।
अन्येऽप्यनूपात्मकदेशभेदाः कौलाभिधानैः स्वयमूहनीयाः ॥ १४.१४
धाराकारादिकातोयमन्तरिक्षोद्भवं तथा ।
परीक्ष्येत यथा चोक्तं ज्ञातव्यं जलवेदिभिः ॥ १४.१५
गङ्गा स्वर्गसरिद्वरा त्रिपथगा मन्दाकिनी जाह्नवी पुण्या विष्णुपदी समुद्रसुभगा भागीरथी स्वर्णदी ।
त्रिःस्रोता सुरदीर्घिका सुरनदी सिद्धापगा स्वर्धुनी ज्येष्ठा जह्नुसुता च भीष्मजननी शुभ्रा च शैलेन्द्रजा ॥ १४.१६
शीतं स्वादु स्वच्छमत्यन्तरुच्यं पथ्यं पाक्यं पावनं पापहारि ।
तृष्णामोहध्वंसनं दीपनं च प्रज्ञां दत्ते वारि भागीरथीयम् ॥ १४.१७
यमुना तपनतनुजा कलिन्दकन्या यमस्वसा च कालिन्दी ॥ १४.१८
पित्तदाहवमनश्रमापहं स्वादु वातजननं च पाचनम् ।
वह्निदीपनकरं विरोचनं यामुनं जलमिदं बलप्रदम् ॥ १४.१९
रेवा मेकलकन्या सोमसुता नर्मदा च विज्ञेया ॥ १४.२०
सलिलं शीतलं सुपथ्यं कुरुते पित्तकफप्रकोपणम् ।
सकलामयमर्दनं च रुच्यं मधुरं मेकलकन्यकासमुत्थम् ॥ १४.२१
चान्द्रभागसलिलं सुशीतलं दाहपित्तशमनं च वातदम् ॥ १४.२२
सरस्वती प्लक्षसमुद्भवा च सा वाक्प्रदा ब्रह्मसती च भारती ।
वेदाग्रणीश्चैव पयोष्णिजाता वाणी विशाला कुटिला दशाह्वा ॥ १४.२३
सरस्वतीजलं स्वादु पूतं सर्वरुजापहम् ।

रुच्यं दीपनदं पथ्यं देहकान्तिकरं लघु ॥ १४.२४
चान्द्रभागगुणसाम्यदं जलं किंच माधुमतमग्निदीपनम् ॥ १४.२५
शतद्रोर्विपाशायुजः सिन्धुनद्याः सुशीतं लघु स्वादु सर्वामयघ्नम् ।
जलं निर्मलं दीपनं पाचनं च प्रदत्ते बलं बुद्धिमेधायुषं च ॥ १४.२६
शोणे घर्घरके जलं तु रुचिदं संतापशोषापहं पथ्यं वह्निकरं तथा च बलदं क्षीणाङ्गपुष्टिप्रदम् ।
तत्रान्या दधते जलं सुमधुरं कान्तिप्रदं पुष्टिदं वृष्यं दीपनपाचनं बलकरं वेत्रावती तापिनी ॥ १४.२७
पयोष्णीसलिलं रुच्यं पवित्रं पापनाशनम् ।
सर्वामयहरं सौख्यं बलकान्तिप्रदं लघु ॥ १४.२८
वितस्तासलिलं स्वादु त्रिदोषशमनं लघु ।
प्रज्ञाबुद्धिप्रदं पथ्यं तापजाड्यहरं परम् ॥ १४.२९
सरयूसलिलं स्वादु बलपुष्टिप्रदायकम् ॥ १४.३०
गोदावरी गौतमसम्भवा सा ब्रह्मादिजाताप्यथ गौतमी च ॥ १४.३१
पित्तार्तिरक्तार्तिसमीरहारि पथ्यं परं दीपनपापहारि ।
कुष्ठादिदुष्टामयदोषहारि गोदावरीवारि तृषानिवारि ॥ १४.३२
कृष्णानदी कृष्णसमुद्भवा स्यात्सा कृष्णवेणापि च कृष्णगङ्गा ॥ १४.३३
काष्र्ण्यं जाड्यकरं स्वादु पूतं पित्तास्रकोपनम् ।
कृष्णवेणाजलं स्वच्छं रुच्यं दीपनपाचनम् ॥ १४.३४
मलापहा भीमरथी च घट्टगा यथा च कृष्णाजलसाम्यदा गुणैः ।
मलापहाघट्टगयोस्तथापि पथ्यं लघु स्वादुतरं सुकान्तिदम् ॥ १४.३५
तुङ्गभद्राजलं स्निग्धं निर्मलं स्वाददं गुरु ।
कण्डूपित्तास्रदं प्रायः सात्म्ये पथ्यकरं परम् ॥ १४.३६
कावेरीसलिलं स्वादु श्रमघ्नं लघु दीपनम् ।
दद्रुकुष्ठादिदोषघ्नं मेधाबुद्धिरुचिप्रदम् ॥ १४.३७
नदीनामित्थमन्यासां देशदोषादिभेदतः ।
तत्तद्गुणान्वितं वारि ज्ञातव्यं कृतबुद्धिभिः ॥ १४.३८
सर्वा गुर्वी प्राङ्मुखी वाहिनी या लघ्वी पश्चाद्वाहिनी निश्चयेन ।
देशे देशे तद्गुणानां विशेषादेषा धत्ते गौरवं लाघवं च ॥ १४.३९
विन्ध्यात्प्राची याप्यवाची प्रतीची या चोदीची स्यान्नदी सा क्रमेण ।
वाताटोपं श्लेष्मपित्तार्तिलोपं पित्तोद्रेकं पथ्यपाकं च धत्ते ॥ १४.४०
हिमवति मलयाचले च विन्ध्ये प्रभवति सह्यगिरौ च या स्रवन्ती ।
सृजति किल शिरोरुजादिदोषानपनुदतेऽपि च पारियात्रजाता ॥ १४.४१
नद्यः प्रावृषिजास्तु पीनसकफश्वासार्तिकासप्रदाः पथ्या वातकफापहाः शरदिजा हेमन्तजा बुद्धिदाः ।
संतापं शमयन्ति शं विदधते शैशिर्यवासन्तजास्तृष्णादाहवमिश्रमार्तिशमदा ग्रीष्मे यथा सद्गुणाः ॥ १४.४२
अनूपसलिलं स्वादु स्निग्धं पित्तहरं गुरु ।
तनोति पामकण्डूतिकफवातज्वरामयान् ॥ १४.४३
जाङ्गलसलिलं स्वादु त्रिदोषघ्नं रुचिप्रदम् ।
पथ्यं चायुर्बलवीर्यपुष्टिदं कान्तिकृत्परम् ॥ १४.४४
साधारणं जलं रुच्यं दीपनं पाचनं लघु ।
श्रमतृष्णापहं वातकफमेदोघ्नपुष्टिदम् ॥ १४.४५
जातं ताम्रमृदस्तदेव सलिलं वातादिदोषप्रदं देशाज्जाड्यकरं च दुर्जरतरं दोषावहं धूसरम् ।
वातघ्नं तु शिलाशिरोत्थममलं पथ्यं लघु स्वादु च श्रेष्ठं श्याममृदस्त्रिदोषशमनं सर्वामयघ्नं पयः ॥ १४.४६
ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यं च ॥ १४.४७
प्रस्रवणजलं स्वच्छं लघु मधुरं रोचनं च दीपनकृत् ॥ १४.४८
तडागसलिलं स्वादु कषायं वातदं कियत् ॥ १४.४९
वापीजलं तु संतापि वातश्लेष्मकरं गुरु ॥ १४.५०

कफघ्नं कूपपानीयं क्षारं पित्तकरं लघु ॥ १४.५१
औद्भिदं पित्तशमनं सलिलं लघु च स्मृतम् ॥ १४.५२
केदारसलिलं स्वादु विपाके दोषदं गुरु ।
तदेव बद्धमुक्तं तु विशेषाद्दोषदं भवेत् ॥ १४.५३
नादेयं नवमृद्घटेषु निहितं संतप्तमर्कांशुभिर्यामिन्यां च निविष्टमिन्द्रकिरणैर्मन्दानिलान्दोलितम् ।
एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे मूर्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम् ॥ १४.५४
यः पानीयं पिबति शिशिरं स्वादु नित्यं निशीथे प्रत्यूषे वा पिबति यदि वा घ्राणरन्ध्रेण धीरः ।
सोऽयं सद्यः पतगपतिना स्पर्धते नेत्रशक्त्या स्वर्गाचार्यं प्रहसति धिया द्वेष्टि दस्रौ च तन्वा ॥ १४.५५
विण्मूत्रारुणनीलिकाविषहतं तप्तं घनं फेनिलं दन्तग्राह्यमनार्तवं सलवणं शैवालकैः संवृतम् ।
जन्तुव्रातविमिश्रितं गुरुतरं पर्णौघपङ्काविलं चन्द्रार्कांशुतिरोहितं च न पिबेन्नीरं जडं दोषलम् ॥ १४.५६
पार्श्वशूले प्रतिश्याये वातदोषे नवज्वरे ।
हिक्काध्मानादिदोषेषु शीताम्बु परिवर्जयेत् ॥ १४.५७
धातुक्षये रक्तविकारदोषे वान्त्यस्रमेहे विषविभ्रमेषु ।
जीर्णज्वरे शैथिल्यसंनिपाते जलं प्रशस्तं शृतशीतलं तु ॥ १४.५८
तप्तं पाथः पादभागेन हीनं प्रोक्तं पथ्यं वातजातामयघ्नम् ।
अर्धांशोनं नाशयेद्वातपित्तं पादप्रायं तत्तु दोषत्रयघ्नम् ॥ १४.५९
हेमन्ते पादहीनं तु पादार्धोनं तु शारदे ।
प्रावृड्वसन्ते शिशिरे ग्रीष्मे चार्धावशेषितम् ॥ १४.६०
कौपं प्रास्रवणं वापि शिशिरर्तुवसन्तयोः ।
ग्रीष्मे चौडं तु सेवेत दोषदं स्यादतोऽन्यथा ॥ १४.६१
तप्तं दिवा जाड्यमुपैति नक्तं नक्तं च तप्तं तु दिवा गुरु स्यात् ।
दिवा च नक्तं च नृभिस्तदात्वतप्तं जलं युक्तमतो ग्रहीतुम् ॥ १४.६२
उष्णं क्वापि क्वापि शीतं कवोष्णं क्वापि क्वापि क्वाथशीतं च पाथः ।
इत्थं नृणां पथ्यमेतत्प्रयुक्तं कालावस्थादेहसंस्थानुरोधात् ॥ १४.६३
अपनयति पवनदोषं दलयति कफमाशु नाशयत्यरुचिम् ।
पाचयति चान्नमनलं पुष्णाति निशीथपीतमुष्णाम्भः ॥ १४.६४
रात्रौ पीतमजीर्णदोषशमनं शंसन्ति सामान्यतः पीतं वारि निशावसानसमये सर्वामयध्वंसनम् ।
भुक्त्वा तूर्ध्वमिदं च पुष्टिजननं प्राक्चेदपुष्टिप्रदं रुच्यं जाठरवह्निपाटवकरं पथ्यं च भुक्त्यन्तरे ॥ १४.६५
अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ १४.६६
जलं चतुर्विधं प्राहुरन्तरिक्षोद्भवं बुधाः ।
धारं च कारकं चैव तौषारं हैममित्यपि ॥ १४.६७
अम्बु वर्षोद्भवं धारं कारं वर्षोपलोद्भवम् ।
नीहारतोयं तौषारं हैमं प्रातर्हिमोद्भवम् ॥ १४.६८
धारं च द्विविधं प्रोक्तं गाङ्गसामुद्रभेदतः ।
तत्र गाङ्गं गुणाढ्यं स्यातदोषं पाचनं परम् ॥ १४.६९
यदा स्यादाश्विने मासि सूर्यः स्वातिविशाखयोः ।
तदाम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥ १४.७०
अन्यदा मृगशीर्षादिनक्षत्रेषु यदम्बुदैः ।
अभिवृष्टमिदं तोयं सामुद्रमिति शब्दितम् ॥ १४.७१
धाराधरे वर्षति रौप्यपात्रे विन्यस्य शाल्योदनसिद्धपिण्डे ।
दध्नोपदिग्धे निहितं मुहूर्तादविक्रियं गाङ्गमथान्यथा स्यात् ॥ १४.७२
गाङ्गं जलं स्वादु सुशीतलं च रुचिप्रदं पित्तकफापहं च ।
निर्दोषमच्छं लघु तच्च नित्यं गुणाधिकं व्योम्नि गृहीतमाहुः ॥ १४.७३
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं लघु ।

मूर्छापित्तास्रदाहेषु हितं कासमदात्यये ॥ १४.७४
सामुद्रसलिलं शीतं कफवातप्रदं गुरु ।
चित्रायामाश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥ १४.७५
पतितं भुवि यत्तोयं गाङ्गं सामुद्रमेव वा ।
स्वस्वाश्रयवशाद्गच्छेदन्यदन्यद्रसादिकम् ॥ १४.७६
अस्रं च लवणं च स्यात्पतितं पार्थिवस्थले ।
आप्ये तु मधुरं प्रोक्तं कटु तिक्तं च तैजसे ॥ १४.७७
कषायं वायवीये स्यादव्यक्तं नाभसे स्मृतम् ।
तत्र नाभसमेवोक्तमुत्तमं दोषवर्जितम् ॥ १४.७८
यत्र चेदाश्विने मासि नैव वर्षति वारिदः ।
गाङ्गतोयविहीने स्युः काले तत्राधिका रुजः ॥ १४.७९
क्वचिदुष्णं क्वचिच्छीतं क्वचित्क्वथितशीतलम् ।
क्वचिद्भेषजसंयुक्तं न क्वचिद्वारि वार्यते ॥ १४.८०
इक्षवः पञ्चधा प्रोक्ता नानावर्णगुणान्विताः ।
सितः पुण्ड्रः करङ्केक्षुः कृष्णो रक्तश्च ते क्रमात् ॥ १४.८१
इक्षुः कर्कटको वंशः कान्तारः सुकुमारकः ।
असिपत्रो मधुतृणो वृष्यो गुडतृणो नव ॥ १४.८२
श्वेतेक्षुस्तु सितेक्षुः स्यात्काष्ठेक्षुर्वंशपत्रकः ।
सुवंशः पाण्डुरेक्षुश्च काण्डेक्षुर्धवलेक्षुकः ॥ १४.८३
सितेक्षुः कठिनो रुच्यो गुरुश्च कफमूत्रकृत् ।
दीपनः पित्तदाहघ्नो विपाके कोष्णदः स्मृतः ॥ १४.८४
पुण्ड्रकस्तु रसालः स्यात्रसेक्षुः सुकुमारकः ।
कर्बुरो मिश्रवर्णश्च नेपालेक्षुश्च सप्तधा ॥ १४.८५
पुण्ड्रोऽतिमधुरः शीतः कफकृत्पित्तनाशनः ।
दाहश्रमहरो रुच्यो रसे संतर्पणः परः ॥ १४.८६
अन्यः करङ्कशालिः स्यादिक्षुवाटीक्षुवाटिका ।
यावनी चेक्षुयोनिश्च रसाली रसदालिका ॥ १४.८७
करङ्कशालिर्मधुरः शीतलो रुचिकृन्मृदुः ।
पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः ॥ १४.८८
कृष्णेक्षुरिक्षुरः प्रोक्तः श्यामेक्षुः कोकिलाक्षकः ।
श्यामवंशः श्यामलेक्षुः कोकिलेक्षुश्च कथ्यते ॥ १४.८९
कृष्णेक्षुरुक्तो मधुरश्च पाके स्वादुः सुहृद्यः कटुको रसाढ्यः ।
त्रिदोषहारी शमवीर्यदश्च सुबल्यदायी बहुवीर्यदायी ॥ १४.९०
रक्तेक्षुः सूक्ष्मपत्रश्च शोणो लोहित उत्कटः ।
मधुरो ह्रस्वमूलश्च लोहितेक्षुश्च कीर्तितः ॥ १४.९१
लोहितेक्षुश्च मधुरः पाके स्याच्छीतलो मृदुः ।
पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः ॥ १४.९२
इक्षुमूलं त्विक्षुनेत्रं तच्च मोरटकं तथा ।
वंशनेत्रं वंशमूलं मोरटं वंशपूरकम् ॥ १४.९३
मूलादूर्द्ध्वन्तु मधुरा मध्येऽतिमधुरास्तथा ।
इक्षवस्तेऽग्रभागेषु क्रमाल्लवणनीरसाः ॥ १४.९४
अभुक्ते पित्तहाश्चैते भुक्ते वातप्रकोपणाः ।
भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रयः ॥ १४.९५
वृष्यो रक्तास्रपित्तश्रमशमनपटुः शीतलः श्लेस्मदोऽल्पः स्निग्धो हृद्यश्च रुच्यो रचयति च मुदं सूत्रशुद्धिं विधत्ते ।
कान्तिं देहस्य दत्ते बलमति कुरुते बृंहणं तृप्तिदायी दन्तैर्निष्पीड्य काण्डं मृदुयतिरसितो मोहनश्चेक्षुदण्डः ॥ १४.९६

पीयूषोपमितं त्रिदोषशमनं स्याद्दन्तनिष्पीडितं तद्वच्चेद्गृहयन्त्रजं तदपरं श्लेस्मानिलघ्नं कियत् ।
एतद्वातहरं तु वातजननं जाड्यप्रतिश्वायदं प्रोक्तं पर्युषितं कफानिलकरं पानीयमिक्षुद्भवम् ॥ १४.९७
मधुरं लवणक्षारं स्निग्धं सोष्णं रुचिप्रदम् ।
वृष्यं वातकफघ्नं च यावनालशरात्रसम् ॥ १४.९८
पक्वेक्षुरसः स्निग्धः स्यात्कफवातनाशनोऽतिगुरुः ।
अतिपाकेन विदाहं तनुते पित्तास्रदोषशोषांश्च ॥ १४.९९
गुडः स्यादिक्षुसारस्तु मधुरो रसपाकजः ।
शिशुप्रियः सितादिः स्यादरुणो रसजः स्मृतः ॥ १४.१००
पित्तघ्नः पवनार्तिजिद्रुचिकरो हृद्यस्त्रिदोषापहः संयोगेन विशेषतो ज्वरहरः संतापशान्तिप्रदः ।
विण्मूत्रामयशोधनोऽग्निजननः पाण्डुप्रमेहान्तकः स्निग्धः स्वादुतरो लघुः श्रमहरः पथ्यः पुराणो गुडः ॥ १४.१०१
स्याद्यावनालरसपाकभवो गुडोऽयं क्षारः कटुः सुमधुरः कफवातहारी ।
पित्तप्रदः सततमेष निषेव्यमाणः कण्डूतिकुष्ठजननोऽस्रविदाहहारी ॥ १४.१०२
शर्करोक्ता तु मीनाण्डी श्वेता मत्स्यण्डिका च सा ।
अहिच्छत्रा तु सिकता सिता चैव गुडोद्भवा ॥ १४.१०३
शर्करा मधुरा शीता पित्तदाहश्रमापहा ।
रक्तदोषहरा भ्रान्तिक्रिमिकोपप्रणाशिनी ॥ १४.१०४
स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षयेऽरोचके चक्षुष्या बलवर्धिनी सुमधुरा रूक्षा च वंशेक्षुजा ।
वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला स्निग्धा कान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥ १४.१०५
यावनाली हिमोत्पन्ना हिमानी हिमशर्करा ।
क्षुद्रशर्करिका क्षुद्रा गुद्गुडा जालबिन्दुजा ॥ १४.१०६
हिमजा शर्करा गौल्या सोष्णा तिक्तातिपिच्छिला ।
वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ॥ १४.१०७
सितजान्या शर्करजा माधवी मधुशर्करा ।
माक्षीकशर्करा प्रोक्ता सिताखण्डश्च खण्डकः ॥ १४.१०८
सिताखण्डोऽतिमधुरश्चक्षुष्यः छर्दिनाशनः ।
कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषनुत् ॥ १४.१०९
यवासशर्करा त्वन्या सुधा मोदकमोदकः ।
तवराजः खण्डसारः खण्डजा खण्डमोदकः ॥ १४.११०
तवराजोऽतिमधुरः पित्तश्रमतृषापहः ।
वृष्यो विदाहमूर्छार्तिभ्रान्तिशान्तिकरः सरः ॥ १४.१११
तवराजोद्भवः खण्डः सुधा मोदकजस्तथा ।
खण्डजो द्रवजः सिद्धमोदकामृतसारजः ॥ १४.११२
दाहं निवारयति तापमपाकरोति तृप्तिं नियच्छति निहन्ति च मोहमूर्छाम् ।
श्वासं निवारयति तर्पयतीन्द्रियाणि शीतः सदा सुमधुरः खलु सिद्धिखण्डः ॥ १४.११३
मधु क्षौद्रं च माक्षीकं माक्षिकं कुसुमासवम् ।
पुष्पासवं पवित्रं च पित्र्यं पुष्परसाह्वयम् ॥ १४.११४
माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्त्रकं तथा ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ १४.११५
नानापुष्परसाहाराः कपिला वनमक्षिकाः ।
याः स्थूलास्ताभिरुत्पन्नं मधु माक्षिकमुच्यते ॥ १४.११६
ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः ।
भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते ॥ १४.११७
पिङ्गला मक्षिकाः सूक्ष्माः क्षुद्रा इति हि विश्रुताः ।
ताभिरुत्पादितं यत्तु तत्क्षौद्रं मधु कथ्यते ॥ १४.११८
अन्नजा मक्षिकाः पिङ्गाः पुत्तिका इति कीर्तिताः ।

तज्जातं मधु धीमद्भिः पौत्तिकं समुदाहृतम् ॥ १४.११९
छत्त्राकारं तु पटलं सरघाः पीतपिङ्गलाः ।
यत्कुर्वन्ति तदुत्पन्नं मधु छात्त्रकमीरितम् ॥ १४.१२०
मक्षिकास्तीक्ष्णतुण्डा यास्तथा षट्पदसंनिभाः ।
तदुद्भूतं यदर्घार्हं तदार्घ्यं मधु वर्ण्यते ॥ १४.१२१
औद्दालाः कपिलाः कीटा भूमेरुद्दलनाः स्मृताः ।
वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्यते ॥ १४.१२२
इन्द्रनीलदलाकाराः सूक्ष्माश्चिन्वन्ति मक्षिकाः ।
यद्वृक्षकोटरान्तस्थं मधु दालमिदं स्मृतम् ॥ १४.१२३
इत्येतस्याष्टधा भेदैरुत्पत्तिः कथिता क्रमात् ।
अथ वक्ष्याम्यहं तेषां वर्णवीर्यादिकं क्रमात् ॥ १४.१२४
माक्षिकं तैलवर्णं स्यात्श्वेतं भ्रामरमुच्यते ।
क्षौद्रं तु कपिलाभासं पौत्तिकं घृतसंनिभम् ॥ १४.१२५
आपीतवर्णं छात्त्रं स्यात्पिङ्गं चार्घ्यनामकम् ।
औद्दालं स्वर्णसदृशमापीतं दालमुच्यते ॥ १४.१२६
माक्षिकं मधुरं रूक्षं लघु श्वासादिदोषनुत् ।
भ्रामरं पिच्छिलं रूक्षं मधुरं मुखजाड्यजित् ॥ १४.१२७
क्षौद्रं तु शीतं चक्षुष्यं पिच्छिलं पित्तवातहृत् ।
पौत्तिकं मधु रूक्षोष्णमस्रपित्तादिदाहकृत् ॥ १४.१२८
श्वित्रमेहक्रिमिघ्नं च विद्याच्छात्त्रं गुणोत्तरम् ।
आर्घ्यमध्वतिचक्षुष्यं कफपित्तादिदोषहृत् ॥ १४.१२९
औद्दालकं तु कुष्ठादिदोषघ्नं सर्वसिद्धिदम् ।
दालं कटु कषायाम्लं मधुरं पित्तदायि च ॥ १४.१३०
नवं मधु भवेत्स्थौल्यं नातिश्लेष्मकरं परम् ।
देहस्थौल्यापहं ग्राहि पुराणं मधु लेखनम् ॥ १४.१३१
पक्वं दोषत्रयघ्नं मधु विविधरुजाजाड्यजिह्वामयादिध्वंसं धत्ते च रुच्यं बलमतिधृतिदं वीर्यवृद्धिं विधत्ते ।
आमं चेदामगुल्मामयपवनरुजापित्तदाहास्रदोषं हन्याद्वातं च शोषं जनयति नियतं ध्वंसयत्यन्तवृद्धिम् ॥ १४.१३२
व्रणशोधनसंधाने व्रणसंरोपणादिषु ।
साधारण्या मधु हितं तत्तुल्या मधुशर्करा ॥ १४.१३३
उष्णैः सहोष्णकाले वा स्वयमुष्णमथापि वा ।
आमं मधु मनुष्याणां विषवत्तापदायकम् ॥ १४.१३४
कीटकादियुतमम्लदूषितं यच्च पर्युषितकं मधु स्वतः ।
कण्टकोटरगतं च मेचकं तच्च गेहजनितं च दोषकृत् ॥ १४.१३५
दण्डैर्निहत्य यदुपात्तमपास्तदंशं तादृग्विधं मधु रसायनयोगयोग्यम् ।
हिक्कागुदाङ्कुरविशोफकफव्रणादिदोषापहं भवति दोषदमन्यथा चेत् ॥ १४.१३६
माध्वी सिता मधूत्पन्ना मधुजा मधुशर्करा ।
माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥ १४.१३७
यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।
विशेषाद्बलवृष्यं च तर्पणं क्षीणदेहिनाम् ॥ १४.१३८
मद्यं सुरा प्रसन्ना स्यान्मदिरा वारुणी वरा ।
मत्ता कादम्बरी शीता चपला कामिनी प्रिया ॥ १४.१३९
मदगन्धा च माध्वीकं मधु संधानमासवः ।
परिसृतामृता वीरा मेधावी मदनी च सा ॥ १४.१४०
सुप्रतिभा मनोज्ञा च विपाना मोदिनी तथा ।
हालाहलगुणारिष्टं सरकोऽथ मधूलिका ।

मदोत्कटा महानन्दा द्वात्रिंशदभिधाः क्रमात् ॥ १४.१४१
मद्यं सुमधुराम्लं च कफमारुतनाशनम् ।
बलदीप्तिकरं हृद्यं सरमेतन्मदावहम् ॥ १४.१४२
स्याद्धातकीरसगुडादिकृता तु गौडी पुष्पद्रवादिमधुसारमयी तु माध्वी ।
पैष्टी पुनर्विविधधान्यविकारजाता ख्याता मदाधिकतयात्र च पूर्वपूर्वा ॥ १४.१४३
तालादिरसनिर्यासैः सैन्धीं हालां सुरां जगुः ।
नानाद्रव्यकदम्बेन मद्यं कादम्बरं स्मृतम् ।
सैन्धी कादम्बरी चैव द्विविधं मद्यलक्षणम् ॥ १४.१४४
गौडी तीक्ष्णोष्णमधुरा वातहृत्पित्तकारिणी ।
बलकृद्दीपनी पथ्या कान्तिकृत्तर्पणी परा ॥ १४.१४५
माध्वी तु मधुरा हृद्या नात्युष्णा पित्तवातहृत् ।
पाण्डुकामलगुल्मार्शःप्रमेहशमनी परा ॥ १४.१४६
पैष्टी कटूष्णा तीक्ष्णा स्यान्मधुरा दीपनी परा ॥ १४.१४७
सैन्धी शीता कषायाम्ला पित्तहृद्वातदा च सा ॥ १४.१४८
गौडी तु शिशिरे पेया पैष्टी हेमन्तवर्षयोः ।
शरद्ग्रीष्मवसन्तेषु माध्वी ग्राह्या न चान्यथा ॥ १४.१४९
कादम्बरीशर्करजादि मद्यं सुशीतलं वृष्यकरं मदाढ्यम् ।
माध्वीसमं स्यात्तृणवृक्षजातं मद्यं सुशीतं गुरु तर्पणं च ॥ १४.१५०
सर्वेषां तृणवृक्षाणां निर्यासं शीतलं गुरु ।
मोहनं बलकृद्धृद्यं तृष्णासंतापनाशनम् ॥ १४.१५१
ऐक्षवं तु भवेन्मद्यं शिशिरं च मदोत्कटम् ।
यवधान्यकृतं मद्यं गुरु विष्टम्भदायकम् ॥ १४.१५२
शर्कराधातकीतोये कृतं शीतं मनोहरम् ।
शार्करं कथ्यते मद्यं वृष्यं दीपनमोहनम् ॥ १४.१५३
अन्ये द्वादशधा मद्यभेदानाहुर्मनीषिणः ।
उक्तेष्वन्तर्भवन्तीति नान्यैस्तु पृथगीरिताः ॥ १४.१५४
मद्यं नवं सर्वविकारहेतुः सर्वं तु वातादिकदोषदायि ।
जीर्णं तु सर्वं सकलामयघ्नं बलप्रदं वृष्यकरं च दीपनम् ॥ १४.१५५
मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्तिषु ।
द्विजैस्त्रिभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम् ॥ १४.१५६
इत्थं वार्धिनदीनदह्रदसरःकुल्यादितीरान्तरप्रक्रान्तेक्षुगुडादिमाक्षिकभिदामद्यप्रभेदानपि ।
प्रागस्मात्प्रतिबुध्य नामगुणतो निर्णीतयोगौचिती याथातथ्यवशाद्विनिश्चितमनाः कुर्वीत वैद्यः क्रियाम् ॥ १४.१५७
यै रस्यमाना हि नृणां यथास्वं दोषान्निरस्यन्त्यपि दुर्निरासान् ।
तेषां रसानां वसतिः किलायं वर्गः प्रसिद्धो रसवर्गनाम्ना ॥ १४.१५८
निस्यन्दं दुग्धसिन्धावमृतमथ समस्तौषधीनां न दोहं तापाहं नो चिकित्सामभिलषति रसं नापि दोषाकरस्य ।
लब्ध्वा यत्सौहृदय्यं जगति बुधजनस्तेन वर्गः कृतोऽस्मिन् पानीयादिः प्रसिद्धिं व्रजति मनुमितो नामगीर्मौलिरत्ने ॥ १४.१५९

क्षीरं पीयूषमूधस्यं दुग्धं स्तन्यं पयोऽमृतम् ॥ १५.१
क्षीरजं दधि तद्रूप्यं विरलं मस्तु तज्जलम् ॥ १५.२
दधिजं नवनीतं स्यात्सारो हैयंगवीनकम् ॥ १५.३
घृतमाज्यं हविः सर्पिः पवित्रं नवनीतजम् ।
अमृतं चाभिघारश्च होम्यमायुश्च तैजसम् ॥ १५.४
म्रक्षणं स्नेहनं स्नेहः स्निग्धता म्रक्ष एव च ।
अभ्यङ्गोऽभ्यञ्जनं चैव चोपडश्च घृतादिकः ॥ १५.५
तक्रं गोरसजं घोलं कालशेयविलोडितम् ।
दण्डाहतमरिष्टोऽम्लमुदश्विन्मथितं द्रवः ॥ १५.६
तक्रं त्रिभागदधिसंयुतमम्बु धीरैरुक्तं दधिद्विगुणवारियुतं तु मस्तु ।
दध्यम्भसी यदि समे तदुदश्विदाहुस्तत्केवलं तु मथितं मुनयो वदन्ति ॥ १५.७
गोमूत्रं गोजलं गोम्भो गोनिष्यन्दश्च गोद्रवः ।
गोमयं गोपुरीषं स्याद्गोविष्ठा गोमलं च तत् ॥ १५.८
गोमहिषीछागलाविकगजतुरगखरोष्ट्रमानुषस्त्रीणाम् ।
क्षीरादिकगुणदोषौ वक्ष्ये क्रमतो यथायोगम् ॥ १५.९
गव्यं क्षीरं पथ्यमत्यन्तरुच्यं स्वादु स्निग्धं पित्तवातामयघ्नम् ।
कान्तिप्रज्ञाबुद्धिमेधाङ्गपुष्टिं धत्ते स्पष्टं वीर्यवृद्धिं विधत्ते ॥ १५.१०
गौल्यं तु महिषीक्षीरं विपाके शीतलं गुरु ।
बलपुष्टिप्रदं वृष्यं पित्तदाहास्रनाशनम् ॥ १५.११
अजानां लघुकायत्वान्नानाद्रव्यनिषेवणात् ।
नात्यम्बुपानाद्व्यायामात्सर्वव्याधिहरं पयः ॥ १५.१२
सूक्ष्माजदुग्धेति च संवदार्हं गोदुग्धवीर्यात्त्वधिकं गुणे च ।
सुक्षीणदेहेषु च पथ्यमुक्तं स्थूलाजदुग्धं किल किंचिदूनम् ॥ १५.१३
आविकं तु पयः स्निग्धं कफपित्तहरं परम् ।
स्थौल्यमेहहरं पथ्यं लोमशं गुरु वृद्धिदम् ॥ १५.१४
मधुरं हस्तिनीक्षीरं वृष्यं गुरु कषायकम् ।
स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥ १५.१५
अश्वीक्षीरं तु रूक्षाम्लं लवणं दीपनं लघु ।
देहस्थैर्यकरं बल्यं गौरवकान्तिकृत्परम् ॥ १५.१६
बलकृद्गर्दभीक्षीरं वातश्वासहरं परम् ।
मधुराम्लरसं रूक्षं दीपनं पथ्यदं स्मृतम् ॥ १५.१७
उष्ट्रीक्षीरं कुष्ठशोफापहं तत्पित्तार्शोघ्नं तत्कफाटोपहारि ।
आनाहार्तिजन्तुगुल्मोदराख्यं श्वासोल्लासं नाशयत्याशु पीतम् ॥ १५.१८
मधुरं मानुषीक्षीरं कषायं च हिमं लघु ।
चक्षुष्यं दीपनं पथ्यं पाचनं रोचनं च तत् ॥ १५.१९
क्षीरं कासश्वासकोपाय सर्वं गुर्वामं स्यात्प्रायशो दोषदायि ।
तच्चेत्तप्तं वर्तितं पथ्यमुक्तं नारीक्षीरं त्वाममेवामयघ्नम् ॥ १५.२०
उक्तं गव्यादिकं दुग्धं धारोष्णममृतोपमम् ।
सर्वामयहरं पथ्यं चिरसंस्थं तु दोषदम् ॥ १५.२१
केऽप्याविकं पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः ।
दोहान्तशीतं महिषीपयश्च गव्यं तु धारोष्णमिदं प्रशस्तम् ॥ १५.२२
वृष्यं बृंहणमग्निवर्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने बलदायकं कफहरं कृच्छ्रस्य विच्छेदकम् ।
बाल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्द्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा ॥ १५.२३
क्षीरं मुहूर्तत्रितयोषितं यदतप्तमेतद्विकृतिं प्रयाति ।

उष्णं तु दोषं कुरुते तदूर्ध्वं विषोपमं स्यादुषितं दशानाम् ॥ १५.२४
जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानुषम् ॥ १५.२५
चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्तितमुत्तमं तत् ।
सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम् ॥ १५.२६
गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम् ।
क्षीरं सशर्करं पथ्यं यद्वा सात्म्ये च सर्वदा ॥ १५.२७
पित्तघ्नं शृतशीतलं कफहरं पक्वं तदुष्णं भवेच्छीतं यत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदम् ।
धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्निवर्धनमतिस्वादु त्रिदोषापहम् ॥ १५.२८
क्षीरं न युञ्जीत कदाप्यतप्तं तप्तं न चैतल्लवणेन सार्धम् ।
पिष्टान्नसंधानकमाषमुद्गकोशातकीकन्दफलादिकैश्च ॥ १५.२९
मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः ।
शाकजाम्बवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत् ॥ १५.३०
स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् ।
दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥ १५.३१
नित्यं तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः ।
पुष्णन्ति धातवः सर्वे बलपुष्टिविवर्धनम् ॥ १५.३२
क्षीरं गवाजकादेर्मधुरं क्षारं नवप्रसूतानाम् ।
रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते ॥ १५.३३
मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् ।
लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥ १५.३४
गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम् ।
मध्यवयसां रसायनमुक्तमिदं दुर्बलं तु वृद्धानाम् ॥ १५.३५
तासां मासत्रयादूर्द्ध्वं गुर्विणीनाञ्च यत्पयः ।
तद्वाहि लवणं क्षीरं मधुरं पित्तदोषकृत् ॥ १५.३६
गवादीनां वर्णभेदाद्गुणा दुग्धादिके पृथक् ।
कैश्चिदुक्तो विशेषाच्च विशेषो देशभेदतः ॥ १५.३७
देशेषु देशेषु च तेषु तेषु तृणाम्बुनी यादृशदोषयुक्ते ।
तत्सेवनादेव गवादिकानां गुणादि दुग्धादिषु तादृशं मतम् ॥ १५.३८
शीतं स्निग्धं गुरुर्गौल्यं वृष्यं पित्तापहं परम् ।
ज्ञेया चैवाभिधा तस्य कीलाटं तु पयःच्छदः ॥ १५.३९
दधि गव्यमतिपवित्रं शीतं स्निग्धं च दीपनं बलकृत् ।
मधुरमरोचकहारि ग्राहि च वातामयघ्नं च ॥ १५.४०
माहिषं मधुरं स्निग्धं श्लेष्मकृद्रक्तपित्तजित् ।
बलास्रवर्धनं वृष्यं श्रमघ्नं शोधनं दधि ॥ १५.४१
दध्याजं कफवातघ्नं लघूष्णं नेत्रदोषनुत् ।
दुर्नामश्वासकासघ्नं रुच्यं दीपनपाचनम् ॥ १५.४२
आविकं दधि सुस्निग्धं कफपित्तकरं गुरु ।
वाते च रक्तवाते च पथ्यं शोफव्रणापहम् ॥ १५.४३
हस्तिनीदधि कषायलघूष्णं पक्तिशूलशमनं रुचिप्रदम् ।
दीप्तिदं खलु बलासगदघ्नं वीर्यवर्धनबलप्रदमुक्तम् ॥ १५.४४
अश्वीदधि स्यान्मधुरं कषायं कफार्तिमूर्छामयहारि रूक्षम् ।
वाताल्पदं दीपनकारि नेत्रदोषापहं तत्कथितं पृथिव्याम् ॥ १५.४५
गर्दभीदधि रूक्षोष्णं लघु दीपनपाचनम् ।
मधुराम्लरसं रुच्यं वातदोषविनाशनम् ॥ १५.४६

औष्ट्रमर्शांसि कुष्ठानि क्रिमिशूलोदराणि च ।
निहन्ति कटुकं स्वादु किंचिदम्लरसं दधि ॥ १५.४७
विपाके मधुरं बल्यमम्लं संतर्पणं गुरु ।
चक्षुष्यं ग्रहदोषघ्नं दधि स्त्रीस्तन्यसम्भवम् ॥ १५.४८
दध्यम्लं गुरु वातदोषशमनं संग्राहि मूत्रावहं बल्यं शोफकरं च रुच्यशमनं वह्नेश्च शान्तिप्रदम् ।
कासश्वाससुपीनसेषु विषमे शीतज्वरे स्याद्धितं रक्तोद्रेककरं करोति सततं शुक्रस्य वृद्धिं पराम् ॥ १५.४९
दधि मधुरमीषदम्लं मधुराम्लं वा हितं न चात्युष्णम् ।
यावद्यावन्मधुरं दोषहरं तावदुक्तमिदम् ॥ १५.५०
लवणमरिचसर्पिःशर्करामुद्गधात्रीकुसुमरसविहीनं नैतदश्नन्ति नित्यम् ।
न च शरदि वसन्ते नोष्णकाले न रात्रौ न दधि कफविकारे पित्तदोषेऽपि नाद्यात् ॥ १५.५१
त्रिकटुकयुतमेतद्राजिकाचूर्णमिश्रं कफहरमनिलघ्नं वह्निसंधुक्षणं च ।
तुहिनशिशिरकाले सेवितं चातिपथ्यं रचयति तनुदार्ढ्यं कान्तिमत्त्वं च नृणाम् ॥ १५.५२
उष्णाम्लं रुचिपक्तिदं क्लमहरं बल्यं कषायं सरं भुक्तिच्छेदकरं तृषोदरगदप्लीहार्शसां नाशनम् ।
स्रोतःशुद्धिकरं कफानिलहरं विष्टम्भशूलापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु ॥ १५.५३
उक्तं श्लेष्मसमीरहारि मथितं तत्श्लेष्मपित्तापहं रुच्यं प्राहुरुदश्विदाख्यमधिकं तक्रं त्रिदोषापहम् ।
मन्दाग्नावरुचौ विदाहविषमश्वासार्तिकासादिषु श्रेष्ठं पथ्यतमं वदन्ति सुधियस्तक्रत्रयं ह्युत्तमम् ॥ १५.५४
तक्रं त्रिदोषशमनं रुचिदीपनीयं रुच्यं वमिश्रमहरं क्लमहारि मस्तु ।
बल्यप्रदं पवननाशमुदश्विदाख्यं शस्तं कफश्रममरुद्वमनेषु घोलम् ॥ १५.५५
अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः ।
यथा सुराणाममृतं हिताय तथा नराणामिह तक्रमाहुः ॥ १५.५६
आमातिसारे च विषूचिकायां वातज्वरे पाण्डुषु कामलेषु ।
प्रमेहगुल्मोदरवातशूले नित्यं पिबेत्तक्रमरोचके च ॥ १५.५७
शीतकालेऽग्निमान्द्ये च कफे पाण्ड्वामयेषु च ।
मार्गोपरोधे कुष्ठादिव्याधौ तक्रं प्रशस्यते ॥ १५.५८
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ १५.५९
यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरे ।
संनिपातोदरे तक्रं त्रिकटुक्षारसैन्धवम् ॥ १५.६०
तक्रं दद्यान्नो क्षते नोष्णकाले नो दौर्बल्ये नो तृषामूर्छिते च ।
नैव भ्रान्तौ नैव पित्तास्रदोषे नैतद्दद्यात्सूतिकायां विशेषात् ॥ १५.६१
तक्रं स्नेहान्वितं तुन्दनिद्राजाड्यप्रदं गुरु ।
अर्धावशिष्टं सामान्यं निःशेषं लघु पथ्यदम् ॥ १५.६२
शीतं वर्णबलावहं सुमधुरं वृष्यं च संग्राहकं वातघ्नं कफहारकं रुचिकरं सर्वाङ्गशूलापहम् ।
कासघ्नं श्रमनाशनं सुखकरं कान्तिप्रदं पुष्टिदं चक्षुष्यं नवनीतमुद्धृतनवं गोः सर्वदोषापहम् ॥ १५.६३
गव्यं च माहिषं चापि नवनीतं नवोद्धवम् ।
शस्यते बालवृद्धानां बलकृत्पुष्टिवर्धनम् ॥ १५.६४
माहिषं नवनीतं तु कषायं मधुरं रसे ।
शीतं वृष्यप्रदं ग्राहि पित्तघ्नं तु बलप्रदम् ॥ १५.६५
लघ्वाजं तु मधुरं कषायं च त्रिदोषनुत् ।
चक्षुष्यं दीपनं बल्यं नवनीतं हितं सदा ॥ १५.६६
नवनीतं नवोत्थं तु छागजं क्षयकासजित् ।
बल्यं नेत्रामयघ्नं च कफघ्नं दीपनं परम् ॥ १५.६७
आविकं नवनीतं तु विपाके तु हिमं लघु ।
योनिशूले कफे वाते दुर्नाम्नि च हितं सदा ॥ १५.६८
ऐडकं नवनीतं तु कषायं शीतलं लघु ।

मेधाहृद्गुरु पुष्ट्यं च स्थौल्यं मन्दाग्निदीपनम् ॥ १५.६९
हस्तिनीनवनीतं तु कषायं शीतलं लघु ।
तिक्तं विष्टम्भि जन्तुघ्नं हन्ति पित्तकफक्रिमीन् ॥ १५.७०
अश्वीयं नवनीतं स्यात्कषायं कफवातजित् ।
चक्षुष्यं कटुकं चोष्णमीषद्वातापहारकम् ॥ १५.७१
गर्दभीनवनीतं तु कषायं कफवातनुत् ।
बल्यं दीपनदं पाके लघूष्णं मूत्रदोषनुत् ॥ १५.७२
औष्ट्रं तु नवनीतं स्याद्विपाके लघु शीतलम् ।
व्रणक्रिमिकफास्रघ्नं वातघ्नं विषनाशनम् ॥ १५.७३
नवनीतं तु नारीणां रुच्यं पाके लघु स्मृतम् ।
चक्षुष्यं सर्वरोगघ्नं दीपनं विषनाशनम् ॥ १५.७४
शीतं रुच्यनवोद्धृतं सुमधुरं वृष्यं च वातापहं कासघ्नं क्रिमिनाशनं कफकरं संग्राहि शूलापहम् ।
बल्यं पुष्टिकरं तृषार्तिशमनं संतापविच्छेदनं चक्षुष्यं श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित् ॥ १५.७५
एकाहाद्युषितं प्रोक्तमुत्तरोत्तरगन्धदम् ।
अहृद्यं सर्वरोगाढ्यं दधिजं तद्घृतं स्मृतम् ॥ १५.७६
धीकान्तिस्मृतिदायकं बलकरं मेधाप्रदं पुष्टिकृत्वातश्लेष्महरं श्रमोपशमनं पित्तापहं हृद्यदम् ।
वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं वपुःस्थैर्यदं गव्यं हव्यतमं घृतं बहुगुणं भोग्यं भवेद्भाग्यतः ॥ १५.७७
सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिकृत्वातश्लेष्मनिबर्हणं बलकरं वर्णप्रदाने क्षमम् ।
दुर्नामग्रहणीविकारशमनं मन्दानलोद्दीपनं चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च ॥ १५.७८
आजमाज्यं तु चक्षुष्यं दीपनं बलवर्धनम् ।
कासश्वासकफान्तकं राजयक्ष्मसु शस्यते ॥ १५.७९
पाके लघ्वाविकं सर्पिर्नवं पित्तप्रकोपणम् ।
योनिदोषे कफे वाते शोफे कम्पे च तद्धितम् ॥ १५.८०
ऐडकं घृतमतीव गौरवाद्वर्ज्यमिव सुकुमारदेहिनाम् ।
बुद्धिपाटवकरं बलावहं सेवितं च कुरुते नृणां वपुः ॥ १५.८१
निहन्ति हस्तिनीसर्पिः कफपित्तविषक्रिमीन् ।
कषायं लघु विष्टम्भि तिक्तं चाग्निकरं परम् ॥ १५.८२
अश्वीसर्पिस्तु कटुकं मधुरं च कषायकम् ।
ईषद्दीपनदं मूर्छाहारि वाताल्पदं गुरु ॥ १५.८३
घृतं गार्दभिकं बल्यं दीपनं मूत्रदोषनुत् ।
पाके लघूष्णवीर्यं च कषायं कफनाशनम् ॥ १५.८४
घृतमौष्ट्रं तु मधुरं विपाके कटुशीतलम् ।
कुष्ठक्रिमिहरं वातकफगुल्मोदरापहम् ॥ १५.८५
नारीसर्पिस्तु चक्षुष्यं पथ्यं सर्वामयापहम् ।
मन्दाग्निदीपनं रुच्यं पाके लघु विषापहम् ॥ १५.८६
मदापस्मारमूर्छादिशिरःकर्णाक्षिजा रुजः ।
सर्पिः पुराणं जयति व्रणशोधनरोपणम् ॥ १५.८७
आयुर्वृद्धिं वपुषि दृढतां सौकुमार्यं च कान्तिं बुद्धिं धत्ते स्मृतिबलकरं शीतविध्वंसनं च ।
पथ्यं बाल्ये वयसि तरुणे वार्द्धके चातिबल्यं नान्यत्किंचिज्जगति गुणदं सर्पिषः पथ्यमस्ति ॥ १५.८८
काञ्जिकं काञ्जिका वीरं कुल्माषाभिभवं तथा ।
अवन्तिसोमं धान्याम्लमारनालोऽम्लसारकः ॥ १५.८९
काञ्जिकं वातशोफघ्नं पित्तघ्नं ज्वरनाशनम् ।
दाहमूर्छाश्रमघ्नं च शूलाध्मानविबन्धनुत् ॥ १५.९०
काञ्जिकं काञ्जितैलं च पलितं वातकारकम् ।
दाहकं गात्रशैथिल्यं मर्दनान्न च भक्षणात् ॥ १५.९१

चुक्रं सहस्रवेधं च रसाम्लं चुक्रवेधकम् ।
शाखाम्लभेदनं चैवमम्लसारं च चुक्रिका ॥ १५.९२
चुक्रं तिक्ताम्लकं स्वादु कफपित्तविनाशनम् ।
नासिकागददुर्गन्धशिरोरोगहरं परम् ॥ १५.९३
सौवीरकं सुवीराम्लं ज्ञेयं गोधूमसम्भवम् ।
यवाम्लजं यवोत्थं च तुषोत्थं च तुषोदकम् ॥ १५.९४
सौवीरकं चाम्लरसं केश्यं मस्तकदोषजित् ।
जराशैथिल्यहरणं बलसंतर्पणं परम् ॥ १५.९५
तण्डुलोत्थं तण्डुलाम्बु कषायं मधुरं लघु ।
संग्राहि विषविच्छर्दितृड्दाहव्रणनाशकृत् ।
तुषाम्बु दीपनं हृद्यं हृत्पाण्डुकृमिरोगनुत् ॥ १५.९६
अन्नोदजः शिवरसस्त्र्यहात्पर्युषिते रसे ।
दीपनो मधुराम्लस्तु दाहजिल्लघुतर्पणः ॥ १५.९७
गोमूत्रं कटुतिक्तोष्णं कफवातहरं लघु ।
पित्तकृद्दीपनं मेध्यं त्वग्दोषघ्नं मतिप्रदम् ॥ १५.९८
माहिषं मूत्रमानाहशोफगुल्माक्षिदोषनुत् ।
कटूष्णं कुष्ठकण्डूतिशूलोदररुजापहम् ॥ १५.९९
अजामूत्रं कटूष्णं च रूक्षं नाडीविषार्तिजित् ।
प्लीहोदरकफश्वासगुल्मशोफहरं लघु ॥ १५.१००
आविकं तिक्तकटुकं मूत्रमुष्णं च कुष्ठजित् ।
दुर्नामोदरशूलास्रशोफमेहविषापहम् ॥ १५.१०१
हस्तिमूत्रं तु तिक्तोष्णं लवणं वातभूतनुत् ।
तिक्तं कषायं शूलघ्नं हिक्काश्वासहरं परम् ॥ १५.१०२
अश्वमूत्रं तु तिक्तोष्णं तीक्ष्णं च विषदोषजित् ।
वातप्रकोपशमनं पित्तकारि प्रदीपनम् ॥ १५.१०३
खरमूत्रं कटूष्णं च क्षारं तीक्ष्णं कफापहम् ।
महावातापहं भूतकम्पोन्मादहरं परम् ॥ १५.१०४
औष्ट्रकं कटु तिक्तोष्णं लवणं पित्तकोपनम् ।
बल्यं जठररोगघ्नं वातदोषविनाशनम् ॥ १५.१०५
मानुषं मूत्रमामघ्नं क्रिमिव्रणविषार्तिनुत् ।
तिक्तोष्णं लवणं रूक्षं भूतत्वग्दोषवातजित् ॥ १५.१०६
शूलगुल्मोदरानाहवातविच्छर्दनादिषु ।
मूत्रप्रयोगसाध्येषु गोमूत्रं कल्पयेद्बुधः ॥ १५.१०७
तैलं यत्तिलसर्षपोदितकुसुम्भोत्थातसीधान्यजं यच्चैरण्डकरञ्जकेङ्गुदीफलैर्निम्बाक्षशिग्र्वस्थिभिः ।
ज्योतिष्मत्यभयोद्भवं मधुरिकाकोशाम्रचिञ्चाभवं कर्पूरत्रपुसादिजं च सकलं सिद्ध्यै क्रमात्कथ्यते ॥ १५.१०८
तिलतैलमलंकरोति केशं मधुरं तिक्तकषायमुष्णतीक्ष्णम् ।
बलकृत्कफवातजन्तुखर्जूव्रणकण्डूतिहरं च कान्तिदायि ॥ १५.१०९
सर्षपतैलं तिक्तं कटुकोष्णं वातकफविकारघ्नम् ।
पित्तास्रदोषदं क्रिमिकुष्ठघ्नं तिलजवच्च चक्षुष्यम् ॥ १५.११०
कुसुम्भतैलं क्रिमिहारि तेजोबलावहं यक्ष्ममलापहं च ।
त्रिदोषकृत्पुष्टिबलक्षयं च करोति कण्डूं च करोति दृष्टेः ॥ १५.१११
मधुरं त्वतसीतैलं पिच्छिलं चानिलापहम् ।
मदगन्धि कषायं च कफकासापहारकम् ॥ १५.११२
गोधूमयावनालव्रीहियवाद्यखिलधान्यजं तैलम् ।
वातकफपित्तशमनं कण्डूकुष्ठादिहारि चक्षुष्यम् ॥ १५.११३

एरण्डतैलं कृमिदोषनाशनं वातामयघ्नं सकलाङ्गशूलहृत् ।
कुष्ठापहं स्वादु रसायनोत्तमं पित्तप्रकोपं कुरुतेऽतिदीपनम् ॥ १५.११४
करञ्जतैलं नयनार्तिनाशनं वातामयध्वंसनमुष्णतीक्ष्णकम् ।
कुष्ठार्तिकण्डूतिविचर्चिकापहं लेपेन नानाविधचर्मदोषनुत् ॥ १५.११५
स्निग्धं स्यादिङ्गुदीतैलं मधुरं पित्तनाशनम् ।
शीतलं कान्तिदं बल्यं श्लेष्मलं केशवर्धनम् ॥ १५.११६
निम्बतैलं तु नात्युष्णं क्रिमिकुष्ठकफापहम् ॥ १५.११७
आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ॥ १५.११८
शिग्रुतैलं कटूष्णं च वातजित्कफनाशनम् ।
त्वग्दोषव्रणकण्डूतिशोफहारि च पिच्छिलम् ॥ १५.११९
कटु ज्योतिष्मतीतैलं तिक्तोष्णं वातनाशनम् ।
पित्तसंतापनं मेधाप्रज्ञाबुद्धिविवर्धनम् ॥ १५.१२०
शीतं हरीतकीतैलं कषायं मधुरं कटु ।
सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् ॥ १५.१२१
तीक्ष्णं तु राजिकातैलं ज्ञेयं वातादिदोषनुत् ।
शिशिरं कटु पुंस्त्वघ्नं केश्यं त्वग्दोषनाशनम् ॥ १५.१२२
सरं कोशाम्रजं तैलं क्रिमिकुष्ठव्रणापहम् ।
तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥ १५.१२३
यच्च चिञ्चीभवं तैलं कटु पाके विलेखनम् ।
कफवातहरं रुच्यं कषायं नातिशीतलम् ॥ १५.१२४
कर्पूरतैलहिमतैलसितांशुतैलशीताभ्रतैलतुहिनांशुसुधांशुतैलम् ।
कर्पूरतैलं कटुकोष्णकफामहारि वातामयघ्नरददार्ढ्यदपित्तहारि ॥ १५.१२५
त्रपुसैर्वारुकचारककुष्माण्डप्रभृतिबीजजं च यत्तैलम् ।
तन्मधुरं गुरु शिशिरं केश्यं कफपित्तनाशि कान्तिकरम् ॥ १५.१२६
तैलं न सेवयेद्धीमान् यस्य कस्य च यद्भवेत् ।
विषसाम्यगुणत्वाच्च योगे तन्न प्रयोजयेत् ॥ १५.१२७
विषस्य तैलस्य न किंचिदन्तरं मृतस्य सुप्तस्य न किंचिदन्तरम् ।
तृणस्य दासस्य न किंचिदन्तरं मूर्खस्य काष्ठस्य न किंचिदन्तरम् ॥ १५.१२८
इत्थं गवादिकपयःप्रभृतिप्रपञ्चप्रस्ताववर्णिततिलादिकतैलजातम् ।
वर्गं निसर्गललितोज्ज्वलशब्दसर्गं बुद्ध्वा भिषक्पतिरशङ्कतया भिषज्येत् ॥ १५.१२९
पातारमात्मनः किल यान्ति प्रत्युपचिकीर्षया यानि ।
तेषामेव निवासः परिकथितः पेयवर्ग इति कृतिभिः ॥ १५.१३०
पायं पायं मधुरविमलां शीतलां यस्य कीर्तिस्रोतोधारां जहति सुजना दुर्जनासंगदौस्थ्यम् ।
वर्गस्तस्य व्रजति नृहरेर्नामनिर्माणनाम्नश्चूडारत्ने खलु तिथिमितः क्षीरकादिः समाप्तिम् ॥ १५.१३१

धान्यं भोग्यं च भोगार्हमन्नाद्यं जीवसाधनम् ।
तच्च तावत्त्रिधा ज्ञेयं शूकशिम्बीतृणाह्वयम् ॥ १६.१
व्रीह्यादिकं यदिह शूकसमन्वितं स्यात्तच्छूकधान्यमथ मुद्गमकुष्टकादि ।
शिम्बीनिगूढमिति तत्प्रवदन्ति शिम्बीधान्यं तृणोद्भवतया तृणधान्यमन्यत् ॥ १६.२
वातादिदोषशमनं लघु शूकधान्यं तेजोबलातिशयवीर्यविवृद्धिदायि ।
शिम्बीभवं गुरु हिमं च विबन्धदायि वातूलकं तु शिशिरं तृणधान्यमाहुः ॥ १६.३
देशे देशे शूकधान्येषु संख्या ज्ञातुं शक्या नैव तद्दैवतैर्वा ।
तस्मादेषां येषु भोगोपयोगास्तान्यस्माभिर्व्याक्रियन्ते कियन्ति ॥ १६.४
शालयः कलमा रुच्या व्रीहिश्रेष्ठा नृपप्रियाः ।
धान्योत्तमाश्च विज्ञेयाः कैदाराः सुकुमारकाः ॥ १६.५
राजान्नषष्टिकसिततररक्तमुण्डस्थूलाणुगन्धनिरपादिकशालिसंज्ञाः ।
व्रीहिस्तथेति दशधा भुवि शालयस्तु तेषां क्रमेण गुणनामगणं ब्रवीमि ॥ १६.६
राजान्नं दीर्घशूकः खरिपुदिवसजं षष्टिको वर्णतो द्वौ निःशूको मुण्डशालिः स्वगुणविशदितः स्वाभिधानास्त्रयोऽन्ये ।
मासैर्योऽन्यस्त्रिभिः स्यात्स भवति निरपो योऽपि वृष्ट्यम्बुसम्भूरेष स्याद्व्रीहिसंज्ञस्तदिति दशविधाः शालयस्तु प्रसिद्धाः ॥ १६.७
शालिर्नृपान्नं राजान्नं राजार्हं दीर्घशूककम् ।
धान्यश्रेष्ठं राजधान्यं राजेष्टं दीर्घकूरकम् ॥ १६.८
राजान्नं तु त्रिदोषघ्नं सुस्निग्धं मधुरं लघु ।
दीपनं बलकृत्पथ्यं कान्तिदं वीर्यवर्धनम् ॥ १६.९
राजान्नं त्रिविधं स्वशूकभिदया ज्ञेयं सितं लोहितं कृष्णं चेति रसाधिकं च तदिदं स्यादौत्तरोत्तर्यतः ।
त्रैविध्यादिह तण्डुलाश्च हरिताः श्वेतास्तथा लोहिताः सामान्येन भवन्ति तेऽप्यथ गुणैः स्युः पूर्वपूर्वोत्तराः ॥ १६.१०
षष्टिकः षष्टिशालिः स्यात्षष्टिजः स्निग्धतण्डुलः ।
षष्टिवासरजः सोऽयं ज्ञेयो मासद्वयोद्भवः ॥ १६.११
गौरो नीलः षष्टिकोऽयं द्विधा स्यादाद्यो रुच्यः शीतलो दोषहारी ।
बल्यः पथ्यो दीपनो वीर्यवृद्धिं दत्ते चास्मात्किंचिदूनो द्वितीयः ॥ १६.१२
कृष्णशालिः कालशालिः श्यामशालिः सितेतरः ॥ १६.१३
कृष्णशालिस्त्रिदोषघ्नो मधुरः पुष्टिवर्धनः ।
वर्णकान्तिकरो बल्यो दाहजिद्वीर्यवृद्धिकृत् ॥ १६.१४
रक्तशालिस्ताम्रशालिः शोणशालिश्च लोहितः ।
रक्तशालिः सुमधुरो लघुः स्निग्धो बलावहः ॥ १६.१५
रुचिकृद्दीपनः पथ्यो मुखजाड्यरुजापहः ।
सर्वामयहरो रुच्यः पित्तदाहानिलास्रजित् ॥ १६.१६
मुण्डशालिर्मुण्डनको निःशूको यवशूकजः ॥ १६.१७
मुण्डशालिस्त्रिदोषघ्नो मधुराम्लो बलप्रदः ॥ १६.१८
स्थूलशालिर्महाशालिः स्थूलाङ्गः स्थूलतण्डुलः ।
एवंगन्धाढ्यशालेश्च नामान्यूह्यानि सूरिभिः ॥ १६.१९
महाशालिः स्वादुर्मधुरशिशिरः पित्तशमनो ज्वरं जीर्णं दाहं जठररुजमह्नाय शमयेत् ।
शिशूनां यूनां वा यदपि जरतां वा हितकरः सदा सेव्यः सर्वैरनलबलवीर्याणि कुरुते ॥ १६.२०
सूक्ष्मशालिः सूचिशालिः पोतशालिश्च सूचकः ॥ १६.२१
सूक्ष्मशालिः सुमधुरो लघुः पित्तास्रदाहनुत् ।
दीपनः पाचनश्चैव किंचिद्वातविकारजित् ॥ १६.२२
गन्धशालिस्तु कल्माषो गन्धालुः कलमोत्तमः ।
सुगन्धिर्गन्धबहुलः सुरभिर्गन्धतण्डुलः ॥ १६.२३
सुगन्धशालिर्मधुरोऽतिवृष्यदः पित्तश्रमास्रारुचिदाहशान्तिदः ।
स्तन्यस्तु गर्भस्थिरताल्पवातदः पुष्टिप्रदश्चाल्पकफश्च बल्यदः ॥ १६.२४

निरपो मधुरः स्निग्धः शीतलो दाहपित्तजित् ।
त्रिदोषशमनो रुच्यः पथ्यः सर्वामयापनुत् ॥ १६.२५
व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः स्निग्धो वृष्यः कृमिकफहरस्तापरक्तापहश्च ।
पुष्टिं दत्ते श्रमशमनकृद्वीर्यवृद्धिं विधत्ते रुच्योऽत्यन्तं जनयति मुदं वातकृन्मेचकोऽन्यः ॥ १६.२६
मण्डकः स्थूलशालिश्च स्याद्बिम्बशालिकस्तथा ।
निजातिशाणहुल्याश्च बिम्बी कौसेन्दुकस्तथा ॥ १६.२७
प्रसाधिका जीरकाख्या सश्यामा मधुरा मता ।
राजानां मौलिकस्यापि शालिः स्यादुर्वरी तथा ॥ १६.२८
सूक्ष्मशालिः कुदितिका सुशालिर्गुरुशालयः ।
वनशालिर्गुण्डुरूकी क्षीरिका पङ्क्तयः पृथक् ।
एतानि शालिनामानि प्रख्यातानि प्रसिद्धतः ॥ १६.२९
अशोचा पाटला व्रीहिर्व्रीहिको व्रीहिधान्यकः ।
व्रीहिसंधान्यमुद्दिष्टः अर्धधान्यस्तु व्रीहिकः ॥ १६.३०
गर्भे पाकणिकः षष्टिः षष्टिको बलसम्भवः ।
सुधान्यं पथ्यकारी च मुपविः प्रज्ञविप्रियः ॥ १६.३१
शालिस्तु कलमाद्यस्तु कलमो नाकलायकः ।
कदम्बपुष्पगन्धश्च कलजातः कलोद्भवः ॥ १६.३२
पित्तश्लेष्मकरो वृष्यः कलमो मधुरस्तथा ॥ १६.३३
लोहितो रक्तशालिः स्यात्काष्ठलोहितशालयः ।
रुणाली रुणशालिस्तु रक्तशाल्यः सुशाल्यकः ॥ १६.३४
तृष्णाघ्नो मलकृच्छ्रघ्नो हृद्यस्तु मतिदाः परे ॥ १६.३५
महाशालिः सुगन्धा स्यात्सुगन्धा गन्धसम्भवा ।
गन्धाढ्या गन्धमाल्या च गन्धानी गन्धमालिनी ॥ १६.३६
सुगन्धा मधुरा हृद्या कफपित्तज्वरास्रजित् ॥ १६.३७
जलोद्भवा जलरुहा जलजाता सुजातका ।
रक्ताङ्गुलं सुकारं च कुङ्कुमं समवर्णजा ॥ १६.३८
कुङ्कुमा मधुरा शीता रक्तपित्तातिसारजित् ॥ १६.३९
तिलजा नीलनामा स्याद्दीर्घकृष्णा सुपूजका ।
मधुरा च सुगन्धा च तिलवासी निगद्यते ॥ १६.४०
राजादनी राजप्रिया राजभावा मुनिप्रिया ।
तिलनी तिलपर्णी च आमगन्धा प्रवासिनी ॥ १६.४१
कफपित्तहराः स्निग्धाः कासश्वासहराः पराः ।
शीघ्रपाककरा हृद्या लघवः शुक्रवर्धनाः ॥ १६.४२
कोमलाहारसम्भूतास्तिलवासीमहागुणाः ।
पाण्डुरोगेषु शूलेषु चामवाते प्रशस्यते ॥ १६.४३
वक्तको वक्तशालिः स्यात्दीर्घस्तु आशुकोपितः ।
राजप्रिया पथ्यकरा मध्यदेशसमुद्भवा ॥ १६.४४
वक्तिका लघवः प्रोक्ता मुखपाककरास्तथा ॥ १६.४५
कलाटकः कविलः स्याद्गुरुसो गरुडः स्मृतः ।
गुरुवको गुरडकः सुखभोजी सुभोजकः ॥ १६.४६
कविलो गन्धकारी च लघुपाककरोऽपि च ।
कफपित्तहरः स्वादुः शूलश्वासनिवारणः ।
ग्रहणीगुल्मकुष्ठघ्नो विकलो भोजने शुभः ॥ १६.४७
कुष्माण्डिका कुम्भडिका रक्ता सुमधुरा गुरुः ।
सुगन्धा दुर्जरा पीता स्थूलतण्डुलकोमला ॥ १६.४८

कुम्भिका मधुरा स्निग्धा वातपित्तनिबर्हिणी ॥ १६.४९
सौरभं शुण्डिकः शुण्डी कौसुम्भी कठिनोऽफलः ॥ १६.५०
कौसुम्भी लघुपाका च वातपित्तनिबर्हिणी ॥ १६.५१
उम्पास उम्पिकाशालिर्मधुरा गुरुतण्डुला ।
बहुशूका सुगन्धाढ्या तारुण्यजनवल्लभा ॥ १६.५२
उम्पिका मधुरा स्निग्धा सुगन्धा च कषायका ।
पित्तश्लेष्महरा रूक्षा उम्पिकानिलनाशिनी ॥ १६.५३
पक्षिकः पक्षिलावण्यः पक्षिराजो मुनिप्रियः ।
स्थूलतण्डुलसम्भूतागन्धो बहलगन्धकृत् ॥ १६.५४
दग्धायामवनौ जाताः शालयो लघुपाकिनः ।
किंचित्सतिक्ता मधुराः पाचना बलवर्धनाः ॥ १६.५५
केदारा मधुरा वृष्या बल्याः पित्तविवर्धनाः ।
ईषत्कषायाल्पमला गुरवः कफनाशनाः ॥ १६.५६
शालयो ये छिन्नरुहा रूक्षास्ते बद्धवर्चसः ॥ १६.५७
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
विदाहिनो दोषहरा बल्या मूत्रविवर्धनाः ॥ १६.५८
यावनालो यवनालः शिखरी वृत्ततण्डुलः ।
दीर्घनालो दीर्घशरः क्षेत्रेक्षुश्चेक्षुपत्त्रकः ॥ १६.५९
धवलो यावनालस्तु पाण्डुरस्तारतण्डुलः ।
नक्षत्राकृतिविस्तारो वृत्तो मौक्तिकतण्डुलः ॥ १६.६०
जूर्णाह्वयो देवधान्यं जूर्णलो बीजपुष्पकः ।
जूनलः पुष्पगन्धश्च सुगन्धः सेगुरुन्दकः ॥ १६.६१
धवलो यावनालस्तु गौल्यो बल्यस्त्रिदोषजित् ।
वृष्यो रुचिप्रदोऽर्शोघ्नः पथ्यो गुल्मव्रणापहः ॥ १६.६२
अथ तुवरयावनालस्तुवरश्च कषाययावनालश्च ।
स रक्तयावनालो हितलोहितस्तुवरधान्यश्च ॥ १६.६३
तुवरो यावनालस्तु कषायोष्णो विशोफकृत् ।
संग्राही वातशमनो विदाही शोषकारकः ॥ १६.६४
शारदो यावनालस्तु श्लेष्मदः पिच्छिलो गुरुः ।
शिशिरो मधुरो वृष्यो दोषघ्नो बलपुष्टिदः ॥ १६.६५
गोधूमो बहुदुग्धः स्यादपूपो म्लेच्छभोजनः ।
यवनो निस्तुषः क्षीरी रसालः सुमनश्च सः ॥ १६.६६
गोधूमः स्निग्धमधुरो वातघ्नः पित्तदाहकृत् ।
गुरुः श्लेष्मामदो बल्यो रुचिरो वीर्यवर्धनः ॥ १६.६७
स्निग्धोऽन्यो लघुगोधूमो गुरुर्वृष्यः कफापहः ।
आमदोषकरो बल्यो मधुरो वीर्यपुष्टिदः ॥ १६.६८
यवस्तु मेध्यः सितशूकसंज्ञो दिव्योऽक्षतः कञ्चुकिधान्यराजौ ।
स्यात्तीक्ष्णशूकस्तुरगप्रियश्च सक्तुर्हयेष्टश्च पवित्रधान्यम् ॥ १६.६९
यवः कषायो मधुरः सुशीतलः प्रमेहजित्तिक्तकफापहारकः ।
अशूकमुण्डस्तु यवो बलप्रदो वृष्यश्च नृणां बहुवीर्यपुष्टिदः ॥ १६.७०
वेणुजो वेणुबीजश्च वंशजो वंशतण्डुलः ।
वंशधान्यं च वंशाह्वो वेणुवंशद्विधायवः ॥ १६.७१
शीतः कषायो मधुरस्तु रूक्षो मेहक्रिमिश्लेष्मविषापहश्च ।
पुष्टिं च वीर्यं च बलं च दत्ते पित्तापहो वेणुयवः प्रशस्तः ॥ १६.७२
मुद्गस्तु सूपश्रेष्ठः स्याद्वर्णार्हश्च रसोत्तमः ।

भुक्तिप्रदो हयानन्दो भूबलो वाजिभोजनः ॥ १६.७३
कृष्णमुद्गस्तु वासन्तो माधवश्च सुराष्ट्रजः ॥ १६.७४
कृष्णमुद्गस्त्रिदोषघ्नो मधुरो वातनाशनः ।
लघुश्च दीपनः पथ्यो बलवीर्याङ्गपुष्टिदः ॥ १६.७५
शारदस्तु हरिन्मुद्गो धूसरोऽन्यश्च शारदः ॥ १६.७६
हरिन्मुद्गः कषायश्च मधुरः कफपित्तहृत् ।
रक्तमूत्रामयघ्नश्च शीतलो लघुदीपनः ॥ १६.७७
तद्वच्च धूसरो मुद्गो रसवीर्यादिषु स्मृतः ।
कषायो मधुरो रुच्यः पित्तवातविबन्धकृत् ॥ १६.७८
पित्तज्वरार्तिशमनं लघु मुद्गयूषं संतापहारि तदरोचकनाशनं च ।
रक्तप्रसादनमिदं यदि सैन्धवेन युक्तं तदा भवति सर्वरुजापहारि ॥ १६.७९
माषस्तु कुरुविन्दः स्याद्धान्यवीरो वृषाकरः ।
मांसलश्च बलाढ्यश्च पित्र्यश्च पितृजोत्तमः ॥ १६.८०
माषः स्निग्धो बहुमलकरः शोषणः श्लेष्मकारी वीर्येणोष्णो झटिति कुरुते रक्तपित्तप्रकोपम् ।
हन्याद्वातं गुरुबलकरो रोचनो भक्ष्यमाणः स्वादुर्नित्यं श्रमसुखवतां सेवनीयो नराणाम् ॥ १६.८१
राजमाषो नीलमाषो नृपमाषो नृपोचितः ॥ १६.८२
कफपित्तहरो रुच्यो वातकृद्बलदायकः ॥ १६.८३
चणस्तु हरिमन्थः स्यात्सुगन्धः कृष्णकञ्चुकः ।
बालभोज्यो वाजिभक्षश्चणकः कञ्चुकी च सः ॥ १६.८४
चणको मधुरो रूक्षो मेहजिद्वातपित्तकृत् ।
दीप्तिवर्णकरो बल्यो रुच्यश्चाध्मानकारकः ॥ १६.८५
आमश्चणः शीतलरुच्यकारी संतर्पणो दाहतृषापहारी ।
गौल्योऽश्मरीशोषविनाशकारी कषाय ईषत्कटुवीर्यकारी ॥ १६.८६
कृष्णस्तु चणकः शीतो मधुरः कासपित्तहृत् ।
पित्तातिसारकासघ्नो बल्यश्चैव रसायनः ॥ १६.८७
चणो गौरस्तु मधुरो बलकृद्रोचनः परः ।
श्वेतो वातकरो रुच्यः पित्तघ्नः शिशिरो गुरुः ॥ १६.८८
सुभृष्टचणको रुच्यो वातघ्नो रक्तदोषकृत् ।
वीर्येणोष्णो लघुश्चैव कफशैत्यापहारकः ॥ १६.८९
चणस्य यूषं मधुरं कषायं कफापहं वातविकारहेतुः ।
श्वासोर्ध्वकासक्लमपीनसानां करोति नाशं बलदीपनत्वम् ॥ १६.९०
चणोदकं चन्द्रमरीचिशीतं पीतं प्रगे पित्तरुजापहारि ।
पुष्टिप्रदं नैजगुणं च पाके संतर्पणं मञ्जुलमाधुरीकम् ॥ १६.९१
मकुष्टको मयष्टश्च वनमुद्गः कृमीलकः ।
अमृतोऽरण्यमुद्गश्च वल्लीमुद्गश्च कीर्तितः ॥ १६.९२
मकुष्टकः कषायः स्यान्मधुरो रक्तपित्तजित् ।
ज्वरदाहहरः पथ्यो रुचिकृत्सर्वदोषहृत् ॥ १६.९३
मसूरो रागदालिस्तु मङ्गल्यः पृथुबीजकः ।
शूरः कल्याणबीजश्च गुरुबीजो मसूरकः ॥ १६.९४
मसूरो मधुरः शीतः संग्रही कफपित्तजित् ।
वातामयकरश्चैव मूत्रकृच्छ्रहरो लघुः ॥ १६.९५
कलायो मुण्डचणको हरेणुश्च सतीनकः ।
त्रासनो नालकः कण्ठी सतीनश्च हरेणुकः ॥ १६.९६
कलायः कुरुते वातं पित्तदाहकफापहः ।
रुचिपुष्टिप्रदः शीतः कषायश्चामदोषकृत् ॥ १६.९७

लङ्का कराला त्रिपुटा काण्डिका रूक्षणात्मिका ॥ १६.९८
लङ्का रुच्या हिमा गौल्या पित्तजिद्वातकृद्गुरुः ॥ १६.९९
आढकी तुवरी वर्या करवीरभुजा तथा ।
वृत्तबीजा पीतपुष्पा श्वेता रक्तासिता त्रिधा ॥ १६.१००
आढकी तु कषाया च मधुरा कफपित्तजित् ।
ईषद्वातकरा रुच्या विदला गुरुग्राहिका ॥ १६.१०१
सा च श्वेता दोषदात्री तु रक्ता रुच्या बल्या पित्ततापादिहन्त्री ।
सा श्यामा चेद्दीपनी पित्तदाहध्वंसा बल्यं चाढकीयूषमुक्तम् ॥ १६.१०२
कुलित्थस्ताम्रबीजश्च श्वेतबीजः सितेतरः ॥ १६.१०३
कुलित्थस्तु कषायोष्णो रूक्षो वातकफापहः ॥ १६.१०४
क्षवः क्षुधाभिजननश्चपलो दीर्घशिम्बिकः ।
सुकुमारो वृत्तबीजो मधुरः क्षवकश्च सः ॥ १६.१०५
क्षवः कषायमधुरः शीतलः कफपित्तहृत् ।
वृष्यः श्रमहरो रुच्यः पवनाध्मानकारकः ॥ १६.१०६
मधुरः श्वेतनिष्पावो माध्वीका मधुशर्करा ।
पलंकषा स्थूलशिम्बी वृत्ता मधुसिता सिता ॥ १६.१०७
मधुशर्करा सुरुच्या मधुराल्पकषायका ।
शिशिरा वातुला बल्याप्याध्मानगुरुपुष्टिदा ॥ १६.१०८
सोऽन्यश्च कटुनिष्पावः खर्वुरो नदीजस्तथा ॥ १६.१०९
नदीनिष्पावकस्तिक्तः कटुकोऽस्रप्रदो गुरुः ।
वातलः कफदो रूक्षः कषायो विषदोषनुत् ॥ १६.११०
तिलस्तु होमधान्यं स्यात्पवित्रः पितृतर्पणः ।
पापघ्नः पूतधान्यं च जटिलस्तु वनोद्भवः ॥ १६.१११
स्निग्धो वर्णबलाग्निवृद्धिजननस्तन्यानिलघ्नो गुरुः सोष्णः पित्तकरोऽल्पमूत्रकरणः केश्योऽतिपथ्यो व्रणे ।
संग्राही मधुरः कषायसहितस्तिक्तो विपाके कटुः कृष्णः पथ्यतमः सितोऽल्पगुणदः क्षीणास्तथान्ये तिलाः ॥ १६.११२
पललं तिलकल्कं स्यात्तिलचूर्णं च पिष्टकम् ॥ १६.११३
पललं मधुरं रुच्यं पित्तास्रबलपुष्टिदम् ॥ १६.११४
तिलकिट्टं तु पिण्याकः खलः स्यात्तिलकल्कजः ॥ १६.११५
पिण्याकः कटुको गौल्यः कफवातप्रमेहनुत् ॥ १६.११६
अतसी पिच्छला देवी मदगन्धा मदोत्कटा ।
उमा क्षुमा हैमवती सुनीला नीलपुष्पिका ॥ १६.११७
अतसी मदगन्धा स्यान्मधुरा बलकारिका ।
कफवातकरी चेषत्पित्तहृत्कुष्ठवातनुत् ॥ १६.११८
आसुरी राजिका राजी रक्तिका रक्तसर्षपः ।
तीक्ष्णगन्धा मधुरिका क्षवकः क्षुवकः क्षवः ॥ १६.११९
आसुरी कटुतिक्तोष्णा वातप्लीहार्तिशूलनुत् ।
दाहपित्तप्रदा हन्ति कफगुल्मकृमिव्रणान् ॥ १६.१२०
राजक्षवकः कृष्णस्तीक्ष्णफला राजराजिका राज्ञी ।
सा कृष्णसर्षपाख्या विज्ञेया राजसर्षपाख्या च ॥ १६.१२१
राजसर्षपकस्तिक्तः कटूष्णो वातशूलनुत् ।
पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहः ॥ १६.१२२
तीक्ष्णकश्च दुराधर्षो रक्षोघ्नः कुष्ठनाशनः ।
सिद्धप्रयोजनः सिद्धसाधनः सितसर्षपः ॥ १६.१२३
सिद्धार्थः कटुतिक्तोष्णो वातरक्तग्रहापहः ।
त्वग्दोषशमनो रुच्यो विषभूतव्रणापहः ॥ १६.१२४

धान्यानां कञ्चुके शिम्बी बीजगुप्तिश्च शाम्भवी ।
तद्गुप्तानि च धान्यानि शिम्बीधान्यानि चक्षते ॥ १६.१२५
श्यामाकः श्यामकः श्यामस्त्रिबीजः स्यादविप्रियः ।
सुकुमारी राजधान्यं तृणबीजोत्तमश्च सः ॥ १६.१२६
श्यामाको मधुरः स्निग्धः कषायो लघुशीतलः ।
वातकृत्कफपित्तघ्नः संग्राही विषदोषनुत् ॥ १६.१२७
कोद्रवः कोरदूषश्च कुद्दालो मदनाग्रजः ।
स च देशविशेषेण नानाभेदः प्रकीर्तितः ॥ १६.१२८
कोद्रवो मधुरस्तिक्तो व्रणिनां पथ्यकारकः ।
कफपित्तहरो रूक्षो मोहकृद्वातलो गुरुः ॥ १६.१२९
वरकः स्थूलकङ्गुश्च रूक्षः स्थूलप्रियङ्गुकः ॥ १६.१३०
वरको मधुरो रूक्षः कषायो वातपित्तकृत् ॥ १६.१३१
कङ्गुणी कङ्गुनी प्रोक्ता चीनकः पीततण्डुलः ।
वातलः सुकुमारश्च स च नानाविधाभिधः ॥ १६.१३२
प्रियङ्गुर्मधुरो रुच्यः कषायः स्वादुशीतलः ।
वातकृत्पित्तदाहघ्नो रूक्षो भग्नास्थिबन्धकृत् ॥ १६.१३३
नीवारोऽरण्यधान्यं स्यान्मुनिधान्यं तृणोद्भवम् ॥ १६.१३४
नीवारो मधुरः स्निग्धः पवित्रः पथ्यदो लघुः ॥ १६.१३५
रागी तु लाञ्छनः स्याद्बहुदलकणिशश्च गुच्छकणिशश्च ॥ १६.१३६
तिक्तो मधुरकषायः शीतः पित्तास्रनाशनो बलदः ॥ १६.१३७
कुरी तु तृणधान्यं स्यान्मधुरं तद्बलप्रदम् ।
हरितं वार्द्धकं पक्वं वाजिनां पुष्टिदायकम् ॥ १६.१३८
ये के च व्रीहयो भृष्टास्ते लाजा इति कीर्तिताः ॥ १६.१३९
यवादयश्च ये भृष्टा धानास्ते परिकीर्तिताः ॥ १६.१४०
लाजा च यवधाना च तर्पणी पित्तनाशिनी ।
गोधूमयावनालोत्थाः किंचिदुष्णाश्च दीपनाः ॥ १६.१४१
तप्तैरपक्वगोधूमैराकुलाः परिकीर्तिताः ।
आकुला गुरवो वृष्या मधुराः बलकारिणः ॥ १६.१४२
व्रीहयोऽप्यर्धपक्वाश्च तप्तास्ते पृथुकाः स्मृताः ।
पृथुकाः स्वादवः स्निग्धा हृद्या मदनवर्धनाः ॥ १६.१४३
पूपला मधुराः प्रोक्ता वृष्यास्ते बलदाः स्मृताः ।
पित्तहृत्तर्पणा हृद्याः स्निग्धास्ते बलवर्धनाः ॥ १६.१४४
ये चान्ये यावनालाद्याश्चिपिटास्तप्ततण्डुलाः ॥ १६.१४५
शालेययावनालीयचिपिटाः पुष्टिवर्धनाः ॥ १६.१४६
अतप्ततण्डुलास्ते तु दुग्धबीजाः प्रकीर्तिताः ॥ १६.१४७
दुग्धबीजा सुमधुरा दुर्जरा वीर्यपुष्टिदा ॥ १६.१४८
तप्तास्तु मुद्गचणकाः सुमनादिलङ्का सद्यस्तृषार्तिरुचिपित्तकृतश्च जग्धाः ।
वाताल्पदाः सुखकरा ह्यबलाश्च रूक्षा हृद्या भवन्ति युवजर्जरबालकानाम् ॥ १६.१४९
मुद्गगोधूमचणका यावनालादयः स्मृताः ।
यदर्धपक्वं तद्धान्यं विष्टम्भाध्मानदोषकृत् ॥ १६.१५०
शुष्कगोधूमचूर्णं तु कर्णिका समुदाहृता ॥ १६.१५१
स्फोटस्तु चणकादीनां दालिति परिकीर्तिताः ॥ १६.१५२
पक्वं हरितलूनं च धान्यं सर्वगुणावहम् ॥ १६.१५३
शुष्कलूनं तु निःसारं रूक्षं तत्सत्त्वनाशनम् ॥ १६.१५४
कोषधान्यं नवं बल्यं मधुरं वत्सरोषितम् ॥ १६.१५५

नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
द्व्यब्दोषितं लघु पथ्यं त्रिवर्षादबलं भवेत् ॥ १६.१५६
चणास्तु यवगोधूमतिलमाषा नवा हिताः ।
पुराणा विरसा रूक्षास्त्वहिता दुर्जराबलाः ॥ १६.१५७
धान्यं वापितमुत्तमं तदखिलं छिन्नोद्भवं मध्यमं ज्ञेयं यद्यदवापितं तदधमं निःसारदोषप्रदम् ।
दग्धायां भुवि यत्नतोऽपि विपिने ये वापिताः शालयो ये च छिन्नभवा भवन्ति खलु ते विण्मूत्रबन्धप्रदाः ॥ १६.१५८
क्षारोदकसमुत्पन्नं धान्यं श्लेष्मरुजापहम् ॥ १६.१५९
सुस्निग्धमृत्तिकोद्भूतं धान्यमोजोबलावहम् ॥ १६.१६०
बलपुष्टिप्रभावघ्नं वालुकामृत्तिकोद्भवम् ॥ १६.१६१
धान्यं श्रेष्ठं षष्टिकं राजभोग्यं मांसं त्वाजं तैत्तिरं लावकीयम् ।
पानीयं स्यात्कृष्णमृत्स्नासमुत्थं क्षीराज्यादौ गव्यमाजं प्रशस्तम् ॥ १६.१६२
इत्थं प्रसिद्धतरधान्यगुणाभिधानवीर्याभिवर्णनविशृङ्खलवाग्विलासम् ।
आम्नाय वर्गमिममाशु लभेत वैद्यो विद्यां विषण्णजनजीवनदानधन्याम् ॥ १६.१६३
यानि सदा भुज्यन्ते भुञ्जानजनाश्च यानि भुञ्जन्ते ।
तेषां खलु धान्यानां वर्गोऽयं भोज्यवर्ग इति कथितः ॥ १६.१६४
येनाचारचणेन मुग्धमधुरश्रीशालिना सन्महामानार्हा बहुधान्यसम्पदुचिता संनीयते संततम् ।
तेन श्रीनृहरीश्वरेण रचिते नामोक्तिचूडामणौ वर्गोऽयं स्थितमेति नूतनरचनो धान्याह्वयः षोडशः ॥ १६.१६५

राजनिघण्टु, मांसादिवर्गः
मांसं तु पिशितं क्रव्यं पलं तु रस्यमस्रजम् ।
पललं जाङ्गलं कीरमामिषं च तदुच्यते ॥ १७.१
सद्योहतस्य मांसं श्रेष्ठं हरिणादिकस्य यूनस्तु ।
ज्ञेयं सुगन्धि पथ्यं जाङ्गलदेशस्थितस्य पथ्यतमम् ॥ १७.२
बालस्य वृद्धस्य कृशस्य रोगिणो विषाग्निदग्धस्य मृतस्य चाम्बुषु ।
त्याज्यं मृगादेः पिशितं तु तस्य विगन्धि शुष्कं च चिरस्थितं च ॥ १७.३
सर्वं मांसं वातविध्वंसि वृष्यं बल्यं रुच्यं बृंहणं तच्च मांसम् ।
देशस्थानाच्चात्मसंस्थं स्वभावैर्भूयो नानारूपतां याति नूनम् ॥ १७.४
तत्रानूपीयमांसं गवयरुरुमृगक्रोडगण्डादिकानां स्निग्धं पथ्यं च बल्यं लघु शशशिखराद्युद्भवं जाङ्गलीयम् ।
पुष्टिं दीप्तिं च दत्ते रुचिकृदथ लघु स्वादु साधारणीयं वृष्यं बल्यं च रुच्यं रुरुहरिणमृगक्रोडसारङ्गकाणाम् ॥ १७.५
मांसं सारसहंसरात्रिविरहिक्रौञ्चादिजं शीतलं स्निग्धं वातकफापहं गुरु ततः स्वादु त्रिदोषापहम् ।
पथ्यं लावकतित्तिरादिजनितं वृष्यं लघु स्यात्परं चक्रक्रौञ्चमयूरतित्तिरभवं देशत्रयादीदृशम् ॥ १७.६
द्रुतो विलम्बितश्चैव प्लवश्चेति गतैस्त्रयः ।
स्थानतोऽपि त्रयस्ते तु बिलस्थलजलाश्रयाः ॥ १७.७
पुनस्ते तु प्रसहनाः प्रतुदा विष्किरा इति ।
स्वभावतस्त्रयः प्रोक्ताः क्रमशो मृगपक्षिणः ॥ १७.८
अथैषां क्रमशो लक्ष्मगुणान् वक्ष्यामि वर्गशः ।
एवं नवविधाः प्रोक्तास्त एव मृगपक्षिणः ॥ १७.९
अजशशहरिणादयः स्वयं ये द्रुतगमना द्रुतसंज्ञकाः स्मृतास्ते ।
तदुदितपललं च पथ्यबल्यं रचयति वीर्यमदप्रदं लघु स्यात् ॥ १७.१०
गजखड्गमुखा महामृगा निजगत्यैव विलम्बिताः स्मृतास्ते ।
बलकृत्पिशितं च पिच्छलं कफकासानिलमान्द्यदं गुरु स्यात् ॥ १७.११
सारसहंसबलाकाश्चक्रक्रौञ्चादयो जले प्लवनात् ।
प्लवसंज्ञाः कथितास्ते तन्मांसं गुरूष्णं च बलदायि ॥ १७.१२
अहिनकुलशल्यगोधामूषकमुख्या बिलेशयाः कथिताः ।
श्वासानिलकासहरं तन्मांसं पित्तदाहकरम् ॥ १७.१३
क्रोडरुरुकुरङ्गाद्या विविधा ये मृगादयः ।
स्थलेशयास्तु ते सर्वे मांसं सर्वगुणावहम् ॥ १७.१४
झषमकरनक्रकर्कटकूर्मप्रमुखा जलेशयाः कथिताः ।
मांसं तेषां तु सरं वृष्यं गुरु शिशिरबलसमीरकरम् ॥ १७.१५
शार्दूलसिंहशरभर्क्षतरक्षुमुख्या येऽन्ये प्रसह्य विनिहन्त्यभिवर्तयन्ति ।
ते कीर्तिताः प्रसहनाः पललं तदीयमर्शःप्रमेहजठरामयजाड्यहारि ॥ १७.१६
भोक्ता निष्कृष्यामिषं स प्रतुदः प्रोक्तो गृध्रश्येनकाकादिको यः ।
मांसं तस्य स्वादु संतर्पणं च स्निग्धं बल्यं पित्तदाहास्रदायि ॥ १७.१७
भक्ष्याश्च कुक्कुटकपोतकतित्तिराद्याः क्षौणीं विलिख्य नखरैः खलु वर्तयन्ति ।
ते विष्किराः प्रकथिताः पिशितं तदीयं वृष्यं कषायमधुरं शिशिरं च रुच्यम् ॥ १७.१८
अयमेव गुणो ज्ञेयः पक्षिणां च यथाक्रमम् ।
सर्वस्थानविशेषेण संख्या च गतिरुच्यते ॥ १७.१९
यत्र स्थिता ये गतितोऽपि देशादन्यत्र याता मृगपक्षिमुख्याः ।
स्वस्वोचितस्थाननिवर्तनेन मांसेऽपि तेषां गुणपर्ययाः स्युः ॥ १७.२०
मांसं खड्गमृगोत्थं तु बलकृद्बृंहणं गुरु ॥ १७.२१
गवयस्यामिषं बल्यं रुच्यं वृष्यं च बृंहणम् ॥ १७.२२
रुरुक्रव्यं गुरु स्निग्धं मन्दवह्निबलप्रदम् ॥ १७.२३
अपूतं गोभवं क्रव्यं गुरु वातकफप्रदम् ॥ १७.२४

वनमहिषामिषं स्यादीषल्लघु दीपनं च बलदायि ॥ १७.२५
ग्रामीणमहिषमांसं स्निग्धं निद्राकरं च पित्तहरम् ॥ १७.२६
हस्तिक्रव्यं गुरु स्निग्धं वातलं श्लेष्मकारकम् ।
बहुपुष्टिप्रदं चैव दुर्जरं मन्दवह्निदम् ॥ १७.२७
अश्वमांसं भवेदुष्णं वातघ्नं बलदं लघु ।
पित्तदाहप्रदं नृणां तदेतच्चातिसेवनात् ॥ १७.२८
उष्ट्रमांसं तु शिशिरं त्रिदोषशमनं लघु ।
बलपुष्टिप्रदं रुच्यं मधुरं वीर्यवर्धनम् ॥ १७.२९
गर्दभप्रभवं मांसं किंचिद्गुरु बलप्रदम् ।
रुच्यं तु वन्यजं शैत्यं बहुवीर्यबलप्रदम् ॥ १७.३०
एणस्य मांसं लघुशीतवृष्यं त्रिदोषहृत्षड्रसजं च रुच्यम् ॥ १७.३१
कुरङ्गमांसं मधुरं च तद्वत्कफापहं मांसदपित्तनाशि ॥ १७.३२
सारङ्गं जाङ्गलं स्निग्धं मधुरं लघु वृष्यकम् ॥ १७.३३
शिखरीसम्भवं मांसं लघु हृद्यं बलप्रदम् ॥ १७.३४
वराहमांसं गुरु वातहारि वृष्यं बलस्वेदकरं वनोत्थम् ॥ १७.३५
तस्माद्गुरु ग्रामवराहमांसं तनोति मेदो बलवीर्यवृद्धिम् ॥ १७.३६
शरशृङ्गस्य मांसं तु गुरु स्निग्धं कफप्रदम् ।
बल्यं वृष्यकरं पुष्टिकिंचिद्वातकरं परम् ॥ १७.३७
छागमांसं लघु स्निग्धं नातिशीतं रुचिप्रदम् ।
निर्दोषं वातपित्तघ्नं मधुरं बलपुष्टिदम् ॥ १७.३८
छागपोतभवं मांसं लघु शीतं प्रमेहजित् ।
ईषल्लघु बलं दत्ते तदेव तृणचारिणः ॥ १७.३९
औरभ्रं मधुरं शीतं गुरु विष्टम्भि बृंहणम् ॥ १७.४०
आविकं मधुरं मांसं किंचिद्गुरु बलप्रदम् ॥ १७.४१
शल्यमांसं गुरु स्निग्धं दीपनं श्वासकासजित् ॥ १७.४२
पिच्छिलं नाकुलं मांसं वातघ्नं श्लेष्मपित्तकृत् ॥ १७.४३
गोधामांसं तु वातघ्नं श्वासकासहरं च तत् ॥ १७.४४
शशमांसं त्रिदोषघ्नं दीपनं श्वासकासजित् ॥ १७.४५
अन्ये बिलेशया ये स्युः कोकडोन्दुरुकादयः ।
मांसं च गर्हितं तेषां मान्द्यं गौरवदुर्जरम् ॥ १७.४६
आरण्यकुक्कुटक्रव्यं हृद्यं श्लेष्महरं लघु ॥ १७.४७
ग्राम्यकुक्कुटजं स्निग्धं वातहृद्दीपनं गुरु ॥ १७.४८
हारीतपललं स्वादु कफपित्तास्रदोषजित् ॥ १७.४९
वर्धनं वीर्यबलयोस्तद्वदेव कपोतजम् ॥ १७.५०
पारावतपलं स्निग्धं मधुरं गुरु शीतलम् ।
पित्तास्रदाहनुद्बल्यं तथान्यद्वीर्यवृद्धिदम् ॥ १७.५१
स्निग्धं तित्तिरिजं मांसं लघु वीर्यबलप्रदम् ।
कषायं मधुरं शीतं त्रिदोषशमनं परम् ॥ १७.५२
तद्वच्च लावकं मांसं पथ्यं ग्राहि लघु स्मृतम् ॥ १७.५३
तद्वच्च वर्तकमांसं निर्दोषं वीर्यपुष्टिदम् ॥ १७.५४
चटकायाः पलं शीतं लघु वृष्यं बलप्रदम् ॥ १७.५५
तद्वच्चारण्यचटकक्रव्यं लघु च पथ्यदम् ॥ १७.५६
चटकाच्छीतलं रुच्यं वृष्यं कापिञ्जलामिषम् ॥ १७.५७
तद्वच्चकोरजं मांसं वृष्यं च बलपुष्टिदम् ॥ १७.५८
क्रव्यं तु चक्रवाकस्य लघु स्निग्धं बलप्रदम् ।

वह्निकृत्सर्वशूलघ्नमुष्णं वातामयापहम् ॥ १७.५९
सारसस्य तु मांसं च मधुराम्लकषायकम् ।
महातीसारपित्तघ्नं ग्रहण्यर्शोरुजापहम् ॥ १७.६०
स्निग्धहिमं गुरु वृष्यं मांसं जलपक्षिणां तु वातहरम् ॥ १७.६१
तेष्वपि च हंसमांसं वृष्यतमं तिमिरहरणं च ॥ १७.६२
अन्ये बकबलाकाद्या गुरवो मांसभक्षणात् ।
अनुक्तं तु मृगादीनां मांसं ग्राह्यं हितादिषु ॥ १७.६३
मत्स्याः स्निग्धोष्णगुरवो वातघ्ना रक्तपित्तदाः ।
तत्र कांश्चिदपि ब्रूमो विशेषगुणलक्षणान् ॥ १७.६४
रोहितो गर्गरो भीरुर्बालको बर्बरस्तथा ।
छागलो रक्तमत्स्योऽथ महिषश्चाविलस्तथा ॥ १७.६५
वातूकोऽलोमशा चापि ज्ञेया कर्णवशादयः ।
लक्ष्यलक्षणवीर्यादीन् कथयामि यथाक्रमम् ॥ १७.६६
कृष्णः शल्की श्वेतकुक्षिस्तु मत्स्यो यः श्रेष्ठोऽसौ रोहितो वृत्तवक्त्रः ।
कोष्णं बल्यं रोहितस्यापि मांसं वातं हन्ति स्निग्धमाप्नोति वीर्यम् ॥ १७.६७
यः पीतवर्णोऽपि च पिच्छिलाङ्गः पृष्ठे तु रेखाबहुलः सशल्कः ।
स गर्गरो बर्बरनादरूक्षो जडश्च शीतः कफवातदायी ॥ १७.६८
पृष्ठे पक्षौ द्वौ गले पुच्छकं चेत्सर्पाभः स्यात्फूत्कृतो वृत्ततुण्डः ।
ज्ञेयः शल्की मत्स्यको भीरुरुक्तः स्निग्धो वृष्यो दुर्जरो वातकारी ॥ १७.६९
नातिस्थूलो वृत्तवक्त्रोऽपि शस्तो धत्ते दन्तान् श्मश्रुलो दीर्घकायः ।
संध्यायां वा रात्रिशेषे च वर्यः प्रोक्तो बालः पथ्यबल्यः सुवृष्यः ॥ १७.७०
पृष्ठे कुक्षौ कण्टकी दीर्घतुण्डः सर्पाभो यः सोऽप्ययं बर्बराख्यः ।
वाताटोपं सोऽपि दत्ते जडश्च बल्यः स्निग्धो दुर्जरो वीर्यकारी ॥ १७.७१
श्वेतं सुकायं समदीर्घवृत्तं निःशल्ककं छागलकं वदन्ति ।
नले द्विकण्टः किल तस्य पृष्ठे कण्टः सुपथ्यो रुचिदो बलप्रदः ॥ १७.७२
यो रक्ताङ्गो नातिदीर्घो न चाल्पो नातिस्थूलो रक्तमत्स्यः स चोक्तः ।
शीतो रुच्यः पुष्टिकृद्दीपनोऽसौ नाशं धत्ते किंच दोषत्रयस्य ॥ १७.७३
यः कृष्णो दीर्घकायः स्यात्स्थूलशल्को बलाधिकः ।
मत्स्यो महिषनामासौ दीपनो बलवीर्यदः ॥ १७.७४
शुक्लाङ्गस्ताम्रपक्षो यः स्वल्पाङ्गश्चाविलाह्वयः ।
सुरुच्यो मधुरो बल्यो गुणाढ्यो वीर्यपुष्टिदः ॥ १७.७५
यः स्थूलाङ्गो माहिषाकारको यस्तालुस्थाने नीरजाभां दधाति ।
शल्कं स्थूलं यस्य वातूककोऽसौ दत्ते वीर्यं दीपनं वृष्यदायी ॥ १७.७६
वितस्तिमानः श्वेताङ्गः सूक्ष्मशल्कः सुदीपनः ।
अलोमशाह्वयो मत्स्यो बलवीर्याङ्गपुष्टिदः ॥ १७.७७
यो वृत्तगौल्यः कृष्णाङ्गः शल्की कर्णवशाभिधः ॥ १७.७८
दीपनः पाचनः पथ्यो वृष्योऽसौ बलपुष्टिदः ॥ १७.७९
निःशल्का निन्दिता मत्स्याः सर्वे शल्कयुता हिताः ।
वपुःस्थैर्यकरा वीर्यबलपुष्टिविवर्धनाः ॥ १७.८०
ह्रदकुल्याजलधिनिर्झरतडागवापीजले च ये मत्स्याः ।
ते तु जडा नादेया यथोत्तरं लघुतरास्तु नादेयाः ॥ १७.८१
क्षाराम्बुमत्स्या गुरवोऽस्रदाहदा विष्टम्भदास्ते लवणार्णवादिजाः ।
तानश्नतां स्वादुजलस्थिता अपि ज्ञेया जडास्तेऽपि तथा शृतानिमान् ॥ १७.८२
शैलाटवीनगरभूजलचारिणो ये ये केऽपि सत्त्वनिवहाः खलु सप्तसंख्याः ।
तन्मांसमत्र न वितथ्यमथाभ्यधायि ग्रन्थस्य विस्तरभयाच्च नवोपयोगात् ॥ १७.८३

पक्वं मांसं हितं सर्वं बलवीर्यविवर्धनम् ।
भृष्टमांसं विदाहि स्यादस्रवातादिदोषकृत् ॥ १७.८४
पूर्वार्धं पुरुषस्य तद्गुरुतरं पश्चार्धभागः स्त्रियाः स्त्री गुर्वी किल गुर्विणी यदि तथा योषिच्च तुल्या लघुः ।
पक्षी चेत्पुरुषो लघुः शृणु शिरःस्कन्धोरुपृष्ठे क्रमात्मांसं यच्च कटिस्थितं तदखिलं गुर्वेव सर्वात्मना ॥ १७.८५
रसरक्तादिधातूनां गुरुः स्यादुत्तरोत्तरं मेढ्रवृक्कयकृन्मांसं वार्षणं चातिमात्रतः ॥ १७.८६
इत्थं प्रतिस्थलविलाम्बुनभःप्रचारप्राण्यङ्गमांसगुणनिर्णयपूर्णमेनम् ।
वर्गं विचार्य भिषजा विनियुज्यमानो भुक्त्वाशनं न विकृतिं समुपैति मर्त्यः ॥ १७.८७
यस्यासीत्समितिद्विपाधिपबृहत्कुम्भान्तरस्थामिषप्रायाभ्यासपिपासयेव तरुणी नेत्राम्बुधारा द्विषाम् ।
तस्यायं पुरुषप्रतापसुहृदः श्रीमन्नृसिंहेशितुर्वर्गः सप्तदशो निषीदति कृतौ नामादिचूडामणौ ॥ १७.८८

राजनिघण्टु, मनुष्यादिवर्गः
मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
द्विपादाश्चेतना भूस्था भूमिजा भूस्पृशो विशः ॥ १८.१
पुरुषः पूरुषो ना च नरः पञ्चजनः पुमान् ।
अर्थाश्रयोऽधिकारी स्यात्कर्मार्हश्च जनोऽर्थवान् ॥ १८.२
स्त्री योषिद्वनिताबला सुनयना नारी च सीमन्तिनी रामा वामदृगङ्गना च ललना कान्ता पुरंध्री वधूः ।
सुभ्रूः सा वरवर्णिनी च सुतनुस्तन्वी तनुः कामिनी तन्वङ्गी रमणी कुरङ्गनयना भीरुः प्रिया भामिनी ॥ १८.३
योषिन्महेला महिला विलासिनी नितम्बिनी सापि च मत्तकाशिनी ।
जनी सुनेत्रा प्रमदा च सुन्दरी स्यादञ्चितभ्रूर्ललिता विलासिनी ॥ १८.४
मानिनी च वरारोहा नताङ्गी च नतोदरा ।
प्रतीपदर्शिनी श्यामा कामिनी दर्शनी च सा ॥ १८.५
भर्ता पतिर्वरः कान्तः परिणेता प्रियो गृही ॥ १८.६
भार्या पत्नी प्रिया जाया दाराश्च गृहिणी च सा ॥ १८.७
नपुंसकं भवेत्क्लीबं तृतीया प्रकृतिस्तथा ।
षण्ड्ः पण्डश्च नारी तु पोटा स्त्रीपुंसलक्षणा ॥ १८.८
अथ राज्ञी च पट्टार्हा महिषी राजवल्लभा ॥ १८.९
भोगिन्योऽन्या विलासिन्यः संभुङ्क्ते यास्तु पार्थिवः ॥ १८.१०
राजभोग्याः सुमुख्यो यास्ता भट्टिन्य इति स्मृताः ॥ १८.११
वेश्या तु गणिका भोग्या वारस्त्री स्मरदीपिका ॥ १८.१२
ब्रह्मा तु ब्राह्मणो विप्रः षट्कर्मा च द्विजोत्तमः ॥ १८.१३
राजा तु सार्वभौमः स्यात्पार्थिवः क्षत्रियो नृपः ॥ १८.१४
वैश्यस्तु व्यवहर्ता विड्वार्त्तिको वाणिजो वणिक् ॥ १८.१५
शूद्रः पज्जश्चतुर्थः स्याद्द्विजदास उपासकः ॥ १८.१६
विप्रः क्षत्रो वैश्यशूद्रौ च वर्णाश्चत्वारोऽमी तत्र पूर्वे द्विजाः स्युः ।
एषामेव प्रातिलोम्यानुलोम्याज्जायन्तेऽन्या जातयः संकरेण ॥ १८.१७
बालः पाकोऽर्भको गर्भः पोतकः पृथुकः शिशुः ।
शावोऽर्भो बालिशो डिम्भो वटुर्माणवको मतः ॥ १८.१८
जातोऽर्भकः पक्षदिनेन मासतः पाकस्त्रिभिस्तैरथ पोतकाभिधः ।
षड्भिस्तु मासैः पृथुकोऽब्दतः शिशुस्त्रिभिर्वटुर्माणवकश्च सप्तभिः ॥ १८.१९
बालोऽब्दैः पञ्चदशभिः कुमारस्त्रिंशता स्मृतः ।
युवा पञ्चाशता वर्षैर्वृद्धः स्यादत उत्तरैः ॥ १८.२०
कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमा पञ्चदशाद्यौवनं तु ततः परम् ॥ १८.२१
युवा वयःस्थस्तरुणो वृद्धस्तु स्थविरो जरन् ।
प्रवया यातयामश्च जीनो जीर्णश्च जर्जरः ॥ १८.२२
बालोत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥ १८.२३
कन्या कुमारी गौरी तु नग्निकानागतार्तवा ॥ १८.२४
सा मध्यमा वयःस्था च युवती सुस्तनी च सा ।
चिरण्टी सुवयाः श्यामा प्रौढा दृष्टरजाश्च सा ॥ १८.२५
गुर्विण्यापन्नसत्त्वा स्यादन्तर्वत्नी च गर्भिणी ॥ १८.२६
निष्फला जरती वृद्धा स्थविरा च गतार्तवा ॥ १८.२७
पुष्पिता मलिना म्लाना पांशुला च रजस्वला ॥ १८.२८
वन्ध्यावकेशिनी शून्या मोघपुष्पा वृथार्तवा ॥ १८.२९
तनुस्तनूः संहननं शरीरं कलेवरं क्षेत्रवपुःपुराणि ।
गात्रं च मूर्तिर्घनकायदेहावष्टाङ्गपीडानि च विग्रहश्च ॥ १८.३०

अङ्गमंसः प्रतीकश्चापघनोऽवयवोऽपि च ॥ १८.३१
शिरः शीर्षकमुण्डं च मूर्धा मौलिश्च मस्तकम् ।
वराङ्गमुत्तमाङ्गं च कपालं केशभृत्स्मृतम् ॥ १८.३२
केशाः शिरसिजा वालाः कुन्तला मूर्धजाः कचाः ।
चिकुराः करुहाश्चाथ तद्वेष्टाः कवरीमुखाः ॥ १८.३३
दृग्दृष्टिर्लोचनं नेत्रं चक्षुर्नयनमम्बकम् ।
ईक्षणं ग्रहणं चाक्षि दर्शनं च विलोचनम् ॥ १८.३४
अपाङ्गो नेत्रपर्यन्तो नयनोपान्त इत्यपि ।
तयोर्मध्यगता तारा बिम्बिनी च कनीनिका ॥ १८.३५
भालं ललाटमलिकं कथयन्ति गोधिर्भ्रूश्चिल्लिका च नयनोर्ध्वगरोमराजिः ।
मध्यं तयोर्भवति कूर्चमथ श्रुतिस्तु श्रोतः श्रवः श्रवणकर्णवचोग्रहाश्च ॥ १८.३६
ओष्ठोऽधरो दन्तवासो दन्तवस्त्रं रदच्छदः ।
तयोरुभयतो देशौ यौ प्रान्तौ सृक्कणी च तौ ॥ १८.३७
घ्राणं गन्धवहो घोणा सिङ्घिणी नासिका च सा ॥ १८.३८
शङ्खः कर्णसमीपः स्यात्शिङ्घाणं नासिकामले ॥ १८.३९
तुण्डमास्यं मुखं वक्त्रं वदनं लपनानने ॥ १८.४०
ओष्ठाधरस्तु चिबुकं गण्डो गल्लः कपोलकः ॥ १८.४१
हनूस्तदूर्ध्वं दशनाश्च दन्ता द्विजा रदास्ते रदनास्तथोक्ताः ॥ १८.४२
जिह्वा रसज्ञा रसना च सोक्ता स्यात्काकुदं तालु च तालुकं च ॥ १८.४३
तदूर्ध्वं सूक्ष्मजिह्वा या घण्टिका लम्बिका च सा ॥ १८.४४
अन्याधोमूलजिह्वा स्यात्प्रतिजिह्वोपजिह्विका ॥ १८.४५
अवटुस्तु शिरःपश्चात्संधिर्घाटा कृकाटिका ॥ १८.४६
ग्रीवा च कंधरा कंधिः शिरोधिश्च शिरोधरा ॥ १८.४७
कण्ठो गलो निगालोऽथ घण्टिका गलशुण्ठिका ॥ १८.४८
धमनी तु शिरांसे तु स्कन्धोऽधःशिखरं तथा ॥ १८.४९
तस्य संधिस्तु जत्रु स्यात्कक्षा दोर्मूलसंज्ञका ॥ १८.५०
तदधस्ताद्भवेत्पार्श्वं पृष्ठं पश्चात्तनोः स्मृतम् ॥ १८.५१
दोर्दोषा च प्रवेष्टश्च बाहुर्बाहा भुजो भुजा ॥ १८.५२
पाणिस्तु पञ्चशाखः स्यात्करो हस्तः शयस्तथा ॥ १८.५३
करमूले मणिबन्धो भुजमध्ये कूर्परः कफोणिश्च ॥ १८.५४
तस्मादधः प्रकोष्ठः प्रगण्डकः कूर्परांसमध्यं स्यात् ॥ १८.५५
अङ्गुल्यः करशाखाः स्युः प्रदेशिन्यां तु तर्जनी ।
परुः स्यादङ्गुलीसंधिः पर्वसंधिश्च कथ्यते ॥ १८.५६
अथाङ्गुष्ठप्रदेशिन्यौ मध्यमानामिका तथा ।
कनिष्ठा चेति पञ्च स्युः क्रमेणाङ्गुलयः स्मृताः ॥ १८.५७
कामाङ्कुशाः कररुहाः करजा नखरा नखाः ।
पाणिजाङ्गुलीसम्भूताः पुनर्भवपुनर्नवाः ॥ १८.५८
करस्याधः प्रपाणिः स्यादूर्ध्वं करतलं स्मृतम् ।
रेखाः सामुद्रिके ज्ञेयाः शुभाशुभनिवेदिकाः ॥ १८.५९
स्तनोरसिजवक्षोजपयोधरकुचास्तथा ॥ १८.६०
स्तनाग्रं चूचुकं वृत्तं शिखा स्तनमुखं च तत् ॥ १८.६१
वक्षो वत्समुरः क्रोडो हृदयं हृद्भुजान्तरम् ॥ १८.६२
कुक्षिः पिचिण्डो जठरं तुन्दं स्यादुदरं च तत् ॥ १८.६३
जीवस्थानं तु मर्म स्यात्कटिप्रान्ते त्रिकं स्मृतम् ॥ १८.६४
नाभिः स्यादुदरावर्तस्ततोऽधो वस्तिरुच्यते ।

वस्तिश्च वातशीर्षं स्याद्गर्भस्थानं च तत्स्त्रियाः ॥ १८.६५
गर्भाशयो जरायुश्च गर्भाधारश्च च स्मृतः ॥ १८.६६
नाभिस्तनान्तरं जन्तोरामाशयः इति स्मृतः ॥ १८.६७
पक्वाशयो ह्यधो नाभेर्वस्तिर्मूत्राशयः स्मृतः ॥ १८.६८
कटिः ककुद्मती श्रोणी नितम्बश्च कटीरकम् ।
आरोहं श्रोणिफलकं कलत्रं रसनापदम् ॥ १८.६९
नितम्बश्चरमं श्रोणेः स्त्रीणां जघनमग्रतः ॥ १८.७०
ककुन्दरौ तु सर्वेषां स्यातां जघनकूपकौ ।
कटिप्रोथौ स्फिचौ पायुर्गुदापानं तदासनम् ॥ १८.७१
गुदमुष्कद्वयोर्मध्ये यो भागः स भगः स्मृतः ॥ १८.७२
मुष्कोऽण्डमण्डकोषश्च वृषणो बीजपेशिका ॥ १८.७३
शिश्नं शेफश्च लिङ्गं च मेढ्रं साधनमेहने ॥ १८.७४
योनिर्भगो वराङ्गं स्यादुपस्थं स्मरमन्दिरम् ॥ १८.७५
ऊरू तु सक्थिनी श्रोणिसक्थ्नोः संधिस्तु वङ्क्षणः ।
जङ्घोरूमध्यपर्व स्याज्जान्वष्ठीवच्च चक्रिका ॥ १८.७६
जङ्घा तु प्रसृता ज्ञेया तन्मध्ये पिण्डिका तथा ॥ १८.७७
जङ्घाङ्घ्रिसंधिग्रन्थौ तु घुटिका गुल्फ इत्यपि ॥ १८.७८
गुल्फस्याधस्तु पार्ष्णिः स्यात्पदाग्रं प्रपदं मतम् ॥ १८.७९
विक्रमश्चरणः पादः पादाङ्घ्रिश्च पदं क्रमः ॥ १८.८०
क्रोडमङ्कस्तथोत्सङ्गः प्राग्भागो वपुषः स्मृतः ॥ १८.८१
करो भवेत्संहितविस्तृताङ्गुलस्तलश्चपेटः प्रतलः प्रहस्तकः ।
मुष्टिर्भवेत्संहृतपिण्डिताङ्गुलावाकुञ्चितोऽग्रे प्रसृतः प्रकीर्तितः ॥ १८.८२
स्यात्तर्जनी मध्यमिका त्वनामिका कनिष्ठिकाङ्गुष्ठयुता यदा तदा ।
प्रादेशतालाभिधगोस्रवस्तथा वितस्तिरत्यर्थमिह क्रमादियम् ॥ १८.८३
हस्तस्तु विस्तृते पाणावा मध्याङ्गुलिकूर्परम् ॥ १८.८४
बद्धमुष्टौ सरत्निः स्यादरत्निरकनिष्ठकः ॥ १८.८५
व्यामः सहस्तयोः स्यात्तु तिर्यग्बाह्वोर्यदन्तरम् ।
ऊर्ध्वं विस्तृतदोष्पाणिर्नृमानं पौरुषं विदुः ॥ १८.८६
जीवस्थानं तु मर्म स्याज्जीवागारं तदुच्यते ॥ १८.८७
मर्मस्थानं च तत्प्रोक्तं भ्रूमध्यादिष्वनेकधा ॥ १८.८८
भ्रूमध्यकण्ठगलशङ्खकचांसपृष्ठग्रीवागुदाण्डपदपाणियुगास्थिसंधीन् ।
वैद्याः शरेक्षणमितानि वदन्ति मर्मस्थानानि चाङ्गगतिनाशकराणि मर्त्ये ॥ १८.८९
लाला भवेन्मुखस्रावः सृणिका स्यन्दिनी च सा ॥ १८.९०
स्वेदो घर्मश्च घर्माम्भो दूषिका नेत्रयोर्मलम् ॥ १८.९१
मलं विष्ठा पुरीषं च विट्किट्टं पूतिकं च तत् ।
मूत्रं तु गुह्यनिष्यन्दः प्रस्रावः स्रवणं स्रवः ॥ १८.९२
वली चर्मतरंगः स्यात्त्वगूर्मिस्त्वक्तरंगकः ॥ १८.९३
पलितं च जरा लक्ष्म केशशौक्ल्यं च तद्भवेत् ॥ १८.९४
रसासृङ्मांसमेदोऽस्थिमज्जानः शुक्रसंयुताः ।
शरीरस्थैर्यदाः सम्यक्विज्ञेयाः सप्त धातवः ॥ १८.९५
रसस्तु रसिका प्रोक्ता स्वेदमाता वपुःस्रवः ।
चर्माम्भश्चर्मसारश्च रक्तसूरस्रमातृका ॥ १८.९६
रक्तास्रं रुधिरं त्वग्जं कीलालक्षतजानि तु ।
शोणितं लोहितं चासृक्शोणं लोहं च चर्मजम् ॥ १८.९७
मांसं तु पिशितं क्रव्यं पलं तु रस्यमस्रजम् ।

पललं जाङ्गलं कीरमामिषं च तदुच्यते ॥ १८.९८
मेदस्तु मांससारः स्यान्मांसस्नेहो वसा वपा ॥ १८.९९
मेदोजमस्थिधातुः स्यात्कुल्यं कीकसकं च तत् ॥ १८.१००
अस्थिसारस्तु मज्जा स्यात्तेजो बीजं तथास्थिजम् ।
जीवनं देहसारश्च तथास्थिस्नेहसंज्ञकम् ॥ १८.१०१
शुक्रं पुंस्त्वं रेतो बीजं वीर्यं च पौरुषं कथितम् ।
इन्द्रियमन्नविकारो मज्जरसो हर्षणं बलं चैव ॥ १८.१०२
रसादस्रं ततो मांसं मांसान्मेदोऽस्थि तद्भवम् ।
अस्थ्नो मज्जा ततः शुक्रमित्थमेषां जनिक्रमः ॥ १८.१०३
तिलकं क्लोम मस्तिष्कं स्नेहस्तु मस्तकोद्भवः ॥ १८.१०४
अन्त्रं पुरी तदाख्यातं प्लीहा गुल्म इति स्मृतः ॥ १८.१०५
वसा तु वस्नसा स्नायुर्वत्सोक्ता देहवल्कलम् ।
सा त्वक्[... १० Zएइछेन्] ॥ १८.१०६
शिरोधिजा मन्या धमनी धरणी धरा ।
तन्तुकी जीवितज्ञा च नाडी सिंही च कीर्तिता ॥ १८.१०७
कण्डरा तु महास्नायुर्महानाडी च सा स्मृता ॥ १८.१०८
शरीरास्थि तु कङ्कालं स्यात्करङ्कोऽस्थिपञ्जरः ।
स्रोतांसि खानि छिद्राणि कालखण्डं यकृन्मतम् ॥ १८.१०९
शिरोऽस्थि तु करोटिः स्यात्शिरस्त्राणं तु शीर्षकम् ।
तत्खण्डं खर्परं प्राहुः कपालं च तदीरितम् ॥ १८.११०
पृष्ठास्थि तु कसेरुः स्यात्शाखास्थि नलकं स्मृतम् ॥ १८.१११
पार्श्वास्थि पर्शुका प्रोक्तमिति देहाङ्गनिर्णयः ॥ १८.११२
आत्मा शरीरी क्षेत्रज्ञः पुद्गलः प्राण ईश्वरः ।
जीवो विभुः पुमानीशः सर्वज्ञः शम्भुरव्ययः ॥ १८.११३
प्रधानं प्रकृतिर्माया शक्तिश्चैतन्यमित्यपि ॥ १८.११४
अहंकारोऽभिमानः स्यादहंताहंमतिस्तथा ॥ १८.११५
मानसं हृदयं स्वान्तं चित्तं चेतो मनश्च हृत् ॥ १८.११६
सत्त्वं रजस्तमश्चेति प्रोक्ताः पुंसस्त्रयो गुणाः ॥ १८.११७
श्रोत्रं त्वग्रसना नेत्रं नासा चेत्यक्षपञ्चकम् ॥ १८.११८
अक्षं हृषीकं करणं वर्हणं विषयीन्द्रियम् ॥ १८.११९
शब्दः स्पर्शो रसो रूपं गन्धश्च विषया अमी ।
इन्द्रियार्था गोचरास्ते पञ्चभूतगुणाः खलु ॥ १८.१२०
आकाशमनिलस्तोयं तेजः पृथ्वी च तान्यपि ।
क्रमेण पञ्च भूतानि कीर्तितानि मनीषिभिः ॥ १८.१२१
इत्येष मानुषवयोत्तरवर्णगात्रधात्वङ्गलक्षणनिरूपणपूर्यमाणः ।
वर्गः कृतस्तु भिषजां बहुदेहदोषनामा निदानगणनिर्णयधीनिवेशः ॥ १८.१२२
इति पशुपतिपादाम्भोजसेवासमाधिप्रतिसमयसमुत्थानन्दसौख्यैकसीम्ना ।
नरहरिकृतिनायं निर्मिते याति नामप्रचयमुकुटरत्ने शान्तिमष्टादशाङ्कः ॥ १८.१२३

सिंहः पञ्चमुखो नखी मृगपतिर्मानी हरिः केसरी क्रव्यादो नखरायुधो मृगरिपुः शूरश्च कण्ठीरवः ।
विक्रान्तो द्विरदान्तको बहुबलो दीप्तो बली विक्रमी हर्यक्षः स च दीप्तपिङ्गल इति ख्यातो मृगेन्द्रश्च सः ॥ १९.१
महाशृङ्गस्तु शरभो मेघस्कन्धो महामनाः ।
अष्टपादो महासिंहो मनस्वी पर्वताश्रयः ॥ १९.२
व्याघ्रः पञ्चनखो व्यालः शार्दूलोऽथ गुहाशयः ।
तीक्ष्णदंष्ट्रः पुण्डरीको द्वीपी भीरुर्नखायुधः ॥ १९.३
चित्रकश्चित्रकायः स्यादुपव्याघ्रो मृगान्तकः ।
शूरश्च क्षुद्रशार्दूलश्चित्रव्याघ्रश्च स स्मृतः ॥ १९.४
ऋक्षो भल्लूकोऽथ भल्लः सशल्यो दुर्घोषः स्यात्भल्लकः पृष्ठदृष्टिः ।
द्राघिष्ठः स्यात्दीर्घकेशश्चिरायुर्ज्ञेयः सोऽयं दुश्चरो दीर्घदर्शी ॥ १९.५
मृगादस्तु स विज्ञेयस्तरक्षुर्घोरदर्शनः ॥ १९.६
शिवा तु भूरिमायः स्यात्गोमायुर्मृगधूर्तकः ।
शृगालो वञ्चकः क्रोष्टा फेरवः फेरुजम्बुकौ ।
शालावृकः शिवालुश्च फेरण्डो व्याघ्रसेवकः ॥ १९.७
ईहामृगस्तु कोकः स्याद्वृको वत्सादनोऽविभुक् ।
गोवत्सारिश्छागलारिश्छागलान्तो जलाश्रयः ॥ १९.८
कुक्कुरः सारमेयश्च भषकः श्वानकः शुनः ।
भूस्तरो वक्रलाङ्गूलो वृकारी रात्रिजागरः ॥ १९.९
कौलेयको ग्राममृगो मृगारिर्मृगदंशकः ।
शूरः शुनिः शयालुश्च भषः शरदिकामुकः ॥ १९.१०
बिडालो मूषकारातिः वृषदंशो बिडालकः ।
शालावृकश्च मार्जारो मायावी दीप्तलोचनः ॥ १९.११
अन्यो लोमशमार्जारः पूतिको मारजातकः ।
सुगन्धिमूत्रपतनो गन्धमार्जारकश्च सः ॥ १९.१२
द्विरदगजमतंगजेभकुम्भिद्विरदनवारणहस्तिपद्मिनागाः ।
करिकरटिविषाणिकुञ्जरास्ते रदनिमदाबलसम्मदद्विपाश्च ॥ १९.१३
भद्रः स्तम्बेरमो दन्ती द्रुमारिः षष्टिहायनः ।
मातंगः पुष्करी दन्ताबलश्चानेकपस्त्विभः ॥ १९.१४
भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः ।
वनप्रचारसारूप्यसत्त्वभेदोपलक्षिताः ॥ १९.१५
स बालः कलभो ज्ञेयो दुर्दान्तो व्याल उच्यते ।
प्रभिन्नो गर्जितो भ्रान्तो मत्तो मदकलश्च सः ॥ १९.१६
इभी तु करिणी ज्ञेया हस्तिनी धेनुका वशा ।
करेणुः पद्मिनी चैव मातंगी वासिता च सा ॥ १९.१७
खड्गः खड्गमृगः क्रोधी मुखशृङ्गो मुखेबली ।
गण्डको वज्रचर्मा च खड्गी वार्ध्रीणसश्च सः ॥ १९.१८
उष्ट्रो दीर्घगतिर्बली च करभो दासेरको धूसरो लम्बोष्ठो लवणः क्रमेलकमहाजङ्घौ च बीजाङ्घ्रिकः ।
दीर्घः शृङ्खलको महानथ महाग्रीवो महाङ्गो महानादः सोऽपि महाध्वगः स च महापृष्ठो बलिष्ठश्च सः ॥ १९.१९
महिषः कासरः क्रोधी कलुषश्चापि सैरिभः ।
लुलापमत्तरक्ताक्षा विषाणी कवली बली ॥ १९.२०
महिषी मन्दगमना महाक्षीरा पयस्विनी ।
लुलापकान्ता कलुषा तुरंगद्वेषिणी च सा ॥ १९.२१
गौस्तु भद्रो बलीवर्दो दम्यो दान्तः स्थिरो बली ।
उक्षानड्वान् ककुद्मान् स्याद्दृषभो वृषभो वृषः ॥ १९.२२

धुर्यो धुरीणो धौरेयः शांकरो हरवाहनः ।
रोहिणीरमणो वोढा गोनाथः सौरभेयकः ॥ १९.२३
वृषभस्तु वृषः प्रोक्तो महोक्षः पुंगवो बली ।
गोनाथ उक्षा ऋषभो गोप्रियो गोपतिश्च सः ॥ १९.२४
धवलः शबलस्ताम्रश्चित्रश्च धूसरस्तथा ।
इत्यादिवर्णभेदेन ज्ञेया गावोऽत्र भेदिताः ॥ १९.२५
विनीतः शिक्षितो दान्तो धुर्यो वोढा च धौरिकः ॥ १९.२६
बालो वत्सतरः प्रोक्तो दुर्दान्तो गडिरुच्यते ॥ १९.२७
गौर्मातोस्रा शृङ्गिणी सौरभेयी माहेयी स्याद्रोहिणी धेनुरघ्न्या ।
दोग्ध्री भद्रा भूरिमत्यानडुह्यौ कल्याणी स्यात्पावनी चार्जुनी च ॥ १९.२८
वनगौर्गवयः प्रोक्तो बलभद्रो महागवः ॥ १९.२९
गवयी वनधेनुः स्यात्सैव भिल्लगवी मता ॥ १९.३०
चमरो व्यजनो वन्यो धेनुगो बालधिप्रियः ।
तस्य स्त्री चमरी प्रोक्ता दीर्घबाला गिरिप्रिया ॥ १९.३१
वराहः स्तब्धरोमा च रोमशः शूकरः किरिः ।
वक्रदंष्ट्रः किटिर्दंष्ट्री क्रोडो दन्तायुधो बली ॥ १९.३२
पृथुस्कन्धश्च भूदारः पोत्री घोणान्तभेदनः ।
कोलः पोत्रायुधः शूरो बह्वपत्यो रदायुधः ॥ १९.३३
अन्यस्तु विड्वराहः स्याद्ग्रामीणो ग्रामशूकरः ।
ग्राम्यक्रोडो ग्राम्यकोलो विष्ठाशी दारकश्च सः ॥ १९.३४
अश्वो घोटस्तुरंगोऽर्वा तुरगश्च तुरंगमः ।
वाहो वाजी मुद्गभोजी वीतिः सप्तिश्च सैन्धवः ॥ १९.३५
हरिर्हयश्च धाराटो जवनो जीवनो जवी ।
गन्धर्वो वाहनश्रेष्ठः श्रीभ्रातामृतसोदरः ॥ १९.३६
आरट्टसिन्धुजवनायुजपारसीककाम्बोजबाह्लिकमुखा विविधास्तुरङ्गाः ।
साम्राणशेफकमुखा अपि देशतः स्युर्वर्णेन तेऽपि च पुनर्बहुधा भवन्ति ॥ १९.३७
श्वेतः कर्कः सोऽथ रक्तस्तु शोणो हैमः कृष्णो नीलवर्णस्तु नीलः ।
शुभ्रैर्नेत्रैर्मल्लिकाक्षो निदिष्टः कृष्णैरुक्तः सोऽयमिन्द्रायुधाख्यः ॥ १९.३८
इत्थं नानावर्णभेदेन वाजी ज्ञातव्योऽयं लोकरूढैः सुधीभिः ।
अत्रास्माभिर्न प्रपञ्चः कृतोऽस्मादाजानेयोऽप्यत्र वाजी कुलीनः ॥ १९.३९
सुकुलः सुविनीताश्वः किशोरस्तुरगार्भकः ॥ १९.४०
वाजिनी वडबा चापि प्रसूरश्वाश्विनी च सा ॥ १९.४१
गर्दभः शङ्कुकर्णश्च बालेयो रासभः खरः ।
भारवाहो भूरिगमश्चक्रीवान् धूसराह्वयः ॥ १९.४२
वेसरस्त्वश्वखरजः सकृद्गर्भोऽध्वगः क्षमी ।
संतुष्टो मिश्रजः प्रोक्तो मिश्रशब्दोऽतिभारगः ॥ १९.४३
अजो बुक्कश्च मेध्यः स्याल्लम्बकर्णः पशुश्च सः ।
छागलो बर्करश्छागस्तुभो बस्तः पयस्वलः ॥ १९.४४
अजा पयस्विनी भीरुश्छागी मेध्या गलस्तनी ॥ १९.४५
मेषो भेडो हुडो मेण्ढ्रः ऊर्णायुरुरणस्तथा ।
एडकः शृङ्गिणोऽविः स्यादुरभ्रो रोमशो बली ॥ १९.४६
नानादेशविशेषेण मेषा नानाविधा अमी ॥ १९.४७
मृगः कुरङ्गो वातायुः कृष्णसारः सुलोचनः ।
हरिणोऽजिनयोनिः स्यादेणः पृषत इत्यपि ॥ १९.४८
ककुवागथ सारङ्गः शाखिशृङ्गश्च चित्तलः ।

अन्यश्च भारशृङ्गः स्यात्महाशृङ्गो वनप्रियः ॥ १९.४९
रुरुस्तु रौहिषो रोही स्यान्न्यङ्कुश्चैव शम्बरः ।
नीलकः पृषतश्चैव रङ्कुः शबलपृष्ठकः ॥ १९.५०
शिखर्युपकुरङ्गः स्यात्श्रीकारी च महाजवः ।
जवनी वेगिहरिणी जङ्घालो जाङ्घिकाह्वयः ॥ १९.५१
वानरो मर्कटः कीशः कपिः शाखामृगो हरिः ।
प्लवंगमो वनौकाश्च प्लवंगः प्लवगः प्लवः ॥ १९.५२
गोलाङ्गूलस्तु गौराख्यः कपिः कृष्णमुखो हि सः ।
मन्दुराभूषणाख्योऽयं विज्ञेयः कृष्णवानरः ॥ १९.५३
शल्यकः स्यात्शल्यमृगो वज्रशुक्तिर्बिलेशयः ॥ १९.५४
शल्योऽन्यः श्वाविदित्युक्तः शली च शलली च सः ॥ १९.५५
शल्यलोम्नि तु विज्ञेया शलली शललं शलम् ॥ १९.५६
कोकडो जवनः प्रोक्तः कोकोवाचो बिलेशयः ।
ज्ञेयश्चमरपुच्छश्च लोमशो धूम्रवर्णकः ॥ १९.५७
नकुलः सूचिरदनः सर्पारिर्लोहिताननः ॥ १९.५८
दर्वीकरो द्विरसनः पातालनिलयो बली ।
नागश्च काद्रवेयश्च वक्रगो दन्दशूककः ॥ १९.५९
चक्षुःश्रवा विषधरो गूढाङ्घ्रिः कुण्डली फणी ।
पन्नगो वायुभक्षश्च भोगी स्याज्जिह्मगश्च सः ॥ १९.६०
सर्पो दंष्ट्री भुजंगोऽहिर्भुजगश्च सरीसृपः ।
कञ्चुकी दीर्घपुच्छश्च द्विज्ह्वि उरगश्च सः ॥ १९.६१
फणिनो धवलाङ्गा ये ते नागा इति कीर्तिताः ।
अन्ये रक्तादिवर्णाढ्या बोध्याः सर्पादिनामभिः ॥ १९.६२
गोनसो मण्डलीत्युक्तश्चित्राङ्गो व्यन्तरो भवेत् ॥ १९.६३
कुलिको हरितो ज्ञेयो राजिलं डुण्डुभं विदुः ॥ १९.६४
अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः ।
कर्कोटः कुलिकः शङ्ख इत्यमी नागनायकाः ॥ १९.६५
तद्बान्धवास्तु कुमुदकम्बलाश्वतरादयः ॥ १९.६६
आपहृत्द्विमुखी चैव धामिणीत्यादयः परे ॥ १९.६७
मूषिको मूषकः पिङ्गोऽप्याखुरुन्दुरुको नखी ।
खनको बिलकारी च धान्यारिश्च बहुप्रजः ॥ १९.६८
अन्यो महामूषकः स्यान्मूषी विघ्नेशवाहनः ।
महाङ्गः सस्यमारी च भूफलो भित्तिपातनः ॥ १९.६९
छुछुन्दरी राजपुत्री प्रोक्तान्या प्रतिमूषिका ।
सुगन्धिमूषिका गन्धा शुण्डिनी शुण्डमूषिका ॥ १९.७०
गोधा तु गोधिका ज्ञेया दारुमत्स्याह्वया च सा ।
खरचर्मा पञ्चनखी पुलका दीर्घपुच्छिका ॥ १९.७१
गोधाजः स्यात्तु गौधेयो गौधारो गोधिकासुतः ॥ १९.७२
बर्बरी घोरिका घोरा दीर्घरूपा भयावहा ।
स्थूलचञ्चुर्दीर्घपादा सर्पभक्षी गुणारिका ॥ १९.७३
ब्राह्मणी गृहगोधा च सुपदी रक्तपुच्छिका ॥ १९.७४
सरटः कृकलासः स्यात्प्रतिसूर्यः शयानकः ।
वृत्तिस्थः कण्टकागारो दुरारोहद्रुमाश्रयः ॥ १९.७५
जाहको गात्रसंकोची मण्डली बहुरूपकः ।
कामरूपी विरूपी च बिलवासः प्रकीर्तितः ॥ १९.७६

पल्ली तु मुसली प्रोक्ता गृहगोधा गृहालिका ।
ज्येष्ठा च कुड्यमत्स्या च पल्लिका गृहगोधिका ॥ १९.७७
तन्तुवायस्तूर्णनाभो लूता मर्कटकः कृमिः ॥ १९.७८
हालाहला त्वञ्जलिका गिरिका बालमूषिका ॥ १९.७९
वृश्चिकः शूककीटः स्यादलिद्रोणश्च वृश्चिके ॥ १९.८०
अथ कर्णजलूका स्याच्चित्राङ्गी शतपद्यपि ॥ १९.८१
पिपीलकः पिपीलश्च स्त्रीसंज्ञा च पिपीलिका ॥ १९.८२
उदङ्घा कपिजङ्घिका ज्ञेया तैलपिपीलिका ॥ १९.८३
कृष्णान्या च पिपीली तु स्थूला वृक्षरुहा च सा ॥ १९.८४
मत्कुणो रक्तपायी स्याद्रक्ताङ्गो मञ्चकाश्रयी ॥ १९.८५
यादस्तु जलजन्तुः स्याज्जलप्राणी जलेशयः ।
तत्रातिक्रूरकर्मा यः स जलव्याल उच्यते ॥ १९.८६
मत्स्यो वैसारिणो मीनः पृथुरोमा झषोऽण्डजः ।
विसारः शकुली शल्की पाठीनोऽनिमिषस्तिमिः ॥ १९.८७
राजीवः शकुलः शृङ्गी वागुसः शल्यपल्लवौ ।
पाठीनः शकुलश्चैव नद्यावर्तश्च रोहितः ॥ १९.८८
मद्गुरस्तिमिरित्याद्या ज्ञेयास्तद्भेदजातयः ।
तद्भेदो मकराख्योऽन्यो मातंगमकरोऽपरः ॥ १९.८९
चिलिचिमस्तिमिश्चैव तथान्यश्च तिमिङ्गिलः ।
तिमिङ्गिलगिलश्चेति महामत्स्या अमी मताः ॥ १९.९०
शिशुकः शिशुमारः स्यात्स च ग्राहो वराहकः ॥ १९.९१
भवेन्नक्रस्तु कुम्भीरो गलग्राहो महाबलः ॥ १९.९२
कच्छपः कमठः कूर्मो गूढाङ्गो धरणीधरः ।
कच्छेष्टः पल्वलावासो वृत्तः कठिनपृष्ठकः ॥ १९.९३
कर्कटः स्यात्कर्कटकः कुलीरश्च कुलीरकः ।
संदंशकः पङ्कवासस्तिर्यग्गामी स चोर्ध्वदृक् ॥ १९.९४
मण्डूको दर्दुरो मण्डो हरिर्भेकश्च लूलकः ।
शालूरः स च वर्षाभूः प्लवः कटुरवस्तथा ।
समीडन्यश्च मुण्डी च प्लवंगश्च प्लवंगमः ॥ १९.९५
पीतोऽन्यो राजमण्डूको महामण्डूक इत्यपि ।
पीताङ्गः पीतमण्डूको वर्षाघोषो महारवः ॥ १९.९६
जलूका तु जलौका स्याद्रक्तपा रक्तपायिनी ।
रक्तसंदोहिका तीक्ष्णा चर्मटी जलजीविनी ॥ १९.९७
जलकाकस्तु दात्यूहः स च स्यात्कालकण्ठकः ॥ १९.९८
जलपारावतः कोपी प्रोक्तो जलकपोतकः ॥ १९.९९
स्थले करितुरंगाद्या यावन्तः सन्ति जन्तवः ।
जलेऽपि ते च तावन्तो ज्ञातव्या जलपूर्वकाः ॥ १९.१००
खगविहगविहंगमा विहंगः पिपतिषुपत्त्रिपतत्रिपत्त्रवाहाः ।
शकुनिशकुनविष्किराण्डजा विः पतगपतन्नभसंगमा नगौकाः ॥ १९.१०१
वाजी पत्त्ररथः पक्षी द्विजो नीडोद्भवोऽनुगः ।
शकुन्तः पतगः पिच्छन् पतंगो विकिरश्च सः ॥ १९.१०२
गृध्रस्ताक्ष्र्यो वैनतेयः खगेन्द्रो भुजगान्तकः ।
वक्रतुण्डश्च दाक्षाय्यो गरुत्मान् दूरदर्शनः ॥ १९.१०३
श्येनः शशादः क्रव्यादः क्रूरो वेगी खगान्तकः ।
कामान्धस्तीव्रसम्पातस्तरस्वी ताक्ष्र्यनायकः ॥ १९.१०४

काष्ठकुट्टः काष्ठभङ्गी काष्ठकूटश्च शब्दितः ॥ १९.१०५
करको नीलपिच्छः स्यात्लम्बकर्णो रणप्रियः ।
रणपक्षी पिच्छबाणः स्थूलनीलो भयंकरः ॥ १९.१०६
कङ्कस्तु लोहपृष्ठः स्यात्संदंशवदनः खरः ।
रणालंकरणः क्रूरः स च स्यादामिषप्रियः ॥ १९.१०७
काकस्तु वायसो ध्वाङ्क्षः काणोऽरिष्टः सकृत्प्रजः ।
बलिभुग्बलिपुष्टश्च धूलिजङ्घो निमित्तकृत् ॥ १९.१०८
कौशिकारिश्चिरायुश्च करटो मुखरः खरः ।
आत्मघोषो महालोलश्चिरजीवी चलाचलः ॥ १९.१०९
द्रोणस्तु द्रोणकाकः स्यात्काकोलोऽरण्यवायसः ।
वनवासी महाप्राणः क्रूररावी फलप्रियः ॥ १९.११०
उलूकस्तामसो घूको दिवान्धः कौशिकः कुविः ।
नक्तंचरो निशाटश्च काकारिः क्रूरघोषकः ॥ १९.१११
वल्गुली वक्त्रविष्ठा सा दिवान्धा च निशाचरी ।
स्वैरिणी च दिवास्वापा मांसेष्टा मातृवाहिनी ॥ १९.११२
चर्मकी चर्मपक्षी च चर्माङ्गी चर्मगन्धिका ।
कृत्याशूकारिणी चर्मी चर्मपत्त्री च मेलिका ।
दिनान्धा नक्तभोजी च भ्रामणी कर्णिकाह्वया ॥ १९.११३
मयूरश्चन्द्रकी बर्ही नीलकण्ठः शिखी ध्वजी ।
मेघानन्दी कलापी च शिखण्डी चित्रपिच्छकः ॥ १९.११४
बर्हिणः प्रचलाकी च शुक्लापाङ्गः शिखावलः ।
केकी भुजंगभोजी च मेघनादानुलासकः ॥ १९.११५
बर्हभारः कलापः स्याद्बर्हनेत्राणि चन्द्रकाः ।
प्रचलाकः शिखा ज्ञेया ध्वनिः केकेति कथ्यते ॥ १९.११६
कुररः खरशब्दः क्रुङ्क्रौञ्चः पङ्क्तिचरः खरः ॥ १९.११७
नीलक्रौञ्चस्तु नीलाङ्गो दीर्घग्रीवोऽतिजागरः ॥ १९.११८
बकः कङ्को बकोटश्च तीर्थसेवी च तापसः ।
मीनघाती मृषाध्यानी निश्चलाङ्घ्रिश्च दाम्भिकः ॥ १९.११९
शकुनी पोतकी श्यामा पाण्डवी श्वेतपक्षिणी ॥ १९.१२०
दुर्गा भगवती चैव सैवोक्ता सत्यपाण्डवी ॥ १९.१२१
बलाका विषकण्ठी स्यात्शुष्काङ्गी दीर्घकंधरा ॥ १९.१२२
घर्मान्तकामुकी श्वेता मेघनादा जलाश्रया ॥ १९.१२३
चक्रः कोकश्चक्रवाको रथाङ्गो भूरिप्रेमा द्वंद्वचारी सहायः ।
कान्तः कामी रात्रिविश्लेषगामी रामावक्षोजोपमः कामुकश्च ॥ १९.१२४
सारसो रसिकः कामी नीलाङ्गो भणितारवः ।
नीलकण्ठो रक्तनेत्रः काकवाक्कामिवल्लभः ॥ १९.१२५
टिट्टिभी पीतपादश्च सदालूता नृजागरः ।
निशाचरी चित्रपक्षी जलशायी सुचेतना ॥ १९.१२६
जलकुक्कुटकश्चान्यो जलशायी जलस्थितः ॥ १९.१२७
ठिकः पाशगडष्ठिक्को जलसार्यतिलाशयः ॥ १९.१२८
जलपक्षी महापक्षी जलसाघतिवासकः ॥ १९.१२९
जलशायी मण्डलीनो मन्दगः श्लेष्मलोऽविषी ।
सराजी राजिमन्तश्च जलसर्पः स दुन्दुभिः ॥ १९.१३०
द्विविगोडो निसश्चैव चित्री शल्पी च गोमुखः ॥ १९.१३१
अन्ये च प्लवगा ये ये ते सर्वे क्षुद्रसारसाः ।

श्वेताश्चित्राश्च धूम्राद्या नानावर्णानुगाह्वयाः ॥ १९.१३२
हंसो धवलपक्षी स्यात्चक्राङ्गो मानसालयः ॥ १९.१३३
कलहंसस्तु कादम्बः कलनादो मरालकः ॥ १९.१३४
एतेषु चञ्चुचरणेष्वरुणेषु राजहंसोऽपि धूसरतरेषु च मल्लिकाक्षः ।
कालेषु तेषु धवलः किल धार्तराष्ट्रः सोऽप्येष धूसरतनुस्तु भवेदभव्यः ॥ १९.१३५
हंसी तु वरटा ज्ञेया वरला वारला च सा ।
मराली मञ्जुगमना चक्राङ्गी मृदुगामिनी ॥ १९.१३६
कुक्कुटस्ताम्रचूडः स्यात्कालज्ञश्चरणायुधः ।
नियोद्धा कृकवाकुश्च विष्किरो नखरायुधः ॥ १९.१३७
स्यात्कपोतः कोकदेवो धूसरो धूम्रलोचनः ।
दहनोऽग्निसहायश्च भीषणो गृहनाशनः ॥ १९.१३८
पारावतः कलरवोऽरुणलोचनश्च पारापतो मदनकाकुरवश्च कामी ।
रक्तेक्षणो मदनमोहनवाग्विलासी कण्ठीरवो गृहकपोतक एष उक्तः ॥ १९.१३९
पारावतोऽन्यदेशीयः कामुको घुल्लुसारवः ॥ १९.१४०
जलपारावतः कामी ज्ञेयो गलरवश्च सः ॥ १९.१४१
कोकिलः परपुष्टः स्यात्कालः परभृतः पिकः ।
वसन्तदूतस्ताम्राक्षो गन्धर्वो मधुगायनः ॥ १९.१४२
वासन्तः कलकण्ठश्च कामान्धः काकलीरवः ।
कुहूरवोऽन्यपुष्टश्च मत्तो मदनपाठकः ॥ १९.१४३
कोकिला त्वन्यपुष्टा स्यान्मत्ता परभृता च सा ।
सुकण्ठी मधुरालापा कलकण्ठी मधूदया ॥ १९.१४४
वसन्तदूती ताम्राक्षी पिकी सा च कुहूरवा ।
वासन्ती कामगा चैव गन्धर्वा वनभूषणी ॥ १९.१४५
शुकः कीरो रक्ततुण्डो मेधावी मञ्जुपाठकः ॥ १९.१४६
अन्यो राजशुकः प्राज्ञः शतपत्त्रो नृपप्रियः ॥ १९.१४७
सारिका मधुरालापा दूती मेधाविनी च सा ।
कवरी कुत्सिताङ्गी च कष्कलाङ्गी च शारिका ॥ १९.१४८
पीतपादा ह्युज्ज्वलाक्षी रक्तचञ्चुश्च सारिका ।
पठन्ती पाठवार्ता च बुद्धिमती भूसारिका ॥ १९.१४९
गोराण्टिका गोकिराटी गोरिका कलहप्रिया ॥ १९.१५०
चकोरश्चन्द्रिकापायी कौमुदीजीवनोऽपि सः ।
चातकस्तोककः सोऽपि सारङ्गो मेघजीवनः ॥ १९.१५१
हारीतकस्तु हारीतस्तेजलश्च कपिञ्जलः ॥ १९.१५२
धूसरी पिङ्गला सूची भैरवी योगिनी जया ।
कुमारी सुविचित्रा च माता कोटरवासिनी ॥ १९.१५३
तैलपा तु परोष्णी स्याज्जतुकाजिनपत्त्रिका ॥ १९.१५४
भृङ्गः कुलिङ्गो धूम्याटो दार्वाघातः शतच्छदः ॥ १९.१५५
व्याघ्राटः स्याद्भरद्वाजः खञ्जनः खञ्जरीटकः ।
समन्तभद्रः कृष्णस्तु स्वल्पकृष्णः सुभद्रकः ॥ १९.१५६
द्वीपवासी मुनिश्चैव चातुर्मास्यविदर्शनः ।
चाषः किकीदिविः प्रोक्तो नीलाङ्गः पुण्यदर्शनः ॥ १९.१५७
वर्तको वर्तिको वर्तिर्गाञ्जिकायश्च कथ्यते ॥ १९.१५८
कलविङ्कस्तु चटकः कामुको नीलकण्ठकः ॥ १९.१५९
चटका कलविङ्की स्यात्चाटकैरस्तु तत्सुतः ॥ १९.१६०
धूसरोऽरण्यचटकः कुजो भूमिशयश्च सः ।

भारीटः श्यामचटकः शैशिरः कणभक्षकः ॥ १९.१६१
धूसरोऽन्योऽतिसूक्ष्मः स्यात्चटको धान्यभक्षकः ।
गृहकृत्यक्षमो भीरुः कृषिद्विष्टः कणप्रियः ॥ १९.१६२
लावा तु लावकः प्रोक्तो लावः स च लवः स्मृतः ॥ १९.१६३
तित्तिरिस्तित्तिरश्चैव तैत्तिरो याजुषो गिरिः ॥ १९.१६४
कृष्णोऽन्यस्तित्तिरिः शूरः सुभूतिः परिपालकः ॥ १९.१६५
गोत्रद्वेषी भूरिपक्षः शतायुः सिद्धिकारकः ।
क्षुद्रोलूकः शाकुनेयः पिङ्गलो डुण्डुलश्च सः ।
वृक्षाश्रयी बृहद्रावः पिङ्गलाक्षो भयंकरः ॥ १९.१६६
श्यामा वराही शकुनी कुमारी दुर्गा च देवी चटका च कृष्णा ।
स्यात्पोतकी पाण्डविका च वामा सा कालिका स्यात्सितबिम्बिनी च ॥ १९.१६७
प्रभाकीटस्तु खद्योतः खज्योतिरुपसूर्यकः ॥ १९.१६८
तैलिनी तैलकीटः स्यात्षड्बिम्बा दद्रुनाशिनी ॥ १९.१६९
शक्रगोपस्तु वर्षाभू रक्तवर्णेन्द्रगोपकौ ॥ १९.१७०
भ्रमरः षट्पदो भृङ्गः कलालापः शिलीमुखः ।
पुष्पंधयो द्विरेफोऽलिर्मधुकृन्मधुपो द्विभः ॥ १९.१७१
भसरश्चञ्चरीकोऽलिः झङ्कारी मधुलोलुपः ।
इन्दीन्दिरश्च मधुलिट्मत्तो घुमुघुमारवः ॥ १९.१७२
वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ १९.१७३
गन्धोली वरटा क्षुद्रा क्रूरा स्यात्क्षुद्रवर्वणा ।
रंरिकश्छत्रकारी च तीक्ष्णदंष्ट्रो महाविषः ।
पीतवर्णो दीर्घपादो मत्सर्यः क्रूरदंष्ट्रकः ॥ १९.१७४
दंशो दुष्टमुखः क्रूरः क्षुद्रिका वनमक्षिका ॥ १९.१७५
मक्षिका त्वमृतोत्पन्ना वमनी चापला च सा ॥ १९.१७६
मशको वज्रतुण्डश्च सूच्यास्यः सूक्ष्ममक्षिका ।
रात्रिजागरदो धूम्रो नीलाभ्रस्त्वन्यजातयः ॥ १९.१७७
अष्टाङ्घ्रिरष्टपादश्च गृहवासी च कृष्णकः ॥ १९.१७८
कालिकः कोकिलः प्रोक्तः कालुञ्चः कृष्णदंष्ट्रकः ।
कसारिका दीर्घमूर्छा गृहवासा बिलाशयी ॥ १९.१७९
यूका तु केशकीटः स्यात्स्वेदजः षट्पदः स्मृतः ॥ १९.१८०
पक्ष्मजा पक्ष्मयूका स्यात्सूक्ष्मा षट्चरणापि सा ॥ १९.१८१
श्वेतयूकाङ्गवस्त्रोत्था लिक्षा यूकाङ्गवस्त्रके ॥ १९.१८२
कथितेष्वेषु यो जीवः क्षोदीयान् वृश्चिकादिकः ।
तत्र तत्र बुधैर्ज्ञेयः स सर्वः कीटसंज्ञकः ॥ १९.१८३
कीटिका चटिका प्रोक्ता वज्रदंष्ट्रा बहुप्रजा ।
कृशाङ्गी तामसी शूरा कीरिभारा महाबला ॥ १९.१८४
मङ्कोरो मङ्कटः कृष्णस्तीक्ष्णदंष्ट्रो विशालुकः ।
षट्पादकस्तु मात्सर्यो माकोटस्तूर्ध्वगुह्यकः ॥ १९.१८५
षड्बिन्दुर्बिन्दुकीटस्तु दीर्घकीटस्तु पादतः ॥ १९.१८६
प्रसहनविलम्बितद्रुतशयप्रतुदाश्च विष्किरः ।
कीटा इति कथिताः नवधात्र तिर्यञ्चः ॥ १९.१८७
इत्थं नानातिर्यगाख्याप्रपञ्चव्याख्यापूर्णं वर्गमेनं विदित्वा ।
बुद्ध्या सम्यक्चाभिसंधाय धीमान् वैद्यः कुर्यान्मांसवर्गप्रयोगम् ॥ १९.१८८
येनेभास्यपिता मृगाङ्कमुकुटः शार्दूलचर्माम्बरः सर्पालंकरणः सुपुङ्गवगतिः पञ्चाननोऽभ्यर्च्यते ।
तस्य श्रीनृहरीशितुः खलु कृतावेकोनविंशोऽभिधाचूडापीठमणावगादवसितिं सिंहादिवर्गो महान् ॥ १९.१८९

गदो रुजा व्याधिरपाटवामरोगामयातङ्कभयोपघाताः ।
रुङ्मान्द्यभङ्गार्तितमोविकारग्लानिक्षयानार्जवमृत्युभृत्याः ॥ २०.१
राजयक्ष्मा क्षयो यक्ष्मा रोगराजो गदाग्रणीः ।
उष्मा शोषोऽतिरोगश्च रोगाधीशो नृपामयः ॥ २०.२
पाण्डुरोगस्तु पाण्डुः स्यात्विसर्पः सचिवामयः ।
शोफः शोथस्तु श्वयथुः कासः क्षवथुरुच्यते ॥ २०.३
क्षुतं तु क्षवथुः क्षुच्च प्रतिश्यायस्तु पीनसः ।
नेत्रामयो नेत्ररोगो मुखरोगो मुखामयः ॥ २०.४
दुश्चर्मा मण्डलं कोठस्त्वग्दोषश्चर्मदूषिका ।
कुष्ठं तु पुण्डरीकः स्यात्श्वित्रं तु चर्मचित्रकम् ॥ २०.५
किलाससिध्मे च शिखी श्वासः पामा विचर्चिका ।
कण्डूः कण्डूतिकण्डूयाखर्जूकण्डूयनानि च ॥ २०.६
संचारी शुण्डिकास्फोटे पामपामे विचर्चिका ।
पीतस्फोटे तु पामा च क्षुद्रस्फोटे तु कञ्चिका ॥ २०.७
पिटका पिटिका प्रोक्ता मसूराभा मसूरिका ।
विस्फोटः स्फोटकः स्फोटः केशघ्नस्त्विन्द्रलुप्तकः ॥ २०.८
गलशुण्डी तु शुण्डा स्याद्गलगण्डो गलस्तनः ।
दन्तार्बुदो दन्तमूलं दन्तशोथो द्विजव्रणः ॥ २०.९
गुल्मस्तु जाठरग्रन्थिः पृष्ठग्रन्थौ गड्डुर्भवेत् ।
पक्तिशूलं तु शूलं स्यात्पाकजं परिणामजम् ॥ २०.१०
लूता चर्मव्रणो वृक्कं नाडी नाडीव्रणो भवेत् ।
श्लीपदं पादवल्मीकं पादस्फोटो विपादिका ॥ २०.११
विष्टम्भस्तु विबन्धः स्यादानाहो मलरोधनम् ।
अर्शांसि गुदकीलाः स्युर्दुर्नामानि गुदाङ्कुराः ॥ २०.१२
मलवेगस्त्वतीसारो ग्रहणीरुक्प्रवाहिका ।
वमथुर्वान्तिरुद्गारश्छर्दिर्विच्छर्दिका वमिः ॥ २०.१३
हृद्रोगो हृद्गदो हृद्गुत्प्राणः श्वास उच्यते ।
ज्वरस्तु स ज्वरातङ्को रोगश्रेष्ठो महागदः ॥ २०.१४
द्वंद्वजा द्वंद्वदोषोत्थाः शीताद्या विषमज्वराः ।
अतीत्यागन्तवस्ते द्व्यैकाहिकत्र्याहिकादयः ॥ २०.१५
रक्तपित्तं पित्तरक्तं पित्तास्रं पित्तशोणितम् ।
इत्येवं रक्तवातादिद्वंद्वदोषमुदाहरेत् ॥ २०.१६
तृष्णोदन्या पिपासा तृण्मदातङ्को मदात्ययः ।
पानात्ययो मदव्याधिर्मदस्तूद्रिक्तचित्तता ॥ २०.१७
मूर्छा तु मोहो मूढिश्च स्वरसादः स्वरक्षयः ।
अश्रद्धानभिलाषः स्यादरुचिश्चाप्यरोचकः ॥ २०.१८
मूत्रदोषस्तु विज्ञेयः प्रमेहो मेह इत्यपि ।
कृच्छ्रं तु मूत्रकृच्छ्रं स्यात्मूत्ररोधोऽश्मरी च सा ॥ २०.१९
वातव्याधिश्चलातङ्को वातरोगोऽनिलामयः ।
कम्पस्तु वेपनं वेपः कम्पनं वेपथुस्तथा ॥ २०.२०
जृम्भा तु जृम्भिका जम्भा जृम्भणं जम्भिका च सा ।
आलस्यं मन्दता मान्द्यं कार्यप्रद्वेष इत्यपि ॥ २०.२१
तुन्दः स्थविष्ठ इत्युक्तो जठरघ्नो जलोदरः ।
आमो मलस्य वैषम्याद्रक्तार्तिः शोणितामयः ॥ २०.२२

जालगर्दभकः प्रोक्तो जालरासभकामयः ।
जालखरगदो ज्ञेयः स गर्दभगदस्तथा ॥ २०.२३
विद्रधिः स्याद्विदरणं हृद्ग्रन्थिर्हृद्व्रणश्च सः ।
व्रणो भगप्रदेशे यः स भगंदरनामकः ॥ २०.२४
शिरःशूलादयो ज्ञेयास्तत्तदङ्गाभिधानकाः ।
इत्थमन्येऽपि बोद्धव्या भिषग्भिर्देहतो गदाः ॥ २०.२५
संतापः संज्वरस्तापः शोष उष्मा च कथ्यते ।
यश्चापि कोष्ठसंतापः सोऽन्तर्दाह इति स्मृतः ॥ २०.२६
स दाहो मुखताल्वोष्ठे दवथुश्चक्षुरादिषु ।
पाणिपादांसमूलेषु शाखापित्तं तदुच्यते ॥ २०.२७
तन्द्रा तु विषयाज्ञानं प्रमीला तन्द्रिका च सा ।
प्रलयस्त्विन्द्रियस्वापश्चेष्टानाशः प्रलीनता ॥ २०.२८
उन्मादो मतिविभ्रान्तिरुन्मनायितमित्यपि ।
आवेशो भूतसंचारो भूतक्रान्तिर्ग्रहागमः ॥ २०.२९
अपस्मारोऽङ्गविकृतिर्लोलाङ्गो भूतविक्रिया ।
स्तैमित्यं जडता जाड्यं शीतलत्वमपाटवम् ॥ २०.३०
वातिको वातजो व्याधिः पैत्तिकः पित्तसम्भवः ।
श्लैष्मिकः श्लेष्मसम्भूतः समूहः सांनिपातिकः ॥ २०.३१
व्याधितो विकृतो ग्लास्नुर्ग्लानो मन्दस्तथातुरः ।
अभ्यान्तोऽभ्यमितो रुग्नश्चामयाव्यपटुश्च सः ॥ २०.३२
तद्विशेषास्तु विज्ञेयास्तन्मत्वर्थीययोगतः ।
यथा ज्वरितकण्डूलवातकक्षयदद्रुणाः ॥ २०.३३
उत्साही द्विजदेवभेषजभिषग्भक्तोऽपि पथ्ये रतो धीरो धर्मपरायणः प्रियवचा मानी मृदुर्मानदः ।
विश्वासी ऋजुरास्तिकः सुचरितो दाता दयालुः शुचिर्यः स्यात्काममवञ्चकः स विकृतो मुच्येत मृत्योरपि ॥ २०.३४
उपचारस्तूपचर्या चिकित्सा रुक्प्रतिक्रिया ।
निग्रहो वेदनानिष्ठा क्रिया चोपक्रमः समाः ॥ २०.३५
भैषज्यं भेषजं जैत्रमगदो जायुरौषधम् ।
आयुर्योगो गदारातिरमृतं च तदुच्यते ॥ २०.३६
तच्च पञ्चविधं प्रोक्तं स्वस्वयोगविशेषतः ।
रसश्चूर्णं कषायश्चावलेहः कल्क इत्यपि ॥ २०.३७
रसो दृषदि संभिन्नो दिव्यद्रव्यसमन्वितः ।
चूर्णं तु वस्तुभिः क्षुण्णैः कषायः क्वथितैस्तु तैः ॥ २०.३८
तैः पक्वैरवलेहः स्यात्कल्को मध्वादिमर्दितैः ॥ २०.३९
पाचनः शोधनीयश्च क्लेदनश्च शमस्तथा ।
दीपनस्तर्पणः शोष इति सप्तविधाः स्मृताः ॥ २०.४०
पाचनोऽर्धावशेषश्च शोधनो द्वादशांशकः ।
क्लेदनश्चतुरंशस्तु शमश्चाष्टांशको मतः ॥ २०.४१
दीपनस्तु षडंशश्च तर्पणः पञ्चमांशकः ।
शोषणः षोडशांशश्च क्वाथभेदा इतीरिताः ॥ २०.४२
ज्ञेयं रसादिकथनादनन्तरं किलानुपानं कथयन्ति सूरयः ।
विलम्ब्य च क्रामणमेतदीरितं रात्रौ पुनः पाचनमेतदूचिरे ॥ २०.४३
आत्मनीनं तु पथ्यं स्यादायुष्यं च हितं च तत् ॥ २०.४४
किल पाटवमारोग्यमगदं स्यादनामयम् ।
कल्पस्तु पटुरुल्लाघो निरातङ्को निरामयः ॥ २०.४५
अगदो नीरुजो निरुगनातङ्कश्च कथ्यते ॥ २०.४६

वैद्यः श्रेष्ठोऽगदंकारो रोगहारी भिषग्विधिः ।
रोगज्ञो जीवनो विद्वानायुर्वेदी चिकित्सकः ॥ २०.४७
विप्रो वैद्यकपारगः शुचिरनूचानः कुलीनः कृती धीरः कालकलाविदास्तिकमतिर्दक्षः सुधीर्धार्मिकः ।
स्वाचारः समदृग्दयालुरखलो यः सिद्धमन्त्रक्रमः शान्तः काममलोलुपः कृतयशा वैद्यः स विद्योतते ॥ २०.४८
अधीरः कर्कशो लुब्धः सरोगो न्यूनशिक्षितः ।
पञ्च वैद्या न युज्यन्ते धन्वन्तरिसमा अपि ॥ २०.४९
पुमर्थाश्चत्वारः खलु करणसौख्यैकसुभगास्तदेतद्भैषज्यानवरतनिषेवैकवशगम् ।
तदप्येकायत्तं फलदमगदंकारकृपया ततो लोके लोके न परमुपकर्तैवममुतः ॥ २०.५०
राजानो विजिगीषया निजभुजप्रक्रान्तमोजोदयात्शौर्यं संगररङ्गसद्मनि यथा संबिभ्रते संगताः ।
यस्मिन्नौषधयस्तथा समुदिताः सिध्यन्ति वीर्याधिका विप्रोऽसौ भिषगुच्यते स्वयमिति श्रुत्यापि सत्यापितम् ॥ २०.५१
यथावदुत्खाय शुचिप्रदेशजा द्विजेन कालादिकतत्त्ववेदिना ।
यथायथं चौषधयो गुणोत्तराः प्रत्याहरन्ते यमगोचरानपि ॥ २०.५२
येन त्वां खनते ब्रह्मा येन त्वां खनते भृगुः ।
येनेन्द्रो येन वरुणः खनते येन केशवः ।
तेनाहं त्वां खनिष्यामि सिद्धिं कुरु महौषध ॥ २०.५३
विप्रः पठन्निमं मन्त्रं प्रयतात्मा महौषधीम् ।
खात्वा खादिरकीलेन यथावत्तां प्रयोजयेत् ॥ २०.५४
वीर्यं प्रकाश्य निजमोषधयः किलोचुरन्योन्यमुर्व्यपि दिवो भुवमाव्रजन्त्यः ।
जीवं मुमूर्षमपि यं हि वयं महिम्ना स्वेन स्तुवीमहि स जात्वपि नैव नश्येत् ॥ २०.५५
प्रत्यायिताः प्रमुदिता मुदितेन राज्ञा सोमेन साकमिदमोषधयः समूचुः ।
यस्मै द्विजो दिशति भेषजमाशु राजन् तं पालयाम इति च श्रुतिराह साक्षात् ॥ २०.५६
आसामीशो लिखितपठितः स द्विजानां हि राजा सिद्ध्यै याश्च द्विजमवृजिनं स्वाश्रयं कामयन्ते ।
तास्वेवान्यः प्रसरति मदाद्यस्तु जात्या च गत्या हीनः शून्यो जगति कुपिताः पातयन्त्येनमेताः ॥ २०.५७
द्रव्याभिधानगदनिश्चयकायसौख्यं शल्यादिभूतविषग्रहबालवैद्यम् ।
विद्याद्रसायनवरं दृढदेहहेतुमायुःश्रुतेर्द्विचतुरङ्गमिहाह शम्भुः ॥ २०.५८
अष्टाङ्गं शल्यशालाक्यकायभूतविषं तथा ।
बालो रसायनं वृष्यमिति कैश्चिदुदाहृतम् ॥ २०.५९
अष्टाङ्गज्ञः सुवैद्यो हि कियद्धीनो यथाङ्गतः ।
अङ्गहीनः स विज्ञेयो न श्लाघ्यो राजमन्दिरे ॥ २०.६०
प्राज्ञो विज्ञः पण्डितो दीर्घदर्शी धीरो धीमान् कोविदो लब्धवर्णः ।
दोषज्ञः सन् दूरदर्शी मनीषी मेधावी ज्ञः सूरिविज्ञौ विपश्चित् ॥ २०.६१
वैज्ञानिकः कृतमुखः संख्यावान्मतिमान् कृती ।
कुशाग्रीयमतिः कृष्टिः कुशलो विदुरो बुधः ॥ २०.६२
निष्णातः शिक्षितो दक्षः सुदीक्षः कृतधीः सुधीः ।
अभिज्ञो निपुणो विद्वान् कृतकर्मा विचक्षणः ॥ २०.६३
विदग्धश्चतुरश्चैव प्रौढो बोद्धा विशारदः ।
सुमेधाः सुमतिस्तीक्ष्णः प्रेक्षावान् विबुधो विदन् ॥ २०.६४
मनीषा धिषणा प्रज्ञा धारणा शेमुषी मतिः ।
धीर्बुद्धिः प्रतिपत्प्रेक्षा प्रतिपत्तिश्च चेतना ॥ २०.६५
संविज्ज्ञप्तिश्चोपलब्धिश्चिन्मेधा मननं मनः ।
भानं बोधश्च हृल्लेखः संख्या च प्रतिभा च सा ॥ २०.६६
आदानं रोगहेतुः स्यान्निदानं रोगलक्षणम् ।
चिकित्सा तत्प्रतीकारः आरोग्यं रुङ्निवर्तनम् ॥ २०.६७
मण्डः पेया विलेपी च यवागूः पथ्यभेदकाः ।
भक्तैर्विना द्रवो मण्डः पेया भक्तसमन्विता ।

विलेपी बहुभक्ता स्याद्यवागूर्विरलद्रवा ॥ २०.६८
विदलं माषमुद्गादि पक्वं सूपाभिधानकम् ॥ २०.६९
पादाहारं पथ्यमाहुश्च वैद्या विद्यादर्धाहारमाहारसंज्ञम् ।
पादोनं स्याद्भोजनं भोगमन्यद्विद्याच्छेषं वातदोषप्रसूत्यै ॥ २०.७०
अन्नं जीवनमाहारः कूरं कशिपुरोदनम् ।
अन्धो भिस्सादनं भोज्यमन्नाद्यमशनं तथा ॥ २०.७१
भोज्यं पेयं तथा चोष्यं लेह्यं खाद्यं च चर्वणम् ।
निष्पेयं चैव भक्ष्यं स्यादन्नमष्टविधं स्मृतम् ॥ २०.७२
व्यञ्जनं सूपशाकादि मिष्टान्नं तेमनं स्मृतम् ।
उपदंशो विदंशः स्यात्संधानो रोचकश्च सः ॥ २०.७३
जेमनमभ्यवहारः प्रत्यवसानं च भोजनं जग्धिः ।
बल्भनमशनं स्वदनं निघसाहारौ च निगरणं न्यादः ॥ २०.७४
जक्षणं भक्षणं लेहः स्वादनं रसनस्वदौ ।
चर्वणं पानपीती च धयनं चूषणं भिदाः ॥ २०.७५
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
सन्तीति रसनीयत्वादन्नाद्ये षडमी रसाः ॥ २०.७६
मधुरं लौल्यमित्याहुरिक्ष्वादौ च स लक्ष्यते ॥ २०.७७
लवणस्तु पटुः प्रोक्तः सैन्धवादौ स दृश्यते ॥ २०.७८
तिक्तश्च पिचुमन्दादौ व्यक्तमास्वाद्यते रसः ॥ २०.७९
कषायस्तुवरः प्रोक्तः स तु पूगीफलादिषु ॥ २०.८०
अम्लस्तु चिञ्चाजम्बीरमातुलुङ्गफलादिषु ॥ २०.८१
कटुस्तु तीक्ष्णसंज्ञः स्यान्मरीचादौ स चेक्ष्यते ॥ २०.८२
मधुरश्च रसश्चिनोति केशान् वपुषः स्थैर्यबलौजोवीर्यदायी ।
अतिसेवनतः प्रमेहशैत्यं जडतामान्द्यमुखान्करोति दोषान् ॥ २०.८३
लवणो रुचिकृद्रसोऽग्निदायी पचनः स्वादुकरश्च सारकश्च ।
अतिसेवनतो जरां च पित्तं सितिमानं च ददाति कुष्ठकारी ॥ २०.८४
तिक्तो जन्तून् हन्ति कुष्ठं ज्वरार्तिं कासं दाहं दीपनो रोचनश्च ।
मर्त्यैर्गाढं प्रत्यहं सेवितश्चेत्तीव्रं दत्ते राजयक्ष्माणमेषः ॥ २०.८५
कषायनामा निरुणद्धि शोफं वर्णं तनोर्दीपनपाचनश्च ।
सत्त्वापहोऽसौ शिथिलत्वकारी निषेवितः पाण्डु करोति गात्रम् ॥ २०.८६
अम्लाभिधः प्रीतिकरो रुचिप्रदः प्रपाचनोऽग्नेः पटुतां च यच्छति ।
भ्रान्तिं च कुष्ठं कफपाण्डुतां च कार्ष्ण्यं च कासं कुरुतेऽतिसेवितः ॥ २०.८७
कटुः कफं कण्ठजदोषशोफमन्दानलश्वित्रगदान्निहन्ति ।
एषोऽपि दत्ते बहुसेवितश्चेत्क्षयावहो वीर्यबलक्षयं च ॥ २०.८८
कटुः कषायश्च कफापहारिणौ माधुर्यतिक्तावपि पित्तनाशनौ ।
पट्वम्लसंज्ञौ च रसौ मरुद्धरौ इत्थं द्विशोऽमी सकलामयापहाः ॥ २०.८९
अन्योन्यं मधुराम्लौ लवणाम्लौ कटुतिक्तकौ च रसौ ।
कटुलवणौ च स्यातां मिश्ररसौ तिक्तलवणौ च ॥ २०.९०
लवणमधुरौ विरुद्धावथ कटुमधुरौ च तिक्तमधुरौ च ।
साधारणः कषायः सर्वत्र समानतां धत्ते ॥ २०.९१
संधत्ते मधुरोऽम्लतां च लवणो धत्ते यथावत्स्थितिं तिक्ताख्यः कटुतां तथा मधुरतां धत्ते कषायाह्वयः ।
अम्लस्तिक्तरुचिं ददाति कटुको यात्यन्ततस्तिक्ततामित्येषां स्वविपाकतोऽपि कथिता षण्णां रसानां स्थितिः ॥ २०.९२
मधुरोऽम्लः कटुस्तिक्तः पटुस्तुवर इत्यमी ।
क्रमादन्योन्यसंकीर्णा नानात्वं यान्ति षड्रसाः ॥ २०.९३
आद्याद्यो मधुरादिश्चेदेकैकेनोत्तरेण युक् ।

द्विकभेदाः पञ्चदश पर्यायैः पञ्चभिस्तथा ॥ २०.९४
आद्यः सानन्तरः प्राग्वदुत्तरेण श्रुतो यदा ।
चतुर्भिरपि पर्यायैराद्ये प्रोक्ता भिदा दश ॥ २०.९५
एवं द्वितीये षड्भेदास्तृतीये च त्रयः स्मृताः ।
चतुर्थे चैक इत्येते त्रिकभेदास्तु विंशतिः ॥ २०.९६
आद्यौ सानन्तरौ त्रिः षडेकैकाग्रिमयोगतः ।
त्यक्ते द्वितीये चत्वारः स्वाग्रिमैकैकसंयुते ॥ २०.९७
आद्ये त्यक्ते तु पञ्च स्युः स्वाग्रिमैकैकसंयुते ।
चतुष्कभेदा इत्येते क्रमात्पञ्चदशेरिताः ॥ २०.९८
ततः पञ्चकभेदाः षडेकैकत्यागतः स्मृताः ।
एकः सर्वसमासेन व्यासे षडिति सप्त ते ॥ २०.९९
एवं त्रिषष्टिराख्याता रसभेदाः समासतः ।
तारतम्येष्वसंख्यातांस्तान् वेत्ति यदि शंकरः ॥ २०.१००
बृंहणं पुष्टिदं पोष्यमुत्कं पीनत्वदं च तत् ।
वीर्यवृद्धिकरं वृष्यं वाजीकरणबीजकृत् ॥ २०.१०१
आप्यायनं तर्पणं च प्रीणनं तोषणं च तत् ।
निःष्यन्दनमभिष्यन्दि नेत्रद्रावं सरं च तत् ॥ २०.१०२
इति बहुविधरोगव्याधितोपक्रमोऽत्र प्रकृतभिषगनुक्ताहारपथ्यप्रयोगम् ।
इममखिलमुदित्वा वर्गमुत्सर्गसिद्धान् प्रवदतु स च विद्वानामयप्रत्ययांस्तान् ॥ २०.१०३
येन व्याधिशतान्धकारपटलीनिष्कासनाभास्करप्रायेणापि पुनस्तरां प्रविहिता हन्त द्विषां व्याधयः ।
तस्यायं कृतिवाचि विंशतितमः श्रीमन्नृसिंहेशितुः शान्तिं नामकिरीटमण्डनमणौ वर्गो गदादिर्गतः ॥ २०.१०४

राजनिघण्टु, सत्त्वादिवर्गः
सत्त्वं रजस्तमश्चेति पुंसामुक्तास्त्रयो गुणाः ।
तेषु क्रमादमी दोषाः कफपित्तानिलाः स्थिताः ॥ २१.१
सत्त्वं श्लेष्मा रजः पित्तं तमश्चापि समीरणः ।
द्रव्यस्य मानमुद्रिक्तं पुंसि पुंस्यनुवर्तते ॥ २१.२
सत्त्वं मनोविकाशः स्यात्सत्त्वायतता तथा स्थितिः ॥ २१.३
रजो रूषणमुद्रेकः कालुष्यं मतिविभ्रमः ॥ २१.४
तमस्तिमिरमान्ध्यं च चित्तोन्मादश्च मूढता ।
हृदयावरणं ध्वान्तमन्धकारो विमोहनम् ॥ २१.५
वातो गन्धवहो वायुः पवमानो महाबलः ।
स्पर्शनो गन्धवाही च पवनो मरुदाशुगः ॥ २१.६
श्वसनो मातरिश्वा च नभस्वान्मारुतोऽनिलः ।
समीरणो जगत्प्राणः समीरश्च सदागतिः ॥ २१.७
जवनः पृषदश्वश्च तरस्वी च प्रभञ्जनः ।
प्रधावनोऽनवस्थानो धूननो मोटनः खगः ॥ २१.८
अन्येऽपि वायवो देहे नाडीचक्रप्रवाहकाः ।
मया वितत्य नोक्तास्ते ग्रन्थगौरवभीरुणा ॥ २१.९
सत्त्वादिगुणसंभिन्नदोषत्रयवशात्मना ।
आभ्यन्तरं च बाह्यं च स्वरूपं संनिरुच्यते ॥ २१.१०
सत्त्वाढ्यः शुचिरास्तिकः स्थिरमतिः पुष्टाङ्गको धार्मिकः कान्तः सोऽपि बहुप्रजः सुमधुरक्षीरादिभोज्यप्रियः ।
दाता पात्रगुणादृतो द्रुततमं वाग्मी कृपालुः समो गौरः श्यामतनुर्घनाम्बुतुहिनस्वप्नेक्षणः श्लेष्मलः ॥ २१.११
राजसो लवणाम्लतिक्तकटुकप्रायोष्णभोजी पटुः प्रौढो नातिकृशोऽप्यकालपलिती क्रोधप्रपञ्चान्वितः ।
द्राघीयान्महिलाशयो वितरिता सोपाधिकं याचितो गौराङ्गः कनकादिदीप्तिललितः स्वप्नी च पित्तात्मकः ॥ २१.१२
निद्रालुर्बहुभाषकः सुकुटिलः क्रूराशयो नास्तिकः प्रायः पर्युषितातिशीतविरसाहारैकनिष्ठोऽलसः ।
कार्येष्वत्यभिमानवानसमये दाता यथेच्छं कृशः स्वप्ने व्योमगतिः सितेतरतनुर्वातूलकस्तामसः ॥ २१.१३
सत्त्वादयो गुणा यत्र मिश्रिताः सन्ति भूयसा ।
मिश्रप्रकृतिकः सोऽयं विज्ञातव्यो मनीषिभिः ॥ २१.१४
सत्त्वादिरजसा मिश्रे श्रेष्ठं सत्त्वादितामसे ।
मध्यमं रजसा मिश्रे कनीयो गुणमिश्रणम् ॥ २१.१५
सत्त्वं चित्तविकाशमाशु तनुते दत्ते प्रबोधं परं कालुष्यं कुरुते रजस्तु मनसः प्रस्तौति चाव्याकृतिम् ।
आन्ध्यं हन्त हृदि प्रयच्छति तिरोधत्ते स्वतत्त्वे धियं संधत्ते जडतां च संततमुपाधत्ते प्रमीलां तमः ॥ २१.१६
वातः स्वैरः स्याल्लघुः शीतरूक्षः सूक्ष्मस्पर्शज्ञानकस्तोदकारी ।
माधुर्यान्ने सोऽभ्रकालेऽपराह्णे प्रत्यूषेऽन्ने याति जीर्णे च कोपम् ॥ २१.१७
पित्तं च तिक्ताम्लरसं च सारकं चोष्णं द्रवं तीक्ष्णमिदं मधौ बहु ।
वर्षान्तकाले भृशमर्धरात्रे मध्यंदिनेऽन्नस्य जरे च कुप्यति ॥ २१.१८
श्लेष्मा गुरुः श्लक्ष्णमृदुः स्थिरस्तथा स्निग्धः पटुः शीतजडश्च गौल्यवान् ।
शीते वसन्ते च भृशं निशामुखे पूर्वेऽह्नि भुक्तोपरि च प्रकुप्यति ॥ २१.१९
दोषत्रयस्य ये भेदा वृद्धिक्षयविकल्पतः ।
तानतः सम्प्रवक्ष्यामि संक्षेपार्थं समञ्जसम् ॥ २१.२०
एकैकवृद्धौ स्युर्भेदास्त्रयो ये वृद्धिदास्त्रयः ।
तत्राप्येकतरा ह्यर्थे षडेवं द्वादशैव ते ॥ २१.२१
वृद्धान्योन्यव्यत्यायाभ्यां षट्त्रिवृद्ध्या तु सप्तमः ।
वृद्धोऽन्योन्यो वृद्धतरः परो वृद्धतमस्त्विवति ॥ २१.२२
तारतम्येन षड्भेदास्त एवं पञ्चविंशतिः ।
एवं क्षयेऽपि तावन्तस्ततः पञ्चाशदीरिताः ॥ २१.२३

वृद्धोऽन्योन्यः समोऽन्यश्च क्षीणस्त्विति पुनश्च षट् ।
द्विवृद्ध्यैकक्षयादुक्तव्यत्ययाच्च पुनश्च षट् ॥ २१.२४
एते द्वादशतः सर्वे द्विषष्टिः समुदाहृताः ।
त्रिषष्टिस्त्वन्तिमो भेदस्त्रयाणां प्रकृतौ स्थितिः ॥ २१.२५
एवं दोषत्रयस्यैतान् भेदान् विज्ञाय तत्त्वतः ।
ततो भिषक्प्रयुञ्जीत तदवस्थोचिताः क्रियाः ॥ २१.२६
कालस्तु वेला समयोऽप्यनेहा दिष्टश्चलश्चावसरोऽस्थिरश्च ।
सोऽप्येष भूतः किल वर्तमानस्तथा भविष्यन्निति च त्रिधोक्तः ॥ २१.२७
भूते वृत्तमतीतं च ह्यस्तनं निसृतं गतम् ।
वर्तमाने भवच्चाद्यतनं स्यादधुनातनम् ॥ २१.२८
अनागतं भविष्ये स्यात्श्वस्तनं च प्रगेतनम् ।
वत्स्र्यद्वर्तिष्यमाणं च स्यादागामि च भावि च ॥ २१.२९
साधारणं तु सामान्यं तत्सर्वत्रानुवर्तते ।
विशेषणं विशेषश्च सकृत्स्थाने च वर्तते ।
तुर्यं पादं चतुर्थांशमीषत्किंचित्तथोच्यते ॥ २१.३०
भूषापीयुषांशुस्वच्छोद्योतप्रस्यन्दामन्दस्वच्छन्दापूराम्भःस्वर्गङ्गासङ्गोन्मीलनमौलिम् ।
मेरुश्रीकैलासक्रीडासङ्घाटीशोभनाम्भःश्लाघाजङ्घालश्रीगौरीगूढाङ्गं वन्दे शम्भुम् ॥ २१.३१
शब्दोच्चारे सकलगुरुके षष्टिवर्णप्रमाणे मानं काले पलमिति दश स्यात्क्षणस्तानि तैस्तु ।
षड्भिर्नाडी प्रहर इति ताः सप्त सार्धास्तथाहोरात्रो ज्ञेयः सुमतिभिरसावष्टभिस्तैः प्रदिष्टः ॥ २१.३२
पक्षः स्यात्पञ्चदशभिरहोरात्रैरुभाविमौ ।
मासो द्वादशभिर्मासैः संवत्सर उदाहृतः ॥ २१.३३
द्विशश्चैत्रादिभिर्मासैर्विज्ञेया ऋतवश्च षट् ॥ २१.३४
त्रिभिस्त्रिभिः क्रमादेतैः स्यातां च विषुवायने ॥ २१.३५
पलं विघटिका प्रोक्ता नाडी तास्तु त्रिविंशतिः ।
नाडी तु घटिका प्रोक्ता तद्द्वयं च मुहूर्तकम् ॥ २१.३६
यामः प्रहर इत्युक्तो दिनभागो दिनांशकः ॥ २१.३७
अहोरात्रदिवारात्राहर्दिवाहर्निशानि च ॥ २१.३८
घस्रो दिनोऽपि दिवसो वासरो भास्वरो दिवा ॥ २१.३९
प्राहणापराहणमध्याहनसायाहनाः स्युस्तदंशकाः ॥ २१.४०
प्रातर्दिनादिः प्रत्यूषो निशान्तः प्रत्युषोऽप्युषः ।
व्युष्टं चाहर्मुखं कल्यं प्रगे प्राहणं प्रभातकम् ॥ २१.४१
आतपस्तु दिनज्योतिः सूर्यालोको दिनप्रभा ।
रविप्रकाशः प्रद्योतस्तमोरिस्तपनद्युतिः ॥ २१.४२
रोचिर्दीप्तिर्द्युतिः शोचिस्त्विडोजो भा रुचिः प्रभा ।
विभा लोकप्रकाशश्च तेज ओजायितं च रुक् ॥ २१.४३
सायंसंध्या दिनान्तश्च निशादिर्दिवसात्ययः ।
सायं पितृप्रसूश्चाथ प्रदोषः स्यान्निशामुखम् ॥ २१.४४
छाया विभानुगा श्यामा तेजोभीरुरनातपः ।
अभीतिरातपाभावो भावालीना च सा स्मृता ॥ २१.४५
शर्वरी क्षणदा रात्रिर्निशा श्यामा तमस्विनी ।
तमी त्रियामा शयनी क्षपा यामवती तमा ॥ २१.४६
नक्तं निशीथिनी दोषा ताराभूषा विभावरी ।
ज्योतिष्मती तारकिणी काली सापि कलापिनी ॥ २१.४७
सा ज्यौत्स्नी चन्द्रिकायुक्ता तमिस्रा तु तमोऽन्विता ॥ २१.४८
अर्धरात्रो निशीथे स्यान्मध्यरात्रश्च स स्मृतः ॥ २१.४९

ज्योत्स्ना तु चन्द्रिका चान्द्री कौमुदी कामवल्लभा ।
चन्द्रातपश्चन्द्रकान्ता शीतामृततरङ्गिणी ॥ २१.५०
कान्तिस्तु सुषमा शोभा छविश्छाया विभा शुभा ।
श्रीर्लक्ष्मीर्दक्प्रियाभिख्या भानं भातिरुमा रमा ॥ २१.५१
तमस्तमिस्रं तिमिरं ध्वान्तं संतमसं तमः ।
अन्धकारश्च भूछायं तच्चान्धतमसं घनम् ॥ २१.५२
आतपः कटुको रूक्षश्छाया मधुरशीतला ।
त्रिदोषशमनी ज्योत्स्ना सर्वव्याधिकरं तमः ॥ २१.५३
पक्षादिः प्रथमाद्या च पक्षतिः प्रतिपच्च सा ॥ २१.५४
पक्षान्तोऽर्केन्दुविश्लेषः पर्व पञ्चदशी तथा ।
द्वितीयं तु भवेत्पर्व चन्द्रार्कात्यन्तसंगमः ॥ २१.५५
प्रतिपदमारभ्यैताः क्रमात्द्वितीयादिकाश्च पञ्चदश ।
पक्षे तिथयो ज्ञेयाः पक्षश्च सितोऽसितो द्विविधः ॥ २१.५६
सितस्त्वापूर्यमाणः स्यात्शुक्लश्च विशदः शुदि ॥ २१.५७
असितो मलिनः कृष्णो बहुलो वदि च स्मृतः ॥ २१.५८
दिवसैर्यत्र तत्रापि वसुसागरसम्मितैः ।
भिषक्क्रियोपयोगाय मण्डलं भिषजां मतम् ॥ २१.५९
पूर्णिमा पौर्णमासी च ज्यौत्स्नी चेन्दुमती सिता ।
सा पूर्वानुमतिर्ज्ञेया राका स्यादुत्तरा च सा ॥ २१.६०
दर्शस्तु स्यादमावास्यामावस्यार्केन्दुसंगमः ।
सा पूर्वा तु सिनीवाली द्वितीया तु कुहूर्मता ॥ २१.६१
मासार्धस्तु भवेत्पक्षः स पञ्चदशरात्रकः ॥ २१.६२
द्विपक्षस्तु भवेन्मासश्चैत्राद्या द्वादशाश्च ते ॥ २१.६३
चैत्रस्तु चैत्रिकश्चैत्री मधुः कालादिकश्च सः ॥ २१.६४
वैशाखो माधवो राधो ज्यैष्ठः शुक्रस्तपस्तथा ॥ २१.६५
आषाढः शुचिरुक्तः श्रावणिकः श्रावणो नभाश्चापि ॥ २१.६६
भाद्रो भाद्रपदोऽपि प्रौष्ठपदः स्यान्नभो नभस्यश्च ॥ २१.६७
इषस्त्वाश्वयुजश्च स्यादाश्विनः शारदश्च सः ॥ २१.६८
कार्त्तिको बाहुलोऽपि स्यादूर्जः कार्त्तिकिकश्च सः ॥ २१.६९
मार्गः सहा मार्गशीर्ष आग्रहायणिकोऽपि सः ॥ २१.७०
पौषस्तु पौषिकस्तैषः सहस्यो हैमनोऽपि च ॥ २१.७१
माघस्तपाः तपस्यस्तु फाल्गुनो वत्सरान्तकः ॥ २१.७२
चैत्रादिमासौ द्वौ द्वौ स्युर्नाम्ना षड्तवः क्रमात् ॥ २१.७३
भवेद्वसन्तो मधुमाधवाभ्यां स्यातां तथा शुक्रशुची निदाघः ।
नभोनभस्यौ जलदागमः स्यादिषोर्जकाभ्यां शरदं वदन्ति ॥ २१.७४
हेमन्तकालस्तु सहःसहस्यौ तपस्तपस्यौ शिशिरः क्रमेण ।
मासद्विकेनेति वसन्तकाद्या धीमद्भिरुक्ता ऋतवः षडेते ॥ २१.७५
ऋतुराजो वसन्तः स्यात्सुरभिर्माधवो मधुः ।
पुष्पमासः पिकानन्दः कान्तः कामरसश्च सः ॥ २१.७६
निदाघस्तूष्मको घर्मो ग्रीष्म ऊष्मागमस्तपः ।
तापनश्चोष्णकालः स्यादुष्णश्चोष्णागमश्च सः ॥ २१.७७
वर्षाः प्रावृड्वर्षकालो घर्मान्तो जलदागमः ।
मयूरोल्लासकः कान्तश्चातकाह्लादनोऽपि सः ॥ २१.७८
शरद्वर्षावसायः स्यान्मेघान्तः प्रावृडत्ययः ॥ २१.७९
ऊष्मापहस्तु हेमन्तः शरदन्तो हिमागमः ॥ २१.८०

शिशिरः कम्पनः शीतो हिमकूटश्च कोटनः ।
इत्येतन्नामतः प्रोक्तमृतुषट्कं यथाक्रमम् ॥ २१.८१
इह सुरभिनिदाघमेघकालाः शरद्धिमशिशिरहायनाः क्रमेण ।
प्रतिदिनमृतवः स्युरूर्ध्वमर्कोदयसमयाद्दशकेन नाडिकानाम् ॥ २१.८२
मकरक्रान्तिमारभ्य भानोः स्यादुत्तरायणम् ॥ २१.८३
कर्कटक्रमणादूर्ध्वं दक्षिणायनमुच्यते ॥ २१.८४
यदा तुलायां मेषे च सूर्यसंक्रमणं क्रमात् ।
तदा विषुवती स्यातां विषुवे अपि ते स्मृते ॥ २१.८५
कालज्ञैः षष्टिराख्याता वत्सराः प्रभवादयः ।
शरत्संवत्सरोऽब्दश्च हायनो वत्सरः समाः ॥ २१.८६
वसन्ते दक्षिणो वातो भवेद्वर्षासु पश्चिमः ।
उत्तरः शारदे काले पूर्वो हैमन्तशैशिरे ॥ २१.८७
पूर्वस्तु मधुरो वातः स्निग्धः कटुरसान्वितः ।
गुरुर्विदाहशमनो वातदः पित्तनाशनः ॥ २१.८८
दक्षिणः षड्रसो वायुश्चक्षुष्यो बलवर्धनः ।
रक्तपित्तप्रशमनः सौख्यकान्तिबलप्रदः ॥ २१.८९
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ।
सद्यः प्राणापहो दुष्टः शोषकारी शरीरिणाम् ॥ २१.९०
उत्तरः पवनः स्निग्धो मृदुर्मधुर एव च ।
सकषायरसः शीतो दोषाणां च प्रकोपणः ॥ २१.९१
कृत्वैकमवधिं तस्मादिदं पूर्वं च पश्चिमम् ।
इति देशौ निदिश्येते यया सा दिगिति स्मृता ॥ २१.९२
दिगाशा च हरित्काष्ठा ककुप्सा च निदेशिनी ।
सा च देशविभागेन दशधा परिकल्प्यते ॥ २१.९३
ज्योतींषि तपनादीनि ज्योतिश्चक्रभ्रमीक्रमात् ।
यतो नित्यमुदीयन्ते सा पूर्वाख्या दिगुच्यते ॥ २१.९४
पूर्वा च दक्षिणा चैव पश्चिमा चोत्तरापि च ।
प्रादक्षिण्यक्रमेणैताश्चतस्रः स्युर्महादिशः ॥ २१.९५
पूर्वा प्राची पुरो मघोन्यैन्द्री माघवती च सा ।
शामनी दक्षिणावाची यामी वैवस्वती च सा ॥ २१.९६
पश्चिमा तु प्रतीची स्याद्वारुणी प्रत्यगित्यपि ।
उत्तरा दिक्तु कौबेरी दैवी सा स्यादुदीच्यपि ॥ २१.९७
दिशोर्द्वयोर्द्वयोर्मध्ये यो भागः कोणसंज्ञकः ।
विदिशस्ताश्चतस्रश्च प्रोक्ता उपदिशस्तथा ॥ २१.९८
आग्नेयी स्यात्प्राच्यवाच्योस्तु मध्ये नैरृत्याख्या स्यादवाचीप्रतीच्योः ।
वायव्यापि स्यादुदीचीप्रतीच्योरैशानी स्यादन्तरा प्राच्युदीच्योः ॥ २१.९९
उपरिष्टाद्दिगूर्ध्वं स्यादधस्तादधरा स्मृता ।
अन्तस्त्वभ्यन्तरं प्रोक्तमन्तरं चान्तरालकम् ॥ २१.१००
स्पष्टस्त्वष्टयवैर्देशो मितो ज्ञेयोऽङ्गुलाह्वयः ।
स्याच्चतुर्विंशकैस्तैस्तु हस्तो हस्तचतुष्टयम् ॥ २१.१०१
दण्डो दण्डैर्द्विसाहस्रैः क्रोशस्तेषां चतुष्टयम् ।
योजनं स्यादिति ह्येष देशस्योक्तो मितिक्रमः ॥ २१.१०२
इति प्रस्तावतो वैद्यस्योपयुक्ततया मया ।
परिमाणं तथोन्मानमिति द्वितयमीर्यते ॥ २१.१०३
धान्ये सा निष्टिका पुंसो यत्तु मुष्टिचतुष्टयम् ।

तद्द्वयेनाष्टिका ज्ञेया कुडवस्तद्द्वयेन तु ॥ २१.१०४
प्रस्थस्तु तच्चतुष्केण तच्चतुष्केण चाढकी ।
ताश्चतस्रो भवेद्द्रोणः खारी तेषां तु विंशतिः ॥ २१.१०५
गोधूमद्वितयोन्मितिस्तु कथिता गुञ्जा तया सार्धया वल्लो वल्लचतुष्टयेन भिषजां माषो मतस्तच्चतुः ।
निष्को निष्कयुगं तु सार्धमुदितः कर्षः पलं तच्चतुस्तद्वत्तच्छतकेन चाथ च तुला भारस्तुलाविंशतिः ॥ २१.१०६
इत्थं सत्त्वरजस्तमस्त्रिगुणिकानुक्रान्तदोषत्रयप्रक्रान्तोचितकालदेशकलनाभिख्यानसुख्यापितम् ।
वर्गं स्वर्गसभासु भास्वरभिषग्वर्यातिवीर्यामयध्वंसाश्चर्यकरीं प्रयाति मतिमानेनं पठित्वा प्रथाम् ॥ २१.१०७
संग्रामोत्संगरिङ्गत्तुरगसुरपटोद्धूतधात्रीरजोभिः संरम्भं याति सान्द्रे तमसि किल शमं यद्द्विषां याति सत्त्वम् ।
तस्यैषोऽप्येकविंशः श्रयति खलु कृतौ नामनिर्माणचूडारत्नापीडे प्रशान्तिं नरहरिकृतिनः कोऽपि सत्त्वादिवर्गः ॥ २१.१०८

यान्यौषधानि मिलितानि परस्परेण संज्ञान्तरैर्व्यवहृतानि च योगकृद्भिः ।
तेषां स्वरूपकथनाय विमिश्रकाख्यं वर्गं महागुणमुदारमुदीरयामः ॥ २२.१
पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम् ।
त्रिकटु त्र्यूषणं त्र्यूषं कटुत्रयकटुत्रिकम् ॥ २२.२
हरीतकी चामलकं विभीतकमिति त्रयम् ।
त्रिफला त्रिफली चैव फलत्रयफलत्रिके ॥ २२.३
द्राक्षाकाश्मर्यखर्जूरीफलानि मिलितानि तु ।
मधुरत्रिफला ज्ञेया मधुरादिफलत्रयम् ॥ २२.४
जातीफलं पूगफलं लवंगकलिकाफलम् ।
सुगन्धित्रिफला प्रोक्ता सुरभित्रिफला च सा ॥ २२.५
चन्दनं कुङ्कुमं वारि त्रयमेतद्वरार्धकम् ।
त्रिभागकुङ्कुमोपेतं तदुक्तं चाद्यपुष्पकम् ॥ २२.६
सैन्धवं च विडं चैव रुचकं चेति मिश्रितम् ।
लवणत्रयमाख्यातं तच्च त्रिलवणं तथा ॥ २२.७
सर्जिक्षारं यवक्षारं टङ्कक्षारमेव च ।
क्षारत्रयं समाख्यातं त्रिक्षारं च प्रकीर्तितम् ॥ २२.८
हरीतकी नागरं च गुडश्चेति त्रयं समम् ।
समत्रितयमित्युक्तं त्रिसमं च समत्रयम् ॥ २२.९
सितामाक्षिकसर्पींषि मिलितानि यदा तदा ।
मधुरत्रयमाख्यातं त्रिमधु स्यान्मधुत्रयम् ॥ २२.१०
गुडोत्पन्ना हिमोत्पन्ना मधुजातेति मिश्रितम् ।
त्रिशर्करा च त्रिसिता सितात्रयसितात्रिके ॥ २२.११
कालाञ्जनसमायुक्ते पुष्पाञ्जनरसाञ्जने ।
अञ्जनत्रितयं प्राहुस्त्र्यञ्जनं चाञ्जनत्रयम् ॥ २२.१२
वातः पित्तं कफश्चेति त्रयमेकत्र संयुतम् ।
दोषत्रयं त्रिदोषं स्याद्दोषत्रितयमित्यपि ॥ २२.१३
वातपित्तकफा यत्र समतां यान्ति नित्यशः ।
त्रिदोषसममित्येतत्समदोषत्रयं तथा ॥ २२.१४
बृहती चाग्निदमनी दुःस्पर्शा चेति तु त्रयम् ।
कण्टकारीत्रयं प्रोक्तं त्रिकण्टं कण्टकत्रयम् ॥ २२.१५
नागरातिविषा मुस्ता त्रयमेतत्त्रिकार्षिकम् ॥ २२.१६
गुडूच्या मिलितं तच्च चातुर्भद्रकमुच्यते ॥ २२.१७
त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥ २२.१८
एलात्वक्पत्रकैस्तुल्यैर्मरिचेन समन्वितैः ।
कटुपूर्वमिदं चान्यच्चातुर्जातकमुच्यते ॥ २२.१९
श्रीखण्डागुरुकर्पूरकाश्मीरैस्तु समांशकैः ।
मृगाङ्कमुकुटार्होऽयं मिलितैर्देवकर्दमः ॥ २२.२०
कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षधूपकः ।
एकीकृतमिदं सर्वं यक्षकर्दम इष्यते ॥ २२.२१
कुङ्कुमागुरुकुरङ्गनाभिकाचन्द्रचन्दनसमांशसम्भृतम् ।
त्र्यक्षपूजनपरैकगोचरं यक्षकर्दममिमं प्रचक्षते ॥ २२.२२
कर्पूरकक्कोललवंगपुष्पगुवाकजातीफलपञ्चकेन ।
समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात् ॥ २२.२३

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सर्वैरेकत्र मिलितैः पञ्चकोलकमुच्यते ॥ २२.२४
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
सर्वैरेकत्र मिलितैः पञ्चवेतसमुच्यते ॥ २२.२५
शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका ।
तथा गोक्षुरकश्चेति लघ्विदं पञ्चमूलकम् ॥ २२.२६
बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटला तथा ।
सर्वैस्तु मिलितैरेतैः स्यान्महापञ्चमूलकम् ॥ २२.२७
पञ्चमूलकयोरेतद्द्वयं च मिलितं यदा ।
तदा भिषग्भिराख्यातं गुणाढ्यं दशमूलकम् ॥ २२.२८
बलापुनर्नवैरण्डसूर्प्यपर्णीद्वयेन च ।
एकत्र योजितेनैतन्मध्यमं पञ्चमूलकम् ॥ २२.२९
गुडूची गोक्षुरश्चैव मूषली मुण्डिका तथा ।
शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥ २२.३०
गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् ।
एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम् ॥ २२.३१
गोमूत्रं गोमयं क्षीरं गव्यमाज्यं दधीति च ।
युक्तमेतद्यथायोगं पञ्चगव्यमुदाहृतम् ॥ २२.३२
निम्बस्य पत्त्रत्वक्पुष्पफलमूलैर्विमिश्रितैः ।
पञ्चनिम्बं समाख्यातं तत्तिक्तं निम्बपञ्चकम् ॥ २२.३३
कोलदाडिमवृक्षाम्लं चुल्लकी साम्लवेतसा ।
फलं पञ्चाम्लमुद्दिष्टमम्लपञ्चफलं स्मृतम् ॥ २२.३४
जम्बीरनारङ्गसहाम्लवेतसैः सतिन्तिडीकैश्च सबीजपूरकैः ।
समांशभागेन तु मेलितैरिदं द्वितीयमुक्तं च फलाम्लपञ्चकम् ॥ २२.३५
चाङ्गेरी लिकुचाम्लवेतसयुतं जम्बीरकं पूरकं नारङ्गं फलषाडवस्त्विति तु पिण्डाम्लं च बीजाम्लकम् ।
अम्बष्ठासहितं द्विरेतदुदितं पञ्चाम्लकं तद्द्वयं विज्ञेयं करमर्दनिम्बुकयुतं स्यादम्लवर्गाह्वयम् ॥ २२.३६
तैलकन्दः सुधाकन्दः क्रोडकन्दो रुदन्तिका ।
सर्पनेत्रयुताः पञ्च सिद्धौषधिकसंज्ञकाः ॥ २२.३७
शैरीषं कुसुमं मूलं फलं पत्त्रं त्वगित्ययम् ।
कीटारिः कथितो योगः पञ्चशैरीषकाभिधः ॥ २२.३८
त्वक्पत्त्रकुसुमं मूलं फलमेकस्य शाखिनः ।
एकत्र मिलितं तच्चेत्पञ्चाङ्गमिति संज्ञितम् ॥ २२.३९
विदारिगन्धा बृहती पृश्निपर्णी निदिग्धिका ।
श्वदंष्ट्रा चेति सम्प्रोक्तो योगः पञ्चगणाभिधः ॥ २२.४०
अत्यम्लपर्णीकाण्डीरमालाकन्दद्विशूरणैः ।
प्रोक्तो भवति योगोऽयं पञ्चशूरणसंज्ञकः ॥ २२.४१
शृङ्गिकः कालकूटश्च मुस्तको वत्सनाभकः ।
सक्तुकश्चेति योगोऽयं महापञ्चविषाभिधः ॥ २२.४२
स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिका ।
एतान्युपविषाण्याहुः पञ्च पाण्डित्यशालिनः ॥ २२.४३
गवामजानां मेषीणां महिषीणां च मिश्रितम् ।
मूत्रेण गर्दभीनां यत्तन्मूत्रं मूत्रपञ्चकम् ॥ २२.४४
सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम् ॥ २२.४५
वङ्गनागसमायुक्तं तत्प्राहुः पञ्चलोहकम् ॥ २२.४६
सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं समम् ।

ग्रहाङ्गमिति बोद्धव्यं द्वितीयं पञ्चलोहकम् ॥ २२.४७
यवमुष्ककसर्जानां पलाशतिलयोस्तथा ।
क्षारैस्तु पञ्चभिः प्रोक्तः पञ्चक्षाराभिधो गणः ॥ २२.४८
काचसैन्धवसामुद्रविडसौवर्चलैः समैः ॥ २२.४९
स्यात्पञ्चलवणं तच्च मृत्स्नोपेतं षडाह्वयम् ॥ २२.५०
धवापामार्गकुटजलाङ्गलीतिलमुष्कजैः ।
क्षारैरेतैस्तु मिलितैः क्षारषट्कमुदाहृतम् ॥ २२.५१
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्रसमाह्वयैः ।
शरीरस्थैर्यदैरेतैः सप्तधातुमयो गणः ॥ २२.५२
दरदः पारदं सस्यो वैक्रान्तं कान्तमभ्रकम् ।
माक्षिकं विमलं चेति स्युरेतेऽष्टौ महारसाः ॥ २२.५३
खेचराञ्जनकङ्गुष्ठगन्धालगैरिकक्षितीः ।
शैलेयाञ्जनसम्मिश्राः शंसन्त्युपरसान् बुधाः ॥ २२.५४
कम्पिल्लगौरीचपलाकपर्दसशैलसिन्दूरकवह्निजारान् ।
पाषाणिनो वोदरशृङ्गयुक्तानित्यष्ट सामान्यरसानि चाहुः ॥ २२.५५
पञ्चलोहसमायुक्तैः कान्तमुण्डकतीक्ष्णकैः ।
कल्पितः कथितो धीरैरष्टलोहाभिधो गणः ॥ २२.५६
शिग्रुमूलकपलाशचुक्रिकाचित्रकार्द्रकसनिम्बसम्भवैः ।
इक्षुशैखरिकमोचकोद्भवैः क्षारपूर्वदशकं प्रकीर्तितम् ॥ २२.५७
मूत्राणि हस्तिमहिषोष्ट्रगवाजकानां मेषाश्वरासभकमानुषमानुषीणाम् ।
यत्नेन यत्र मिलितानि दशेति तानि शास्त्रेषु मूत्रदशकाह्वयभाञ्जि भान्ति ॥ २२.५८
स्याज्जीवकर्षभकयुग्मयुगद्विमेदाकाकोलिकाद्वययुतद्विकसूप्यपर्ण्या ।
जीव्या मधूकयुतया मधुराह्वयोऽयं योगो महानिह विराजति जीवकादिः ॥ २२.५९
जीवकर्षभकौ मेदे काकोल्यावृद्धिवृद्धिके ।
एकत्र मिलितैरेतैरष्टवर्गः प्रकीर्तितः ॥ २२.६०
कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः ।
मुराकर्चूरमुस्ताभिः सर्वौषधमुदाहृतम् ॥ २२.६१
अजाजी मरिचं शुण्ठी ग्रन्थि धान्यं निशाह्वयम् ।
पिप्पली मरिचं चेति वेशवारगणो मतः ॥ २२.६२
सर्वौषधिसमायुक्ताः शुष्काश्चामलकत्वचः ।
यदा तदायं योगः स्यात्सुगन्धामलकाभिधः ॥ २२.६३
द्राक्षादाडिमखर्जूरकदलीशर्करान्वितम् ।
लाजाचूर्णं समध्वाज्यं संतर्पणमुदाहृतम् ॥ २२.६४
सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः ।
नात्यच्छो नातिसान्द्रश्च मन्थः इत्यभिधीयते ॥ २२.६५
दाडिमं किंशुकं लाक्षा बन्धूकं च निशाह्वयम् ।
कुसुम्भपुष्पं मञ्जिष्ठा इत्येतै रक्तवर्गकः ॥ २२.६६
खटिनीश्वेतसंयुक्ताः शङ्खशुक्तिवराटिकाः ।
भृष्टाश्मशर्करा चेति शुक्लवर्ग उदाहृतः ॥ २२.६७
भार्गीशटीपुष्करवत्सबीजदुरालभाशृङ्गिपटोलतिक्ताः ।
किरातविश्वेन्द्रकणेन्द्रबीजधान्यानि तिक्तं सुरदारुकं च ॥ २२.६८
अष्टादशाङ्गाभिध एष योगः समागमे स्याद्दशमूलकेन ।
द्विधा च भार्ग्यादिक एक एष ज्ञेयो द्वितीयस्तु किरातकादिः ॥ २२.६९
द्वात्रिंशत्पलसम्मितं दधि पलान्यष्टौ च खण्डं पलस्यार्धं चेन्मरिचस्य तेन तुलितं युक्तं त्वगेलाह्वयम् ।
मध्वाज्यं च युतं तदर्धमिलितं संशोधितैर्योजिता भाण्डे स्याद्धिमवासिते शिखरिणी श्रीकण्ठभोग्या गुणैः ॥ २२.७०

इत्थं नानामिश्रयोगाभिधानादेनं वर्गं मिश्रकाख्यं विदित्वा ।
वैद्यः कुर्याद्योगमत्रत्यसंज्ञाप्रज्ञासंज्ञो बन्धुभिर्येन धीरः ॥ २२.७१
शौर्यासङ्गरता रमा स्वयमुमा शश्वच्छिवासङ्गिनी सा वाणी चतुराननप्रणयिनी श्रीसम्मिता यं श्रिता ।
तस्यागादभिधानशेखरमणौ वर्गो नृसिंहेशितुर्द्वाविंशोऽवसितिं कृतौ कृतधियां यो मिश्रकाख्यो मतः ॥ २२.७२

राजनिघण्टु, एकार्थादिवर्गः , एकार्थवर्गः

श्रीश्च लक्ष्मीफले ज्ञेया त्वसनो बीजवृक्षकः ।
शालूकं पद्मकन्दे स्यात्सदापुष्पो रविद्रुमे ॥ २३.१
कुबेरको नन्दिवृक्षे गोकण्टो गोक्षुरे तथा ।
दन्तफलस्तु पिप्पल्यां कसेरुर्भद्रमुस्तके ॥ २३.२
नागरोत्था कच्छरुहा अङ्कोले दीर्घकीलके ।
वल्लकी सल्लकीवृक्षे मातुलुङ्गे तु पूरकः ॥ २३.३
ब्रह्मघ्नी तु कुमारी स्यादङ्कोले गूढमल्लिका ।
अतिविषा श्वेतवचोपकुञ्ची स्थूलजीरके ॥ २३.४
कवचः स्यात्पर्पटके लवणं तु पयोधिजम् ।
बृहत्त्वक्सप्तपर्णे स्यात्काम्भोजी वाकुची तथा ॥ २३.५
कीटपादी हंसपाद्यां कुनटी तु मनःशिला ।
वैकुण्ठमर्जके प्राहुर्भूधात्र्यां तु तमालिनी ॥ २३.६
शतकुन्दः शरीरे स्यादग्निकाष्ठं तथागुरौ ।
सूक्ष्मपत्त्री शतावर्यां क्षीरपर्ण्यर्कसंज्ञके ॥ २३.७
शौण्डी तु पिप्पली ज्ञेया कस्तूर्यां मदनी तथा ।
ब्रह्मपर्णी पृश्निपर्ण्यां चित्रपर्णी च सा स्मृता ॥ २३.८
छत्त्रपर्णः सप्तपर्णे पीलुपर्णी तु तुण्डिका ।
शाकश्रेष्ठस्तु वृन्ताके शङ्गरः शमिरुच्यते ॥ २३.९
गोरटः स्याद्विट्खदिरे तुण्डिश्चारण्यबिम्बिका ।
विष्णुगुप्तं तु चाणक्यमूलेऽनन्ता यवासके ॥ २३.१०
कपिकच्छुरात्मगुप्ता वातपोथस्तु किंशुके ।
पीता तु रजनी ज्ञेया बोधिवृक्षस्तु पिप्पलः ॥ २३.११
उशीरे समगन्धिः स्याद्धिङ्गुले चूर्णपारदः ।
हिङ्गावगूढगन्धः स्याद्गोदन्ते विस्रगन्धिके ॥ २३.१२
शम्यामीशान इत्याहुर्दिवान्धो घूक उच्यते ।
पयस्या क्षीरकाकोल्यां शतवेध्यम्लवेतसे ॥ २३.१३
रोचनी नारिकेले च भूधात्र्यां चारुहा स्मृता ।
प्रियां प्रियङ्गुके प्राहुः खराह्वा चाजमोदके ॥ २३.१४
तगरं दण्डहस्ती स्याद्रसोनो लशुने स्मृतः ।
तपस्विनी जटामांस्यां मेघपुष्येऽजशृङ्गिका ॥ २३.१५
ज्ञेयं मातुलपुष्पं तु धुस्तूरे चोरके रिपुः ।
शष्पं बालतृणं प्रोक्तं शैलेयं चाश्मपुष्पके ॥ २३.१६
श्रीपुष्पं तु लवंगे स्याद्बालपुष्पी तु यूथिका ।
स्थूलपुष्पं तु झेण्डूके चित्रके दारुणः स्मृतः ॥ २३.१७
अथ स्याद्विषपुष्पं तु पुष्पं श्यामदलान्वितम् ।
बलभद्रः कदम्बोऽन्यः शाखोटे भूतवृक्षकः ॥ २३.१८
रामा तमालपत्त्रे स्याद्भूर्जे चर्मदलो मतः ।
आत्मशल्या शतावर्यां पिक्यां कलभवल्लभा ॥ २३.१९
विप्रप्रिया पलाशे च ज्वरारिस्तु गुडूचिका ।
कण्टकार्यां तु श्वेतायां ज्ञेया तु कपटेश्वरी ॥ २३.२०
पाण्डुफलं पटोले स्याच्छालिपर्ण्यां स्थिरा मता ।
गायत्री खदिरे प्रोक्ता स्यादेर्वारुस्तु कर्कटी ॥ २३.२१
नीवारेऽरण्यशालिः स्यात्पार्वत्यां गजपिप्पली ।
स्पृक्कायां देवपुत्री स्यादङ्कोले देवदारु च ॥ २३.२२

रीठां प्रकीर्यके प्राहुर्दन्त्यां केशरुहा स्मृता ।
आम्रस्तु सहकारे स्यात्ज्ञेयस्ताले द्रुमेश्वरः ॥ २३.२३
दुष्पुत्रश्चोरके प्रोक्तो माडे चैव वितानकः ।
माचिषा मण्डके प्रोक्ता मार्जारी मृगनाभिजा ॥ २३.२४
तिन्तिडीके तु बीजाम्लः कदल्यां तु सकृत्फला ।
जर्तिलश्चारण्यतिले ताक्ष्र्यशैलं रसाञ्जने ॥ २३.२५
विभीतके कलिन्दः स्याच्छालिर्ज्ञेया तु पाटला ।
रङ्गमाता तु लाक्षायामग्निज्वाला तु धातकी ॥ २३.२६
तिनिशे स्याद्भस्मगर्भा मधूल्यां मधुकर्कटी ।
सितगुञ्जा काकपीलौ चन्द्रायां तु गुडूचिका ॥ २३.२७
नटश्चाशोकवृक्षे स्याद्दाडिमे फलषाडवः ।
निष्पावे तु पलङ्कः स्यात्कलशी पृश्निपर्णिका ॥ २३.२८
राजान्ने दीर्घशूकः स्याज्जरणः कृष्णजीरके ।
पिङ्गा चैव हरिद्रायां श्वेतशूके यवः स्मृतः ॥ २३.२९
श्यामाके तु त्रिबीजः स्यादाढक्यां तुवरी स्मृता ।
गोधूमेऽथ मृदुः प्रोक्तः करला त्रिपुटा तथा ॥ २३.३०
सूपश्रेष्ठो हरिन्मुद्गे राजान्ने ह्रस्वतण्डुलः ।
मकुष्टो वनमुद्गे स्यान्मकुष्ठे च कृमीलकः ॥ २३.३१
कृष्णः काश्मीरवृक्षे स्यात्विषतिन्दुर्विषद्रुमे ।
पलाशे पत्त्रकः प्रोक्तो न्यग्रोधो रोहिणः स्मृतः ॥ २३.३२
नारिकेले रसफलस्तथा ताले तु शम्बरः ।
विकङ्कतो मृदुफले केसरे बकुलः स्मृतः ॥ २३.३३
शेफाली सिन्धुवारे च मत्स्याक्षे हिलमोचिका ।
वास्तुके श्वेतचिल्ली स्यात्वेल्लिका स्यादुपोदकी ॥ २३.३४
आरामवल्लिकायां तु मूलपोती तु विश्रुता ।
मकरन्दः पुष्परसे जात्यां तु सुमना स्मृता ॥ २३.३५
आम्रातके पीतनकः क्षौद्रे पुष्पासवः स्मृतः ।
मृदुः कन्या तु सम्प्रोक्ता जीवा स्याज्जीवके तथा ॥ २३.३६
छिन्नायां तु गुडूची स्यान्नारायण्यां शतावरी ।
सर्जे तु बस्तकर्णी च शलाटुर्बिल्वके तथा ॥ २३.३७
सर्जान्तरे चाश्वकर्णो गोकर्णी समधौ रसे ।
कृष्णं नीलाञ्जने प्राहुराखुकर्णी तु शम्बरी ॥ २३.३८
दुर्गा तु श्यामयक्षी स्याद्भूतो मुस्ताथ दुर्ग्रहः ।
अपामार्गोऽथ रक्ता तु मञ्जिष्ठायां शटस्तथा ॥ २३.३९
धुस्तूरे ब्रह्मजा ब्राह्मी गन्धर्वः कोकिले स्मृतः ।
सरटी तु दुरारोहा बाहुल्यां तर्वटः स्मृतः ॥ २३.४०
सर्षपं तु दुराधर्षो ह्रीवेरं बालके तथा ।
हैमवती चाल्परसा भिषङ्माताटरूषके ॥ २३.४१
ब्रह्मपुत्री तु भार्गी स्याद्धस्तिपर्णी तु कर्कटी ।
तुलसी बहुमञ्जर्यां कटभ्यां गर्दभी स्मृता ॥ २३.४२
कच्छुघ्नो हवुषायां च शाल्मली च यमद्रुमे ।
सूक्ष्मैला चैव कोरङ्ग्यां गन्धाढ्यां धूम्रपत्त्रिका ॥ २३.४३
शैलजा गजपिप्पल्यां क्षीरिणी तु कुटुम्बिनी ।
देवबलायां त्रायन्ती कटी च खदिरे स्मृता ॥ २३.४४
इन्दीवरा करम्भायां कन्दे चेन्दीवरं स्मृतम् ।

पुष्पान्तरे राजकन्या पार्थिवे तगरं तथा ॥ २३.४५
सागरे रत्नगर्भश्च रत्नगर्भा तु मेदिनी ।
सुवर्णे काञ्चनं ज्ञेयं हेमदुग्धा तु काञ्चनी ॥ २३.४६
प्रसारिण्यां राजबला कर्पूरे हिमवालुकः ।
हिमं कर्पूरके प्राहुर्गोशीर्षं चन्दनं स्मृतम् ॥ २३.४७
ब्रह्मदारुः स्मृतः फञ्ज्यां पण्यन्धा पणधा स्मृता ।
वत्सादनी गुडूच्यां च सोमवल्ल्यन्त्रवल्लिका ॥ २३.४८
नद्याम्रे च समष्ठिलोऽथ रजनी स्यात्कालमेष्यां बुधैर्दुग्धाईस्तिलके पलाण्डुरिति च स्याद्दीपने चोक्ततः ।
मोचा हस्तिविषाणके च कथिता भार्ग्यां तु पद्मा स्मृता निम्बे शीर्णदलस्तथात्र कथितः स्याद्धान्यराजो यवे ॥ २३.४९
राजनिघण्टु, एकार्थादिवर्गः , द्व्यर्थाः
सौराष्ट्र्यां रुचिदे चैव संधानं च प्रचक्षते ।
पलाशिके शटी लाक्षा कितवश्चोरके शठे ॥ २४.१
बलाका बर्हिणश्चैव मेघानन्दः प्रकीर्तितः ।
आकाशेऽभ्रके गगनं जलूका मत्कुणास्रपोः ॥ २४.२
नासानक्षत्रयोर्नाडी कोलायां शुण्डिके कणा ।
ज्वरघ्नश्छिन्नवास्तूके ललना चारसर्जयोः ॥ २४.३
मञ्जिष्ठायां गुडूच्यां तु कुमारी नागपूर्विका ।
मुद्गरे सप्तपर्णे स्यात्सप्तच्छदमुदाहृतम् ॥ २४.४
कृत्रिमकं विडे काचे पाक्यं च यवजे विडे ।
सर्पान्तरे पटोले च कुलकः समुदाहृतः ॥ २४.५
जन्तुकायां तु वास्तुके विज्ञेया चक्रवर्तिनी ।
मधुरा जीवके प्रोक्ता मेदायां च तथा स्मृता ॥ २४.६
कर्कन्धूश्चेति सम्प्रोक्तो बदरे पूतिमारुते ।
वासन्ती कोकिलायां तु दन्त्यापुष्पं प्रचक्षते ॥ २४.७
चन्द्राब्जे चोत्पलं कुष्ठे कृकरश्चव्यवातयोः ।
चपला मद्यमागध्योर्धरण्यां खदिरे क्षमा ॥ २४.८
सिन्धुपुष्पं कदम्बे च बकुले चाथ लोमशा ।
काकोल्यां च वचायां च सूक्ष्मैला चेन्द्रवारुणी ॥ २४.९
ऐन्द्र्यां गोदावरी चैव गौतम्यां रोचना तथा ।
कुसुम्भेऽरण्यजे चैव कौसुम्भं कुसुमाञ्जने ॥ २४.१०
शटी गन्धनिशायां च चोरके चाथ कर्कटी ।
देवदाल्यां त्रपुस्यां च शताह्वायां शतावरी ॥ २४.११
मिशिस्तु तुत्थनीलिन्यां सूक्ष्मैलायां तथा स्मृता ।
वितुन्नकं तु भूधात्र्यां ख्याता कुस्तुम्बरी तथा ॥ २४.१२
बर्हिर्दर्भे मयूरे च प्लक्षमर्कटयोः प्लवः ।
आखुपर्णी सुतश्रेण्यां प्रत्यक्श्रेण्यां तथा स्मृता ॥ २४.१३
वस्त्रे तमालपत्त्रे च अंशुकः समुदाहृतः ।
दर्भे च कुशिके वज्रं कङ्गुधान्ये प्रियङ्गुके ॥ २४.१४
कङ्गुरङ्गारवल्ली तु फञ्जी हस्तिकरञ्जयोः ।
वक्रपुष्पमगस्त्ये च पलाशे च श्वपुच्छकम् ॥ २४.१५
माषपर्ण्यां शुनः पुच्छे चिल्ली स्याच्छाकलोध्रयोः ।
अथवा चेन्द्रवारुण्यां शक्राह्वेन्द्रयवं तथा ॥ २४.१६
काकभाण्डी काकतुण्ड्यां ख्याता हस्तिकरञ्जके ।
दीर्घाङ्कुश्यां पलाशे च याज्ञिकोऽथ विदारिका ॥ २४.१७
काश्मर्यां च शृगाल्यां च टेण्टी च मृगधूर्तके ।

भल्लूकोऽथ रुदन्त्यां च गोक्षुरे चणपत्रकः ।
कटुकागजपिप्पल्योः ख्याता च शकुलादनी ॥ २४.१८
मन्थानके समाख्यातो राजवृक्षस्तृणाधिपे ।
मदने कुटिले चैव तगरं चाथ रक्तिका ॥ २४.१९
गुञ्जायां राजिकायां च पिशुनं चापि कुङ्कुमे ।
तगरेऽथ यवाह्वायां यवक्षारं यवासिका ॥ २४.२०
अङ्कुरौदनयोः कूरो दन्तीमधुकपुष्पयोः ।
मधुपुष्पं च शोफघ्नी शालिपर्णीपुनर्नवे ।
बालपत्रो यवासे च खदिरे चाथ बालके ॥ २४.२१
उदीच्यमुत्तरे देशे कपिः कीशतुरुष्कयोः ।
लाङ्गलीदर्भयोः सीरी प्रग्रहे जलवेतसे ।
व्याधिघातो लवंगं च श्रीगन्धे दिव्यचन्दने ॥ २४.२२
स्वादुकण्टकमाचख्युर्गोक्षुरे च विकङ्कते ।
वंशबीजे यवफलो वत्सके धान्यमार्कवे ॥ २४.२३
देवप्रियः अगस्त्यः स्याद्वचा श्वेतादिपिच्छरी ।
गोलोम्यां गृञ्जनं प्रोक्तं लशुने वृत्तमूलके ॥ २४.२४
कुङ्कुमे रामठे बाह्लिर्बलायामोदनी भवेत् ।
महासमङ्गा चैश्वर्यां जटामांस्यां जटा स्मृता ॥ २४.२५
कस्तूरी मृगनाभौ च धुस्तूरे परिकीर्तिता ।
हंसपाद्यां मुसल्यां च ख्याता गोधापदी बुधैः ॥ २४.२६
तपस्वी हिङ्गुपत्र्यां च प्रकीर्ये रौप्यमुक्तयोः ।
तारं स्यान्माषपर्ण्यां तु लिङ्ग्यां चाहुः स्वयम्भुवम् ॥ २४.२७
सहस्रवेधी कस्तूर्यां रामठेऽथाब्जकेसरे ।
पुंनागे तुङ्गमाचख्युस्त्रिवृद्धान्यविशेषयोः ॥ २४.२८
मसूरोऽप्यथ विश्वायां शुण्ठी प्रतिविषा तथा ।
श्रीगन्धं गन्धपाषाणे गन्धसारेऽथ पिच्छिले ॥ २४.२९
शाल्मलीशिंशपे वासाबृहत्यौ हिंस्रिकाभिधे ।
मर्कटस्त्वजमोदायां वनौकसि च विश्रुतः ॥ २४.३०
स्याल्लाङ्गली गुडूच्यां तु विशल्यामथ तेजिनी ।
तेजोवत्यां तु मूर्वायां चाङ्गेरीलोणशाकयोः ॥ २४.३१
लोणिका चापि पिण्याकं तिलकिट्टतुरुष्कयोः ।
बृहत्यां चैव वृन्ताके वार्त्ताकी च सदाफलम् ॥ २४.३२
उदुम्बरे बिल्ववृक्षे लज्जाखदिरवृक्षयोः ।
खदिरे चाथ सामुद्रं लवणे चाब्धिफेनके ॥ २४.३३
ग्रन्थिलो गोक्षुरे बिल्वे कटुका मीनपित्तयोः ।
मत्स्यपित्ताथ रजनी हरिद्रानीलिकाख्ययोः ॥ २४.३४
मिश्रेयके मुरल्यां च वातपत्त्रोऽथ मुस्तके ।
अब्दोऽभ्रके श्वेतपद्मे पुष्करं पुष्करे मतम् ॥ २४.३५
तुण्डिकेर्यां च कार्पासे तुण्डिका च प्रशस्यते ।
धुस्तूरे च विडे धूर्तः श्रीवेष्टे सूचिपत्त्रके ॥ २४.३६
वृक्षधूपो हिमांशौ स्यात्कर्पूरे च प्रकीर्तितः ।
जातीफलं तु शैलूषे श्रीफले च सितावरी ॥ २४.३७
सूचिपत्त्रे तु वाकुच्यां शर्करागण्डदूर्वयोः ।
मत्स्यण्डिका तु द्राक्षायां चराब्दे तापसप्रिया ॥ २४.३८
फञ्जी तु वोकडी चैव अजान्त्र्यां तु प्रचक्षते ।

अर्कावर्ते रवौ सूर्यः पेयं क्षीरे जले स्मृतम् ॥ २४.३९
कर्पूरे चुक्रके चन्द्रः क्षौद्रे ताप्ये च माक्षिकम् ।
मञ्जिष्ठा तगरे भण्डी तूच्चटा गुञ्जमुस्तयोः ॥ २४.४०
सुवर्चलं मातुलिङ्गे रुचके च सुवर्चला ।
अर्कावर्ते तु मण्डूक्यां ह्रीवेरपिचुमर्दयोः ॥ २४.४१
निम्बोऽथ सप्तलायां तु सप्तला नवमल्लिका ।
लाङ्गल्यां गजपिप्पल्यां ख्याता वह्निशिखा तथा ॥ २४.४२
ज्योतिष्मत्यां काकजङ्घा पारावतपदी तथा ।
दुरालभा यवासे च यासे च क्षुरको मतः ॥ २४.४३
गोक्षुरे कोकिलाक्षे च क्षुरे गोकण्टके क्षुरः ।
पुष्करं च पलाशे च क्षीरश्रेष्ठः प्रकीर्तितः ॥ २४.४४
सोमो धान्याभ्रके सोमे प्रिया मद्येऽङ्गनान्तरे ।
मुनिद्रुर्घण्टुकेऽगस्त्येऽथामृणालमुशीरके ॥ २४.४५
लामज्जके ब्रह्मवृक्षो रक्तागस्त्ये पलाशके ।
वटे प्लक्षे च शृङ्गी स्यात्कान्तारो वनवंशयोः ॥ २४.४६
भूतृणे धान्यके छत्त्रं मूलके शिग्रुमूलके ।
मूलकं च यमानी तु दीपिकाबस्तमोदयोः ॥ २४.४७
एलवालुककर्कट्योर्वालुकं क्षीरभूरुहम् ।
ताम्रं चोदुम्बरे चाथ भूर्जेन्द्रा श्रवणी तथा ॥ २४.४८
रीत्यां पुष्पाञ्जने रीतिः सचिवो मन्त्रिधूर्तयोः ।
चाणका मूलके मिश्रे शालयोऽथार्कसारिवे ॥ २४.४९
आस्फोतायां तु पर्जन्यो वृष्टिदारुहरिद्रयोः ।
लकुचं चुक्रवास्तूके लिकुचेऽथ गुणा मता ॥ २४.५०
दूर्वायां मांसरोहिण्यां सातला मांसरोहिणी ।
उभे चर्मकषायां तु नीवारे पिण्डकर्बुरे ॥ २४.५१
मुनिप्रियो वरायां तु गुडूची तु विडङ्गके ।
रसं तु पारदे बोले रसः पारदचर्मणोः ॥ २४.५२
भल्लूकः शुनके ऋक्षे पद्मिन्यां नलिनी त्विभी ।
किंशुके प्रवरौ ख्यातौ आरूके परिकीर्तिताः ॥ २४.५३
चित्रके मेथिकाबीजे ज्योतिष्कश्चाथ वार्षिके ।
त्रायमाणान्यपुष्ट्यां च मेथिकाचित्रमूलयोः ॥ २४.५४
वल्लरी चाथ कलभो धुस्तूरे च गजार्भके ।
त्रुटिनीलिकयोरेला शिखण्डी च मयूरके ॥ २४.५५
सुवर्णयूथिकायां च कारवे रुचके तथा ।
तत्प्रोक्तं कृष्णलवणं दाडिमे च कपित्थके ॥ २४.५६
स्मृतं कुचफलं शाकश्रेष्ठः कुष्माण्डके तथा ।
कलिङ्गे च स्मृतश्चाथ खगो वायौ च पक्षिणि ॥ २४.५७
धनुर्वक्षो धन्वनागे स स्याद्भल्लात इत्यपि ।
घेटुके खड्गशिम्ब्यां च पृथुशिम्ब्यथ चेतना ॥ २४.५८
पथ्यारुष्कस्तु निचुले अशोके वञ्जुलः स्मृतः ।
कपिकच्छवां त्वपामार्गे मर्कटी चान्यपक्षिणी ॥ २४.५९
भारद्वाजो भवेद्वन्यकार्पासे चाथ गुग्गुलौ ।
दहनागुरौ पुरं च प्रोक्ताथ जतुपत्त्रिका ॥ २४.६०
क्षुद्राश्मभेदे चाङ्गेर्यामतसी शालिपर्णिका ।
एकमूला तु कुम्भी स्यात्पाटलीद्रोणपुष्पयोः ॥ २४.६१

वाराही च हरिक्रान्ता विष्णुक्रान्ताभिधा मता ।
सारङ्गश्चातके रङ्कौ शङ्खो वारिभवे नखे ॥ २४.६२
मांसलं तु फले प्रोक्तं वृन्ताके तु कलिङ्गके ।
निष्पत्त्रिकायां वंशाग्रे करीरं संप्रकीर्तितम् ॥ २४.६३
माषपर्ण्यां तु गुञ्जायां काम्भोजी चाथ पूतना ।
गन्धमांस्यां हरीतक्यां चित्राङ्गं म्लेच्छतालयोः ॥ २४.६४
अङ्कोलके तु मदनं ख्यातं गन्धोत्कटे बुधैः ।
तिनिशे शिंशपायां तु भस्मगर्भः प्रकीर्तितः ॥ २४.६५
वाते मरुद्गदे चैव ख्यातो वैद्यैः समीरणः ।
क्षीरं दुग्धे तवक्षीरे क्षवथुः क्षुतकासयोः ॥ २४.६६
सितमन्दारके पुष्पविशेषे कुरवः स्मृतः ।
सुषवी कटुहुञ्च्यां च विश्रुता स्थूलजीरके ॥ २४.६७
कण्टकी खदिरे प्रोक्ता वृन्ताके चाथ नीलिका ।
सिन्दुवारे तु नीलिन्यां पिके चैवाथ कोकिला ॥ २४.६८
कोकिलाक्षे च गान्धार्यां पत्री स्यात्सा यवासके ।
चक्राङ्गी चैव रोहिण्यां मञ्जिष्ठायां प्रकीर्तिता ॥ २४.६९
मसूरा त्रिवृतायां च प्रोक्ता धान्यविशेषके ।
गिरिजं गैरिकं प्रोक्तं शिलाजतु प्रशस्यते ॥ २४.७०
चन्द्रिका चन्द्रकान्तौ च निर्गुण्ड्यां च प्रकीर्तिता ।
फञ्जी योजनबल्यां तु भार्ग्यां चैवाथ नीलिका ॥ २४.७१
मृगाक्षी श्रीफलीकायां मृगाक्षी धात्रिकाफलम् ।
ख्यातामृतफले चाथ श्यामेक्षुः कोकिलाक्षकः ॥ २४.७२
इक्षुरके वक्रशल्यां कटुबिम्बी प्रचक्षते ।
दन्त्यन्तरे विभाण्ड्यां च प्रख्याता कर्तरी बुधैः ॥ २४.७३
अभया च समाख्याता हरीतक्यमृणालयोः ।
जन्तुकायां जनन्यां तु भ्रामरी च भिषग्वरैः ॥ २४.७४
गोरसे रोचने गव्यं कार्पास्यां चव्यचव्यके ।
गोरोचना रोचनायां ख्याता स्याद्वंशरोचना ॥ २४.७५
ज्योतिष्मत्यां पक्षिभेदे पिङ्गला च प्रकीर्तिता ।
अमृते शालिपर्ण्यां तु सुधा च परिकीर्तिता ।
रसराजः समाख्यातः पारदे च रसाञ्जने ॥ २४.७६
वल्लीकरञ्जे सितपाटलायां कुबेरनेत्राथ जटादिमांस्याम् ।
मांसी रुदन्त्यां लवणे महीजे कान्तायसाश्मे तु हि रोमकाख्यम् ॥ २४.७७

राजनिघण्टु, Eकार्थादिवर्ग, त्र्यर्थाः
सितजे शतपत्त्रे च वासन्त्यां माधवी भवेत् ।
ज्योतिष्मत्यां किणिह्यां च सुपुष्प्यां कटभी स्मृता ॥ २५.१
पुनर्नवेन्द्रगोपौ तु वर्षाभूर्दर्दुराः स्मृताः ।
सुकुमारस्तु श्यामाके चम्पके क्षवके तथा ॥ २५.२
स्पृक्का तु सुकुमारायां नेपाली मालती स्मृता ।
महाबला गवाक्षी च गिरिकर्णी गवादनी ॥ २५.३
अरिष्टस्तक्रभेदे च निम्बे च लशुने तथा ।
कटुका वंशदूर्वास्तु शतपर्वा च किंशुकः ॥ २५.४
ज्योतिष्मत्यां पलाशे च नन्दीवृक्षेऽथ लाङ्गली ।

हलिन्यां गजपिप्पल्यां नारिकेले प्रशस्यते ॥ २५.५
कदम्बे मल्लिकाख्ये च शिरीषे वृत्तपुष्पकः ।
गिरिकर्णीन्द्रवारुण्यां पिण्डिन्यां च गवादनी ॥ २५.६
शिरीषे मधुके दन्त्यां मधुपुष्पं तु वञ्जुलः ।
अशोके चैव भेरिण्यां निचुले चाथ नाकुली ॥ २५.७
सर्पाक्ष्यां सितक्षुद्रायां यवतिक्तेऽथ दर्दुरः ।
भल्लातके ऋषभकेऽनडुहि च प्रशस्यते ॥ २५.८
मयूरके मेथिकायां चित्रके च भवेच्छिखी ।
कदल्यामजमोदायां गजे हस्तीति संज्ञका ॥ २५.९
अमोघा पद्मभेदे स्यात्पाटल्यां च विलङ्गके ।
कुल्माषः काञ्जिके वंशे गन्धमाल्यां सुविश्रुतः ॥ २५.१०
सामायां महिषीवल्लीब्राह्मीहेमन्तताः स्मृताः ।
वंशे स्यान्नारिकेले च ताले च तृणराजकः ॥ २५.११
मुस्तायामभ्रके मेघे घनश्चाथ पितृप्रियः ।
अगस्त्ये भृङ्गराजे च कालशाके च विश्रुतः ॥ २५.१२
दन्तशठस्तु चाङ्गेर्यां जम्बीरेऽथ कपित्थके ।
दहनोऽरुष्करे प्रोक्तो वृश्चिकाल्यां च चित्रके ॥ २५.१३
विडङ्गे च जयन्त्यां च मोटायां च बला स्मृता ।
आम्रातके शिरीषे च प्लक्षे चैव कपीतनः ॥ २५.१४
कुडुहुञ्च्यां कारवल्ली काण्डीरे चीरपद्मके ।
यवासे क्षुद्रखदिरे कार्पासे च मरुद्भवा ॥ २५.१५
समुद्रान्ता च स्पृक्कायां कार्पासे च यवासके ।
मण्डूकपर्णी मण्डूक्यां मञ्जिष्ठादित्यकान्तयोः ॥ २५.१६
ऋषभके तु वासायां बलीवर्दे वृषः स्मृतः ।
चाम्पेयं चम्पके प्रोक्तं किञ्जल्के नागकेसरे ॥ २५.१७
उशीरे च लवंगे च श्रीखण्डे वारिसम्भवः ।
पलितं शैलजे श्यामे शुभ्रकेशे च विश्रुतम् ॥ २५.१८
कुन्दुरुको धूपभेदे शल्लक्यां च तृणान्तरे ।
पृथ्वीकायां हिङ्गुपत्री स्थूलैला कलिका स्मृता ॥ २५.१९
शतपत्रो राजकीरे कमले पुष्पभेदके ।
न्यग्रोधस्त्वाखुपर्ण्यां च विषपर्ण्यां वटे स्मृतः ॥ २५.२०
क्षुद्राग्निमन्थे तर्कारी जीमूते चाग्निमन्थके ।
श्वेते रौप्ये च मीनाण्ड्यां सिता च परिकीर्तिता ॥ २५.२१
सोमवल्कस्तु रीठायां कदरे कृष्णगर्भके ।
शैलेयके शिलाह्वा च कुनट्यां च शिलाजतौ ॥ २५.२२
पाटलायां माषपर्ण्यां काश्मर्यां कृष्णवृन्तिका ।
जटामांस्यां च मांसे च लाक्षायां च पलं स्मृतम् ॥ २५.२३
समङ्गायां रक्तपादी मञ्जिष्ठा च बला स्मृता ।
भल्लातके बिल्यतरौ पार्थे वीरतरुः स्मृतः ॥ २५.२४
दुःस्पर्शायां कण्टकारी कपिकच्छुर्दुरालभा ।
वत्सादन्यां गुडूची च तार्क्ष्यी च गजपिप्पली ॥ २५.२५
आमण्डे पुष्करे कञ्जे पद्मपत्त्रं प्रचक्षते ।
कालेयकं तु दार्व्यां च कुङ्कुमे हरिचन्दने ॥ २५.२६
श्रीखण्डे चाजगन्धे स्याच्छ्रीवेष्टे तिलपर्णिका ।
लोध्रे पूगीफले चैव तूले च क्रमुकः स्मृतः ॥ २५.२७

पिप्पल्यां यूथिकायां च जीरके माधवी भवेत् ।
अजमोदा शताह्वायां मिशिश्चैव शतावरी ॥ २५.२८
त्रपुस्यां कर्कटी तौसी तथा स्याद्वनकर्कटी ।
कुस्तुम्बर्यां च भूधात्र्यां धान्यं व्रीह्यादिकं स्मृतम् ॥ २५.२९
त्रपुसी देवदाली च घोटिके शफले स्मृता ।
तण्डुल्यां यवतिक्ता च शशाण्डुल्यब्दनादयोः ॥ २५.३०
सुरदारुर्गन्धबध्वोश्चण्डायां गन्धमादिनी ।
श्यामेक्षुके क्षुरकेऽपि काकाक्षे कोकिलाक्षकः ॥ २५.३१
वराङ्गं मस्तके गुह्ये त्वचायां च प्रशस्यते ।
कर्ण्यां श्वेतकिणिह्यां च कटभ्यां गिरिकर्णिका ॥ २५.३२
पतङ्गोऽर्के मधूके च पट्टरञ्जनके तथा ।
द्राक्षा च शतवीर्यायां दूर्वा चैव शतावरी ॥ २५.३३
शुण्ठी प्रतिविषा चैव विश्वायां च शतावरी ।
जया हरिद्रा विजया जयन्त्यां च प्रशस्यते ॥ २५.३४
कच्छुरायां दुरालम्भा स्वयंगुप्ता यवासकः ।
पुण्ड्रेक्षौ चाथ गोधूमे रसाले च प्रचक्षते ॥ २५.३५
द्राक्षायां तु रसाला स्याद्वक्ष्यते च भिषग्वरैः ।
हैमवत्यां वचा श्वेतक्षीरिणी लोमशा स्मृता ॥ २५.३६
बिल्वे धात्रीफले चैव श्रीफलं चार्द्रचिक्कणे ।
जात्यां पक्षिविशेषे च कमलं सारसं स्मृतम् ।
तिलके च छिन्नरुहा सुषवी केतकी भवेत् ॥ २५.३७
वंशः सर्जद्रुमे वेणौ कुलाम्नाये च कीर्तितः ।
सलिले वत्सनाभे च व्याले चैव विषं स्मृतम् ॥ २५.३८
स्थूलकन्दो मुखालुः स्यात्शूरणं हस्तिकन्दकम् ।
आम्रातके पीतनकेऽप्यम्लिका च पलाशिका ॥ २५.३९
विषदोड्यां महानिम्बे मदने विषमुष्टिकः ।
तगरे कुङ्कुमे प्रोक्तो धुस्तूरे च शठः स्मृतः ॥ २५.४०
कपित्थः स्वर्णयूथ्यां च कुष्माण्डे नागपुष्पके ।
तिलके चातिमुक्ते च इक्षुभेदे च पुण्ड्रकः ॥ २५.४१
आखोटे वारुणी चैव गवाक्ष्यां चर्मवादिनी ।
तोयवल्ल्यां च कारण्डीरो महादुग्धामृतस्रवा ॥ २५.४२
पृथ्व्यां पुनर्नवा मेदा धारिणी च प्रशस्यते ।
मुचुकुन्दे जयापुष्पे गणेर्यां हरिवल्लभा ॥ २५.४३
कामुके लघुकाश्मर्यां कैडर्योऽन्यकरञ्जके ।
द्राक्षान्तरे शिखरिणी नेवाल्यां दधिभेदके ॥ २५.४४
कुटजेन्द्रयवौ प्रोक्तौ पुष्पकासीसवत्सके ।
क्षौद्रे मद्यान्तरे प्रोक्तो मधुयष्ट्यां मधुः स्मृतः ॥ २५.४५
चटके स्वरसे चैव नीलकण्ठो मयूरके ।
शोणितं कुङ्कुमे रक्ते रक्तगन्ध इति स्मृतम् ॥ २५.४६
तर्कारी देवदाल्यां च अरण्यां वह्निमण्डले ।
वसर्यां वृश्चिके चैव काकबन्ध्या सकृत्प्रजा ॥ २५.४७
कट्वङ्ग्यां च कटभ्यां च पटोल्यां दधिपुष्पिका ।
धुस्तूरे केसरे हेम्नि सुवर्णं सम्प्रचक्षते ॥ २५.४८
सुवर्णायां हरिद्रायां वारुणी कणगुग्गुलुः ।
वाराह्यां शिशुमार्यां च कन्दभेदे च शूकरी ॥ २५.४९

पलाण्ड्वन्तरे लसुने मूले चाणक्यसंज्ञके ।
महाकन्दः समाख्यातो वैद्यशास्त्रार्थकोविदैः ॥ २५.५०
लोहे च वनरम्भायां लघुपाषाणभेदके ।
त्रिष्वेतेषु च गिरिजा प्रोक्ता यत्र भिषग्वरैः ॥ २५.५१
जरणः कासमर्दे तु रामठे कृष्णजीरके ।
स शमं जायते तीक्ष्णं तगरे च प्रशस्यते ॥ २५.५२
दुरालभायां कपिकच्छुके स्यात्तथा शिखर्यां दुरभिग्रहा च ।
महासमङ्गा बहुपुत्रिका च सा सारिवा स्यात्फणिजिह्विकायाम् ॥ २५.५३

राजनिघण्टु, Eकार्थादिवर्ग, चतुरर्थाः
अम्लिकायां तु चाङ्गेर्यां मोचिका चाम्रचिञ्चके ।
वयःस्थायां च काकोल्यौ दार्वी च सोमवल्लरी ॥ २६.१
जन्तुकायां पुत्रदात्र्यां षट्पद्यां भ्रमरी त्वचौ ।
भ्रमरी चारको वैद्यशास्त्रमायुष्मते स्मृतः ॥ २६.२
अभया चिर्भिटा बन्ध्या कर्कोटी च मृगादनी ।
पथ्यायां संप्रवक्ष्यन्ते चतस्रश्च भिषग्वरैः ॥ २६.३
कुष्ठे कुन्दुरुके निम्बे राजके राजभद्रकः ।
कटके काचके लोहे तिलके गन्धभेदकः ॥ २६.४
मीनाख्यायां महाराष्ट्र्यां काकमाच्यां ततः परम् ।
ब्रह्ममण्डूकिकायां तु मत्स्याक्षी च प्रचक्षते ॥ २६.५
नक्तञ्चरः कौशिके स्याद्वल्गुजे दुण्डुभे पुरे ।
शिफाजगन्धाकारव्यौ मेथिका चाजमोदिका ॥ २६.६
पञ्चास्ये मर्कटे चाश्वे मण्डूके च हरिः स्मृतः ।
श्यामालङ्का त्रिपूटायां स्थूलैला वृत्तमल्लिका ॥ २६.७
लोहं च लोहजे कांस्ये कृष्णलोहे तथागुरौ ।
खर्जूर्यां नारिकेले च ताले वंशे दुरारुहा ॥ २६.८
शुण्ठीमरिचपिप्पल्यां कणामूले षडूषणम् ।
अग्निस्त्वरुष्करे जारे निम्बुके चित्रके तथा ॥ २६.९
भूताङ्कुशस्त्वपामार्गे सुकुमारश्च राजिका ।
त्वचे चाक्षबले चैव प्रोक्तस्तत्र भिषग्वरैः ॥ २६.१०
शमी हरिद्रा वृद्धिश्च लक्ष्मी स्यात्पद्मचारिणी ।
जम्बूकी सोममत्स्याक्षी क्रोडी ब्राह्मी च कीर्त्तिता ॥ २६.११
मार्कवे भ्रामरे भृङ्गस्त्वचे पक्षिविशेषके ।
रोचनं स्याद्दाडिमके जम्भे निम्बे च पूरके ॥ २६.१२
सिताब्जे दमने व्याघ्रे रुग्भेदे पुण्डरीककः ।
जलजं मौक्तिके शङ्खे लोणक्षारे लवंगके ॥ २६.१३
वन्ध्याकर्कोटकी चैव बृहत्यन्या च लक्ष्मणा ।
सुतदा पुत्रदायां तु चतस्रः परिकीर्तिताः ॥ २६.१४
उशीरं गृञ्जनं चैव मधुपुष्पं च वञ्जुलः ।
दीर्घपत्रे च केतक्यां कन्यायां दीर्घपत्त्रिका ॥ २६.१५
वासन्ते रुचके प्लक्षः कलिङ्गे देवसर्षपः ।
लामज्जके दीर्घमूलं यासे वेल्लन्तरे शठे ॥ २६.१६
तथा स्याच्छालिपर्ण्यां च दीर्घमूला स्मृता बुधैः ।
रामायां त्रायमाणायां कन्याशोकश्च सातला ॥ २६.१७

अमृतं वेदनक्षारे सुधायां च तथा विषे ।
वराहः शिशुमारे च वाराह्यां शूकरे घने ॥ २६.१८
वाराहे वञ्जुले कासे नादेयी जलवेतसे ।
शारदो बकुले राष्ट्र्यां सारिवाकृष्णमुद्गयोः ॥ २६.१९
कुब्जके वार्षिकायां च फलिन्यां योषिति प्रिया ।
काश्मीरं कुङ्कुमे देशे पौष्करे मृगनाभिजे ॥ २६.२०
केसरो बकुले हेम्नि किञ्जल्के च कसीसके ।
जम्बीरः स्यान्मरुवके गुच्छे चार्जुनयुग्मके ॥ २६.२१
वसुके वसुराजार्ककृष्णागुरुपुनर्नवाः ।
जपानृकन्दान्यक्षुद्रामुचुकुन्देषु लक्ष्मणा ॥ २६.२२
हर्षणे सारसे कामी चक्रे पारावते तथा ।
मूषके कुक्कुटे क्रौड्यां वृश्चिके च बहुप्रजः ॥ २६.२३
अजशृङ्गी च मञ्जिष्ठायुक्ता कर्कटशृङ्गिका ।
प्रतिविषासमायुक्ता शृङ्ग्यां चैव प्रशस्यते ॥ २६.२४
सुरसे तुलसी ब्राह्मी निर्गुण्डी कणगुग्गुलुः ।
चीनायां कारबल्यां च वचायां लवणे पटुः ॥ २६.२५
पाटल्यां श्यामकिणिही ताम्रवल्ली तथापरम् ।
जीवन्तिका ताम्रपुष्पी कथिताः शास्त्रकोविदैः ॥ २६.२६
हिङ्गुले कुङ्कुमे रक्तमस्रे चोक्तं च पद्मके ।
दुग्धी गोडुर्भूपलाशे काकोल्यां दुग्धफेनके ॥ २६.२७
मुसली स्वर्णुली चैव कण्टकारीन्द्रवारुणौ ।
आख्याता हेमपुष्प्यां च नानार्थज्ञविशारदैः ॥ २६.२८
निशायां चैव नीलिन्यां हरिद्रायामलक्तके ।
रजनीति समाख्याता आयुर्वेदेषु धीमता ॥ २६.२९

राजनिघण्टु, एकार्थादिवर्ग, पञ्चार्थाः
अजमोदाजगन्धा च शिखण्डी कोकिलाक्षकः ।
अपामार्गस्तु पञ्चैते मयूर इति शब्दिताः ॥ २७.१
कदली शाल्मली मोचा नीली शोभाञ्जनं तथा ।
पञ्चस्वेतेषु मोचाख्यां प्रयुञ्जन्ति भिषग्वराः ॥ २७.२
सुरभिः शल्लकी वोकं कदम्बश्चम्पकः सुरा ।
ययो दर्भो हरिद्रा च पवित्रे हिज्जलस्तिलः ॥ २७.३
यमानी जीरकश्चैव मोदाब्जा रक्तचित्रकः ।
निम्बुश्चेति च पञ्चैवं दीप्यकाः समुदाहृताः ॥ २७.४
कपिकच्छूः कोविदारः पन्नगः कृतमालकः ।
तथा छिन्नरुहा चेति कुण्डलीपञ्चकं स्मृतम् ॥ २७.५
शलाटुरग्निमन्थश्च क्षुद्राग्निमथनं तथा ।
काश्मीरी शिंशपा चैव श्रीपर्णी पञ्चधा स्मृता ॥ २७.६
महासमङ्गा वन्दाका जतुका चामृतस्रवा ।
महामेदा च पञ्चैता ज्ञेया वृक्षरुहा बुधैः ॥ २७.७
गोविशेषे मृगादन्यां शिंशपारेणुकाह्वयोः ।
रीत्यन्तरे च विबुधैः कपिला पञ्चसु स्मृता ॥ २७.८
कायस्थायां च काकोल्यौ पथ्यैला बहुमञ्जरी ।
व्यालस्तु चित्रकव्याघ्रसिंहदुष्टद्विपादिषु ॥ २७.९

वृन्ताके चान्यवारुण्यां क्षुद्रायां चिर्भिटाह्वये ।
लिङ्गिन्यां चेति पञ्चसु ज्ञेया चित्रफला बुधैः ॥ २७.१०
बर्बरो हिङ्गुले बाले भारङ्ग्यां हरिचन्दने ।
असिते चार्जके चैव कथितः शास्त्रकोविदैः ॥ २७.११
यमान्यामजमोदायां वचायां दीप्यके तथा ।
अरक्तलशुने चैव ह्युग्रगन्धा तु पञ्चसु ॥ २७.१२
महाबलायां सम्प्रोक्ता सहदेवी तु नीलिनी ।
वत्सादनी देवसहा पिप्पली पञ्चसु स्मृता ॥ २७.१३
ज्योतिष्मत्यां काकतुण्ड्यां काकमाच्यां तथैव च ।
वायसी काकजङ्घायां काक्यां चैव तु पञ्चधा ॥ २७.१४
लिङ्गिनी स्वर्णजीवन्ती रौद्री स्यान्नाकुली तथा ।
बन्ध्याकर्कोटकी चैव ईश्वर्या सम्प्रचक्षते ॥ २७.१५
वसन्तदूत्यां गणिकारिकाम्रवासन्तिकापाटलकोकिलाश्च ।
वत्सादनी वाकुचिका गुडूची सौमा समण्डूकिकसोमवल्ल्याम् ॥ २७.१६
चक्री नखान्तरे कोके दद्रुघ्ने तिनिशे खरे ।
सिन्धुजे तिलके धात्र्यां पारदे टङ्कणे शिवम् ॥ २७.१७
जाती सुरीरी कटुतुम्बिनी च छुछुन्दरी रेणुरसाजपुत्री ।
स्वर्णेऽप्यथो गुग्गुलुकेसराखुशठेषु धीराः कनकं वदन्ति ॥ २७.१८

राजनिघण्टु, एकार्थादिवर्ग, षडर्थाः
बृहद्बला वरी ताली कटुकातिविषा तथा ।
काकोली चैव षड्वर्गं वीरायां च प्रचक्षते ॥ २८.१
सातला क्षीरकाकोली विभाण्डी चाजशृङ्गिका ।
कुञ्जरो दर्दुरश्चैव षड्विषाणीति कीर्तिता ॥ २८.२
नीलदूर्वा निशाह्वश्च रोचना च हरीतकी ।
बहुपुष्पी भिषग्वर्यैः शिवायां षडमी स्मृताः ॥ २८.३
निम्बखर्जूरितालीसं मरिचं वृत्तमूलकम् ।
पलाण्डुश्चेति षडमी निम्बसंज्ञाः प्रकीर्तिताः ॥ २८.४
मूर्वा स्पृक्का सहदेवा देवद्रोणी च केसरम् ।
आदित्यभक्ताः षडिति देवीसंज्ञाः प्रकीर्तिताः ॥ २८.५
ब्राह्मणः क्षत्रियो वैश्यो दन्तः सर्पः खगस्तथा ।
द्विजद्विजन्मशब्दाभ्यामीरिताः सूरिभिः सदा ॥ २८.६
गवादनी चैव दूर्वा गण्डदूर्वा च हस्तिनी ।
प्रतीची मदिरा चेति वारुण्यां षट्सुसन्मताः ॥ २८.७
हपुषा पीतनिर्गुण्डी विष्णुक्रान्ता जयन्तिका ।
शितादिकर्णीशङ्खिन्यौ षडेता अपराजिताः ॥ २८.८
कुमारी च वराही च वन्ध्याकर्कोटकी मृदुः ।
स्थूलैला स्थलपर्णी च षट्कन्याश्च कुमारिकाः ॥ २८.९
बीजद्रुमे गजे चैव सीसके नागकेसरे ।
विषे च पन्नगे चैव षट्सूक्तो नाग इत्यपि ॥ २८.१०
सूक्ष्मैला च महाराष्ट्री मत्स्याक्षी काकमाचिका ।
गण्डदूर्वा च गण्डूकी मत्स्यादन्यां षडीरिताः ॥ २८.११
माणे कलिङ्गे कोशाम्रे शल्ये काके च धूर्तके ।
मदनश्च समाख्यातः षडमी समुदाहृताः ॥ २८.१२

दोडी गुडूची मेदा च काकोली हरिणी तथा ।
जीवन्ती चैव षट्प्रोक्ता जीवन्त्यां च भिषग्वरैः ॥ २८.१३
धूम्राटभृङ्ग्योः खलु मांसले च प्लक्षे शिरीषे कुटजे कुलिङ्गः ।
द्राक्षा च दूर्वा जरणा कणा च कृष्णाभिधा वाकुचिका कटुश्च ॥ २८.१४

राजनिघण्टु, एकार्थादिवर्ग, सप्तार्थाः
भद्रायां तु बला नीली दन्ती काश्मरी सारिवा ।
श्वेताद्रिकर्णी गौरी च सप्त प्रोक्ता भिषग्वरैः ॥ २९.१
मञ्जिष्ठा कटुका पथ्या काश्मरी चन्द्रवल्लभा ।
वन्दाको रजनी चैव रोहिण्यां सप्त च स्मृताः ॥ २९.२
धात्री बहुफलायां स्याच्छर्दिनी काकमाचिका ।
काम्भोजी च शशाण्डूली कटुहुञ्ची च वालुकी ॥ २९.३
मण्डूकी ब्रह्मजा शङ्खपुष्पी ज्योतिष्मती मुनिः ।
विष्णुक्रान्ता वचा श्वेता मेध्यायां सप्त संमताः ॥ २९.४
आखुकर्णी सुतश्रेणी इन्द्राह्वा च कलिङ्गकः ।
गण्डदूर्वा गवाक्षी च चित्रायामृक्षमेकतः ॥ २९.५
रास्ना पाठा प्रियङ्गुश्च सितक्षुद्रा हरीतकी ।
श्रेयस्यां चेति सम्प्रोक्ता अम्बष्ठा गजपिप्पली ॥ २९.६

राजनिघण्टु, एकार्थादिवर्ग, अष्टार्थाः
विजया काञ्चनद्वंद्वं मञ्जिष्ठा च वचा तथा ।
स्यात्तथा श्वेतनिर्गुण्डी जयन्ती काञ्जिकाभया ॥ ३०.१
एरण्डनद्याम्रलताकरञ्जाः स्याद्ब्रह्मदण्डी पनसः कुसुम्भः ।
स्याद्गोक्षुरः कण्टफले च धूर्तो भिषग्भिरष्टाविति सम्प्रदिष्टाः ॥ ३०.२
स्वर्णे कपिच्छे दधिनारिकेलयोः स्याज्जीवके चेत्स्थलपद्मके तथा ।
मयूरकेतौ समधूकके तथा माङ्गल्यमष्टाविति सम्प्रचक्षते ॥ ३०.३

राजनिघण्टु, एकार्थादिवर्ग, नवार्थाः
वातारिर्जतुकायां च भल्ल्यां नीलदवञ्जयोः ।
टेन्दुकामण्डयोर्भार्ग्यां निर्गुण्ड्यां शूराणे स्मृतः ॥ ३१.१
धात्री गुडूची रास्ना च द्विविधा दूर्वा हरीतकी ।
लिङ्गिनी तुवरी मद्यं धीमतायां नवौषधी ॥ ३१.२
ब्राह्मी वराही लशुनी विषं च शुक्लादिकन्दः सितकण्टकारी ।
भूम्याहुली चेदपराजिता च शुण्डीति चैतासु महौषधी स्यात् ॥ ३१.३

राजनिघण्टु, एकार्थादिवर्ग, दशार्थाः
सितायां वाकुची दूर्वा मद्यं धात्री कुटुम्बिनी ।
चन्द्रिका च प्रिया पिङ्गा त्रायमाणा च तेजिनी ॥ ३२.१

राजनिघण्टु, एकार्थादिवर्ग, एकादशार्थाः
स्यादभ्रमांसी तुलसी हरिद्रा तालं तथा रोचनहेमम् ।
जनप्रिया योजनवल्लिका स्यात्समल्लिका चन्द्रशशी च गौर्याम् ॥ ३३.१

दूर्वा निशा ऋद्धिवचा प्रिया च सा माषपर्णी शिमिरोचना त्वथ ।
त्रायन्तिका जीवनिका महाबला मङ्गल्यकायामिति चन्द्रमाह्वयाः ॥ ३३.२
प्रियङ्गुछिन्ना त्रिवृता कणाह्वया वन्दाकदूर्वा तुलसी च नीलिनी ।
दुर्गा खगः कस्तुरिकृष्णसारिवा श्यामा महीन्दुः कथिता भिषग्वरैः ॥ ३३.३
इत्थं विचिन्त्य विनिवेशिततत्तदेकानेकार्थनामगणसंग्रहपूर्णमेनम् ।
वर्गं विचार्य भिषजा बहुभक्तिभाजा ज्ञेया स्वयं प्रकरणानुगुणाः प्रयोगाः ॥ ३३.४
एको यश्च मनस्विनामचतुरो यश्च द्वयोरश्विनो स्त्र्यक्षाच्चाचतुरो नृपञ्चवदनो नाम्नारिषण्णां जयी ।
एकार्थादिरमुष्य नामरचनाचूडामणौ यस्त्रयोविंशोऽसौ समपूरि सार्धममुना ग्रन्थेन वर्गो महान् ॥ ३३.५